श्रीमज्जैमिनिमुनिप्रणीतं

# मीमांसादर्शनम्

तत्र

श्रीकुमारिलभट्ट-विरचितम्

## मीमांसाश्लोकवार्तिकम्

तच्च

शाबरभाष्येण, [illegible]व्याख्यया टिप्पण्या च सवलितम्

(प्रथमः खण्डः)

सम्पादकः

मुसलगाँवकरोपनामा-डॉ. गजानन शास्त्री

एम. ए., पी एच. डी.

श्रीमज्जैमिनिमुनिप्रणीतं

# मीमांसादर्शनम्

तत्र

श्रीकुमारिलभट्ट-विरचितम्

## मीमांसाश्लोकवार्तिकम्

तच्च

शाबरभाष्येण, न्यायरत्नाकरव्याख्यया टिप्पण्णा च संवलितम्

(प्रथमः खण्डः)



सम्पादकः

मुसलगाँवकरोपनामा-डॉ. गजाननशास्त्री

एम. ए., पी-एच. डी.

मीमांसा-वेदान्त-साहित्याचार्यः

काशी हिन्दु विश्वविद्यालयीय—मीमांसा-धर्मशास्त्रविभागस्य

भूतपूर्वाध्यक्षः

भूमिका-लेखकाः

पूज्यचरणा गुरुवराः

विद्यासागरा मीमांसा-केसरिणः पण्डितप्रवराः श्री पट्टाभिरामशास्त्रिपादाः

भारतीय विद्या प्रकाशन

वाराणसी दिल्ली

(भारत)

प्रकाशक :
भारतीय विद्या प्रकाशन
१. पो० बा० नं० १०८, कचौड़ीगली, वाराणसी–२२१००१
२. १ यू० बी०, जवाहर नगर, बंग्लोरोड, दिल्ली–११०००७

प्रथम संस्करण—अगस्त, १९७९
मूल्य रु० ५०.००

मुद्रक :
वाराणसी मुद्रण संस्थान
डी० ५१/४०, सूर्यकुण्ड, वाराणसी–१

# MĪMĀṀSĀ DARŚANA

## Ślokavārttika

OF

Kumārilabhaṭṭa

WITH

Śābarabhāṣya, the Comn. Nyāyaratnākara

and Notes

(Vol. I)



*Edited by*

**Dr. Gajānana Śastrī Musalgaonkar**
M.A., Ph. D.

Ex. Head, Department of Mīmāṁsā-Dharmaśastra
B. H. U., Varanasi

*with an Introduction by*

**Pt. Paṭṭābhirāma Śastrī**

**BHARATIYA VIDYA PRAKASHAN**
VARANASI DELHI
*(INDIA)*

# प्रास्ताविकम्

॥ श्रीगुरुः शरणम् ॥

लोकशङ्करस्य भगवतः शङ्करस्याऽनुपमयाऽनुकम्पयाऽस्मदाराध्यचरणानां ब्रह्मसारूप्यमासेदुषां श्रीगुरुचरणानां श्रीपितृचरणानाञ्चाशिषा श्रीमज्जैमिनिमुनिप्रणीतस्य पूर्वमीमांसादर्शनस्यानुमानपरिच्छेदान्तं भागं संशोध्य मुद्राप्य चकासयित्वा च चिरकालाच्चातकवत्प्रतीक्षमाणानां शास्त्ररसिकानामधिपाणिपल्लवमुपस्थापयतो मे मनः परमां मुदमधिगच्छति ।

पूर्वमीमांसाशास्त्रस्य सडिण्डिमघोषं दार्शनिकत्वं प्रख्यापयत् कौमारिलं श्लोकवार्तिकमेवास्तीति न तिरोहितं विदुषाम् । व्याख्यानमन्तरेण तस्य च साकल्येनावगमो न सुकरः सर्वेषामित्यपि विदितचरमेव विपश्चिदपश्चिमानाम् ।

अस्मिन् श्लोकवार्तिकेऽद्ययावत् प्रकाशितास्तिस्रो व्याख्यास्तासु च न्यायरत्नाकरनाम्नी व्याख्यैव सम्पूर्णा १८९२ ईशवीये वत्सरे मुद्रिताऽभूत् । परं नातिचिरेण चाहमहमिकया तूर्णं विद्यारसिकै ग्राहकैर्गृह्यमाणा सा कथाशेषतामशिश्रियत् ।

विद्वत्समाजे सव्याख्यस्यास्यग्रन्थस्य दिदृक्षा पुनर्बलवती समजायत । देश-विदेशेष्वपि विपश्चिताम्मतिर्ज्ञानपिपासया पर्याकुला सन्त्रस्यमाना चकोरायतेस्म । तदा ग्रन्थरत्नस्यास्य प्रचिकाशयिषया विद्वन्मनःप्रसिषत्सया च भारतीयविद्याप्रकाशनसंस्थानाधिपतिः श्री किशोरचन्द्रजैनमहाशयः पुनरत्र विषमस्थलपरिष्करणपूर्वकसम्पादननिमित्तं मां भूयोभूयः प्रार्थयत ।

तदीयस्नेहसंवलिताम्प्रार्थनामुररीकृत्य ग्रन्थस्य सर्वाङ्गपूर्णतासम्पिपादयिषया सुनिर्धारितमतिरहं ग्रन्थोपलब्धये परिचितानां कतिचन विदुषां गेहं गेहं पर्यटिषम् । प्रायो-वितथपरिश्रमः सन् मनसि सुतरां विषण्णतामप्यन्वभूवम् । सव्याख्यस्यास्य सम्पूर्णग्रन्थस्य लिप्सया भक्तवत्सलमार्तिहरमभीष्टदं भगवन्तं विश्वनाथम्प्रत्यहं प्रतिक्षणमस्ताविषम् । तत एकदा वार्ताप्रसङ्गेन कविकुलभुवं कविवरं सहृदय—सुहृद्वरं तैलङ्गोपाह्वं श्रीजगन्नाथशास्त्रिणं ग्रन्थमेनमयाचिषम् । सपद्येव मदभिलषितग्रन्थमर्पयन्मामन्वग्रहीत् स सुहृद्वरः । ततश्च सफलमनोरथतया सोत्साहोऽहं ग्रन्थसम्पादनकार्ये तत्परः समभवम् ।

१९७२ ईशवीये वर्षेऽस्यग्रन्थस्य मुद्रणमप्यारभत, दशसंख्याकानि फर्माख्यानि १६० पृष्ठानि मुद्रितान्यभूवन् किन्तु व्यापारदृष्टिप्रवणप्रवीणस्य प्रकाशकस्यौदासीन्यमस्य मुद्रणमरौत्सीत् । तथापि प्रकाशकमहोदयो मदुत्साहरिरक्षिषया समये समये मृषा मधुरवचचोनिचयै र्मां सर्वथा समाश्वासयत् । तदनुसारेणाऽद्य १९७९ ईशवीयस्य जुलाईमासेऽनुमानपरिच्छेदान्तं प्रथमभागं मुद्रापयित्वा प्रकाश्य च विद्वज्जनसमक्षं स समुपस्थापयन्नस्तीति समेषां धन्यवादार्हः प्रकाशकमहाभाग इत्यहमभिप्रैमि ।

प्रकाशकस्यौदासीन्यकाल एव विद्वत्कुललब्धप्रतिष्ठैः श्रीद्वारकादासशास्त्रिमहाभागैः सव्याख्यं सम्पूर्णं श्लोकवार्तिकं समपादि । तेन पुस्तकस्य दौर्लभ्यं सुदूरं गतमिति धन्यवादार्हाः शास्त्रिमहाभागाः ।

अस्मत्सम्पादिते श्लोकवार्तिके मूलभूतानि सूत्राणि ततश्च तत्सम्बद्धं भाष्यमुपस्थाप्य तावदेवापेक्षितं व्याख्यानभूतं श्लोकवार्तिकं, ततश्च तावदेव तद्व्याख्यानं न्यायरत्नाकराख्यं सन्निवेशितमस्ति। प्रायो—विषमस्थलेषु प्रामाणिकी टिप्पणी योजिता वर्तते। अभूत-पूर्वा विशिष्टा च विषयसूची संलग्ना विद्यते। विशेषतश्च करतलामलकवन्मीमांसातत्त्वा-नामस्मन्मीमांसागुरुचरणानां भूमिकाऽऽभरणेन विभूषितमिदं संस्करणं कामपि शोभां वेभ्रीयते। अस्य सम्पादनकाले पुस्तकप्रदानेन साहाय्यमाचरितवत्सु धन्यवादार्हेषु विद्वत्सु ये सन्ति, तेषां पुण्यनामधेयानि—१. श्रीमन्तः पं० प्र० जगन्नाथशास्त्रितैलङ्गाः साहि-त्याचार्याः, वाराणसी। २. श्रीमन्तः पं० प्र० बलदेवोपाध्यायाः साहित्याचार्याः, वाराणसी। ३. श्रीमन्तः पं० प्र० मार्कण्डेयब्रह्मचारिणः वाराणसी। ४. श्रीमन्तः पं० प्र० वंशीधरशास्त्रिणः, इन्दौर। ५. श्रीमन्तः पं० प्र० मोतीलालशास्त्रिणः, इन्दौर। ६. श्रीमन्तः पं० प्र० वासुदेवशास्त्रिणः, काशी। ७. श्रीमन्तः पं० प्र० कारखेडकर-शास्त्रिणः, ग्वालियर। ८. श्रीमन्तः पं० प्र व्रजवल्लभद्विवेदिनः, वाराणसी।

एतैरुदारचरितैं विद्वद्भिः स्व-स्वपुस्तकसंग्रहे यथास्थितं पुस्तकम्प्रदाय मम महत्सा-हाय्यमाचरितमिति तेभ्यो हार्दिकान् धन्यवादान् वितेतीर्ये। नहि तत्र सर्वाण्यपि पुस्तकान्य-विकलानि आसन्। कानिचित् कृमिदष्टानि, विदीर्णानि, कानिचित् अपूर्णानि, कानिचिद-स्पष्टाक्षराण्यभूवन्, तथापि तेभ्यः सर्वेभ्य एव किञ्चित् किञ्चित् साहाय्यमवाप्तवानस्मि।

अनन्तरं यैर्ममाप्तभूतैर्हितवादिभिर्मत्प्रियैश्छात्रैर्विद्यावंशीयैः, कुलजैश्चपुत्रैः कन्याभिश्च मनोयोगपूर्वकं परिश्रमं च सोढ्वा यत्साहाय्यमाचरितं, तेषां शुभनामधेयानि—

१. श्री सोमनाथ नेने एम. ए. शोधछात्रः। २. कमलनयनशर्मा, एम. ए. पीएच-डी, मीमांसा-व्याकरण-न्यायाचार्यः। ३. डॉ० (कु०) विमला कर्णाटक, एम. ए. मीमांसाचार्या प्राध्यापिका, आर्ट्सकालेज, का० हि० वि० वि० वाराणसी। ४. डॉ. (कु.) वाराणसी लढ्ढा एम. ए. पी. एच. डी.। ५. श्रीरामशास्त्रि-मुसलगांवकरः एम ए.। ६. श्री जयरामशास्त्रिणः बी. एफ. ए.। ७. श्री गोविन्द-शास्त्रिणः एम. एफ. ए.। ८. श्यामशास्त्रिमुसलगांवकरः एम ए.। ९. शेखर-शास्त्रिमुसलगांवकरः एम. ए.। १०. श्रीकृष्णशास्त्रिमुसलगांवकरः एम. ए.। ११. श्रीसखारामशास्त्रिकारखेडकरः एम. ए. धर्मशास्त्राचार्यः। १२. श्रीदामोदर-शास्त्रि मुसलगांवकरः। १३. कु० मीना मुसलगांवकर एम-ए., १४. कु० भारती-मुसलगांवकर बी. ए., १५. सौ० जया मुसलगांवकर एम. ए. १६. सौ० मेधा मुसलगांवकर बी. ए.।

एतेषां सर्वेषां यथासमयं यदि साहाय्यं न स्यात् तदास्य सम्पादनमेव दुःशकम-भविष्यदिति मन्यामहे। अतः सर्वेभ्य एभ्य आशीर्वादान् वितीर्य तदभ्युदयं चङ्कम्यामहे।

सर्वेषामभ्युदयमीहमानो

दि० २५-७-७९ * गजाननशास्त्रिमुसलगांवकरः

# भूमिका

आसीत्कश्चन मनोहरः कालः यत्र तेषु तेष्वाश्रमपदेषु आहिताग्नय। श्रोत्रियाः श्रौतानि स्मार्तानि चोच्चावचं कर्माणि यथायथं समाचरन्तः वेदवाक्यार्थांश्च विचारयन्तः तत्र समापततस्संशयान् तदा तदा समायोज्यमानासु गोष्ठीषु विचार्यापाकुर्वन्तः सम्प्रदायेन तत्परिरक्षन्तश्च सुखेन कालमनैषुः। कालोऽयं केन कदा प्रवर्तित इति निश्चित्य वक्तुमशक्यः। अध्ययनाध्यापनसम्प्रदायोऽयमति चिरन्तनः। मनुष्यबुद्धेरगोचरः खल्वयं सम्प्रदायः। वेदाध्ययनसम्प्रदायः तदर्थविचारसरणिश्चामुकादेव कालात्प्रावर्ततेति कथनं गजस्य कौपीनधारणमिव। वेदवाक्यार्थनिर्णयाय प्रवृत्तो मीमांसासम्प्रदायोऽप्यनादिरेव। महर्षीणां गोष्ठीषु विचार्य निर्णीता एव पदार्था जैमिनिना सूत्ररूपेण सन्दृब्धाः। सूत्रात्मना प्रवृत्ताया मीमांसायाः पूर्वमपि भारते कर्मानुष्ठानपरम्परा वेदाध्ययनसम्प्रदायो वेदार्थविचारश्चासीदित्यत्र स्वाध्यायाध्ययनविधिरेव प्रमाणम्। एवं सम्प्रदायतः प्रवृत्तायामपि मीमांसायां लोकेषु स्मरणशक्ति दिने दिने ह्रासोन्मुखीमवगत्य जैमिनिर्महर्षिः शास्त्रविदां तपोधनानां गोष्ठीषु निर्णीतान् द्वादशभिरध्यायैस्सूत्रात्मना जग्रन्थ। सूचनात्खलु सूत्राणि भवन्ति। विवरणसापेक्षाणि तानीति श्रीशबरस्वामी तेषां भाष्यमभाषिष्ट। भाष्यमिदं प्रसन्नगम्भीरं नानाशास्त्रोक्तपदार्थतत्त्वविवेचकं निगूढतत्त्वावेदकं नैकविधन्यायोपदेशकमिति न तिरोहितं तदध्येतॄणां तदध्यापकानाञ्च। तदिदं भाष्यं त्रेधा विभज्य भट्टपादाः तर्कपादान्तभाष्यस्य श्लोकवार्तिकमिति, तृतीयाध्यायान्तस्य तन्त्रवार्तिकमिति, तदुपरि द्वादशाध्यायान्तस्य टुप्टीकेति च त्रिविधानि वार्तिकानि प्राणैषुः। वार्तिकग्रन्थस्य विविधाष्टीकास्तैस्तैर्मनीषिभिस्सूरिभिर्विरचितास्समुपलभ्यन्ते। तासु काश्चन प्रकाशिता, अप्रकाशिताश्च कतिपये। तत्र श्लोकवार्तिकं विना भाष्यग्रन्थेन टीकया सह मुद्रितम्, भाष्येणसह तन्त्रवार्तिकटुप्टीके पुण्यपत्तनात्प्रकाशिते। तन्त्रवार्तिकं केवलं भाष्येण विना प्रकाशितमस्ति। विना भाष्येण टुप्टीका तन्त्ररत्नेन सह प्रकाशिता समुपलभ्यते। एवं भाष्यवार्तिकयोः प्रकाशने विविधता समुपलभ्यते।

विविधतामिमां दूरीकृत्य मत्प्रियशिष्येण सहृदयेन मुसलगांवकरोपाह्वेन मीमांसाचार्येण डा० गजाननशास्त्रिणा भाष्यं, वार्तिकं, तट्टीकेति समूहीकृत्य प्रकाशनाय समारब्धमिति नितरां प्रसीदामि। तत्रायं भागोऽनुमानखण्डान्तः। अत्र भाष्यं, श्लोकवार्तिकं, तट्टीका न्यायरत्नाकरश्च सन्ति प्रकाशितानि। न्यायरत्नाकरसहितश्लोकवार्तिकेन भाष्यकाराशयस्सुस्पष्टं ज्ञातुं शक्यत इति सम्पादकस्य ममापि चाशयः। तत्रापि श्लोकवार्तिकस्य बह्व्यःसन्ति टीकाः। सर्वासां तासां प्रकाशनमेकत्रासम्भवमिति न्यायरत्नाकरमानुपूर्व्या

प्रकाश्य काशिकादिटीकान्तराणां विषयान् सङ्गृह्य टिप्पण्यां सन्निवेशितवानिति सम्पादकस्य प्रयासमभिनन्दामि ।

अनुमानान्तभागस्यास्य विषयविवेचनं किञ्चिदिव प्रस्तोतुमभिलषामि । चिरन्तनै-र्भाष्यलक्षणमभिहितम्—

सूत्रार्थो वर्ण्यते यत्र वाक्यैस्सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ इति ।

'अथातो धर्मजिज्ञासा' इति शास्त्रारम्भसूत्रं विवृण्वानो भाष्यकारशबरस्वामी 'लोके येष्वर्थेषु' इत्याद्यारभते । इममुपक्रमभाष्यं व्याचक्षाणा भट्टपादा अस्य षडर्थान् कल्पयामासुः—सर्वव्याख्या, उपालम्भः, प्रत्याख्यानम्, परिसंख्या, स्तुतिः, अथशब्दस्य-दूषणमिति । आदितः पञ्चार्था मतभेदेन, षष्ठश्च स्वाभिमतः । सूत्रादौ प्रयुक्तस्याथ-शब्दस्य लोक आनन्तर्यमर्थः प्रसिद्धः, किन्तु सोऽर्थोऽत्र न भवितुमर्हति, पूर्ववृत्तस्य कस्यचन पदार्थस्यासत्त्वात् । तथाचोक्तं भाष्यकारेण "न चेह किञ्चिद्वृत्तमुपलभामहे" इति । अतो-ऽथशब्दप्रयोगः सूत्रकारस्यानुचित इत्याशङ्क्य तत्समाधानं भाष्यकार आह—'भवितव्यन्तु तेन यस्मिन् सत्यनन्तरं धर्मजिज्ञासावकल्पते । तथाहि प्रसिद्धार्थकःस कल्पितो भवति । तत्तु वेदाध्ययनम्, तस्मिन् हि सति सावकल्पते' इति । धर्मस्वरूपं वेदैकसमधिगम्यम् । स च वेदोऽध्ययनव्यापारात्प्राप्तव्यः । अध्ययनञ्च गुरुमुखोच्चारणानूच्चारणरूपमभिप्रेतम्, न पुस्तकपठनमात्रम् । यश्च वेदो धर्मावबोधायैव प्रवृत्तः तस्य विनाध्ययनेन धर्मविचारः कथङ्कारं कर्तुं शक्यइति वेदाध्ययनं वृत्तम् । तस्य वृत्तत्वाद्धेतोः धर्मजिज्ञासा-धर्मविचारः क्रियत इति सूत्रार्थस्सङ्गतो भवति । एतेन शास्त्रस्यास्य स्वाध्यायाध्ययनविधिप्रयुक्तत्वं साधितं भवति । एवं सिद्धे प्रथमं वेदाध्ययनम्, अनतन्तरञ्च तदर्थविचार इति सिध्यति । तच्च प्राथम्यं वेदाध्ययनस्य कस्मात्कालादारभ्येति विचिकित्सायां न केनापि स कालो निश्चप्रचतयावधारयितुं शक्य इत्यकामेनाप्यङ्गीकर्तव्यम् । तथाहि—

प्रथमाध्ययननिर्द्धारणाय वेदस्य पुरुषनिर्मितत्वं साधनीयम् । न हि कालिदासा-त्पूर्वं रघुवंशकाव्यस्य शाकुन्तलनाटकस्य वा कश्चनाध्ययनं कृतवान् स्यात् । तथैव वेदस्यापि निर्मातर्यवधृते तदध्ययनकालो निश्चेतुं शक्यः । कालिदासस्य रघुवंशादेः प्रणेतृत्वं सुसाधम् । कालिदासेन या आनुपूर्वी सङ्घटिता तत्समानानुपूर्वीनिरपेक्षता तस्या-आसीत् । न हि प्राग्विद्यमानामानुर्वीमेव काव्यतया संघटयन् कालिदासः स्वनिर्मितत्वं कथयेत् । अतस्तत्कर्तृकत्वसिद्धये स्वोच्चारणसजातीयोच्चारणनिरपेक्षत्वं स्वीकार्यम् । तथा वेदस्य न भवितुमर्हति ।

'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥'

इति मन्त्रं परिगृह्य विलोकयामः—'अर्थं बुद्ध्वा शब्दरचना' इति हि न्यायः। कालिदासःशब्दरचनातः पूर्वमर्थमवबुध्यैव शब्दान् रचयामासेति निश्चितमिदम्। मन्त्रस्यास्य रचयिता अग्नेः पुरोहितत्वं देवत्वं ऋत्विक्त्वञ्चेत्यादिकं क्व ददर्श? कमालोच्य कस्मै प्रयोजनाय मन्त्रमिममलिखत्? 'ई ३ॆ' इति शब्दो रचयित्रा क्व श्रुतः? अग्नेर्देवत्वमनेन क्वोपलक्षितम्? देवत्वञ्च विधिगम्यं भवति, न देवशब्दो जातिप्रवृत्ति-निमित्तकः, येन लोकादवगन्तुं शक्यते। अग्नेर्होतृत्वं देवताह्वानहेतुकम्। तदस्यानुभवो रचयितुः क्व जातः? अग्नेः रत्नधातमत्वं नरेण सता रचयित्रा कथं ज्ञातम्? यस्य गुणा न विज्ञाताः, तैः स्तुतिः कथं नाम भवेत्? 'इषे त्वा' 'ऊर्जे त्वा' इति मन्त्राभ्यां शाखाच्छेदनं शाखानुमार्जनञ्च भवतः। तदिदं पुरुषः कस्मादवगत्य 'इषे त्वेति छिनत्ति' 'ऊर्जेत्वेत्यनुमार्ष्टि' इत्यलिखत्। अग्न आयाहि वीतये' इति ऋचः सामवेदे 'ओग्नाई' इति, 'वीतये' इत्यत्रेकारस्य विक्रिया, 'त' इत्यस्य 'तो' इति, 'ये' इत्यस्य 'आई' इति च गानं को वा बुद्धिपूर्वकारी अकरोत्? किमर्थञ्च तथा ऽकरोत्? इत्यादीनां सहस्रशः प्रश्नानां किमुत्तरं स्याद्यदि वेदानां रचयिता पुरुषो भवेत्। अत्र *तन्त्रवार्तिकपद्या-न्यनुसन्धेयानि। अत एवमादिभिरुदाहरणै र्वेदस्य स्वतन्त्रत्वं स्वरूपादेवा ऽवगन्तव्यम्। एवञ्च यदध्येतारोऽध्यापयितारः पार्श्वस्था वा वेदपदवाक्यतदर्थरूपाण्यालोचयन्ति तदा स्वसंवेद्यमेवाऽपौरुषेयत्वमध्यवस्यन्ति।

किञ्च वेदेषु पुरुषसंबन्धः त्रेधा भवितुमर्हति—पदपदार्थसम्बन्धकर्तृद्वारा, शब्दकर्तृद्वारा ग्रन्थस्यैव वा निर्माणद्वारा। तत्रौत्पत्तिकसूत्रेण पदपदार्थसम्बन्धनित्यत्वप्रतिपादनात् पुरुषसम्बन्धोऽनुपपन्नः। अस्मिन् सन्दर्भे भाष्यकारा लिखन्ति—'न हि सम्बन्ध-व्यतिरिक्तः कश्चित्कालोऽस्ति, यस्मिन्न कश्चिदपि शब्दः केनचेदर्थेन सम्बद्ध आसीत्। कथम्? सम्बन्धक्रियैव नोपपद्यते। अवश्यमनेन सम्बन्धं कुर्वता केनचिच्छब्देन कर्तव्यः। येन क्रियेत तस्य केन कृतः?......................................। तस्मादवश्यमनेन सम्बन्धं कुर्वताऽकृतसम्बन्धाः केचीन शब्दा वृद्धव्यवहारसिद्धा अभ्युपगन्तव्याः' इति। शब्दार्थयोः सम्बन्धः कृतक इति स्वीकारपक्षेऽपि अकृतसम्बन्धाः केचन शब्दाः स्वीकर्तव्या भवन्ति शब्दार्थयोःसम्बन्धो न संयोगादिर्भवितुमर्हति। सम्बन्धस्त्वनयोः प्रत्याय्य-प्रत्यायकभाव एवैष्टव्यः, घटशब्दः कम्बुग्रीवादिमतः पदार्थस्य प्रत्यायक इति। येऽमी प्रत्याय्यप्रत्यायकौपयिकाः शब्दाः तेषामर्थप्रत्यायनाय सम्बन्धोऽन्यैः कर्तव्य इत्यन-वस्थायाः परिहाराय केचन वृद्धव्यवहारसिद्धाश्शब्दा अकृतसम्बन्धाः सम्बन्धकरणाया-भ्युपगन्तव्याः। एवञ्च वृद्धव्यवहारसिद्धौ सत्यां तेनैव व्यवहारेण सर्वासामनुपपत्तीनां परिहारः। अस्यां दशायां सम्बन्धकर्तुः किं प्रयोजनमिति भावः। शब्दनित्यत्वाधिकरणे

---

* तन्त्र वा० पृ० २३७. पूना संस्करणम्।

शब्दनित्यत्वं सूत्रभाष्यवार्तिकेषु भूयसीभिर्युक्तिभिस्साधितमिति शब्दकर्तृद्वारापि पुरुषानुप्रवेशो न भवितुमर्हति । पुरुषानुप्रवेशस्य तृतीयः प्रकारः प्रागेव निरस्तः ।

मीमांसानिकेतनस्याधारशिलारूपोऽयंवादः—यद्वेदे केनापि प्रकारेण पुरुषानुप्रवेशाऽभावाख्यः । आधारशिलायां दृढायां सत्यां तदुपरि बहुतलप्रासादनिर्माणं सुकरमिति लौकिकः पन्थाः । एवं वेदे पुरुषानुप्रवेशनिराकरणेनाऽपौरुषेयत्वे स्वीक्रियमाणेपि शब्दप्रामाण्यहेतुभूताप्तोच्चरितत्वाभावेन वेदस्य प्रामाण्यं दुर्लभमिति शङ्काया अस्त्यवसरः । तेन चाधारशिलायाः कम्पे जायमाने दार्ढ्याभावेन मीमांसानिकेतनं कथं निर्मीयतामित्यतो द्वितीयसूत्रं व्याचक्षाणा भाष्यकाराः भाष्यं विवृण्वाना वार्तिककाराश्च प्रामाण्यवादं परिष्कृतवन्तः । शब्दैकसमधिगम्यो धर्मः, नेन्द्रियादिसमधिगम्य इति निरूप्यानन्तरम् 'नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना, यथा यत्किञ्चन लौकिकं वचनं नद्यास्तीरे फलानि सन्तीति, तत्तथ्यमपि भवति, वितथमपि भवति' इति चोद्यमुपस्थाप्य भाष्यं समाधानपरं प्रवृत्तम्—'विप्रतिषिद्धमिदमुच्यते—ब्रवीति वितथञ्चेति ।..........................
तस्मादवितथः' इति । अस्य परिहारभाष्यस्य विवरणप्रसङ्गे भट्टपादाः—

स्वतस्सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।
न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते' ॥ श्लो.वा. १।१।२।४७।४६ पृ.

इत्यादिना प्रामाण्यस्य स्वतस्त्वं प्रसाधितवन्तः । ज्ञानगतं प्रामाण्यं स्वतो निश्चितं यदि न स्यात्तर्हि प्रपञ्चे निश्चयात्यन्ताभाव एव स्यादित्यान्ध्यमेव प्रपञ्चस्य प्रसज्येत । न हि स्वतोऽनिश्चीयमानोऽर्थः परतो निश्चेतुं शक्यते, परस्यापि तथाविधसामर्थ्यात् । अतो यत्र क्वापि गत्वा स्वतो ग्राह्यत्वमङ्गीकार्यम् । तच्चोत्सर्गतः सर्वज्ञानानां प्रथमत एवाङ्गीकरणं वरम् । स्वतो ग्राह्यत्वञ्च प्राथमिकज्ञानग्रहग्राह्यत्वम् । अर्थात् तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वम् । अत्र भाट्ट-प्राभाकरयोः प्रक्रियायामयं भेदः—भाट्टमते ज्ञानग्राहकसामग्रीपदेन परामर्शघटितसामग्रीपरिग्रहः कर्तव्यः । ते हि इन्द्रियसंनिकर्षादिना 'अयं घट' इत्यादिज्ञाने जाते ज्ञाततानामकं कञ्चन पदार्थं सविषयमुत्पद्यमानं स्वीकृत्य तल्लिङ्गकानुमित्या प्रामाण्यं विषयीक्रियत इति प्राथमिकग्रहग्राह्यत्वं निरूपयन्ति । अतः परामर्शघटितसामग्रीपरिग्रहे तज्जन्यानुमितिग्रहविषयत्वात्प्रामाण्यं स्वतोग्राह्यं सम्पद्यते ।

प्राभाकरमते न ज्ञातताख्यः पदार्थविशेषः । अत्र ज्ञानग्राहकसामग्रीपदेन इन्द्रियसन्निकर्षादिघटितसामग्रीपरिग्रहात् तज्जन्यव्यवसायात्मकग्रहविषयत्वं गृह्यते । तस्मात्स्वतो ग्राह्यत्वं प्रामाण्यस्य । सर्वोऽप्ययमर्थः 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रारूढतया भाष्यवार्तिककाराभ्यां निरूपितः । तत्र जैमिनिः प्रतिज्ञामात्रेण धर्मस्वरूपं न निर्णीतं स्यादिति धर्मनिमित्तपरीक्षार्थं प्रतिजानीते—'तस्य निमित्तपरीष्टिः' इति । प्रतिज्ञात-

धर्मस्य निमित्तपरीक्षायां कृतायां निष्पक्षपातित्वं जैमिनेस्सिद्धम् । मीमांसायाः शास्त्रत्वे सिद्धेऽपि शास्त्रान्तरवैलक्षण्यं परीक्षाशास्त्रत्वेन साधितं भवति । महाविचारकश्चिन्तकश्च महर्षिर्जैमिनिः । विना विचारेण कस्यापि पदार्थस्य निर्णयं न करोति । प्रत्यधिकरणं विषयसंशयपूर्वोत्तरपक्षप्रयोजनरूपान् पञ्चावयवान् सम्प्रदर्श्य धर्मनिर्णयं विदधाति । अतः परीक्षाशास्त्रमिदमित्यपि व्यवह्रियते । एतादृशनिमित्तपरीक्षाप्रवृत्तौ चेदं कारणम्, यद् धर्मपदार्थे सन्ति बह्व्यो विप्रतिपत्तयः, तास्समालोचनीयाः । विप्रतिपत्तिगोचरे सति धर्मपदार्थे 'चोदनालक्षणोऽर्थो धर्मः' इति धर्मलक्षणं धर्मप्रमाणञ्च कथमङ्गीक्रियतां विना परीक्षयेति । तदिदमुक्तं भाष्यकारैः—'धर्मं प्रति विप्रतिपन्ना बहुविदः केचिदन्यं धर्ममाहुः, केचिदन्यम् । सोऽयमविचार्य प्रवर्तमानः कञ्चिदेवोपाददानो विहन्येत, अनर्थञ्चर्च्छेत्' इति । विप्रतिपत्तीश्च सङ्गृह्णन्ति वार्तिककाराः—

'अन्तःकरणवृत्तौ वा वासनायाञ्च चेतसः ।
पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि ॥१९५॥
प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम् ।
पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः ॥१९६॥ इत्यादिना ।

(श्लो. वा. १-१-२ पृ. ८१)

इत्थं विप्रतिपत्तिगोचरस्य धर्मपदार्थस्य निर्णयाय चोदनासूत्रम्, तत्परीक्षणाय चोपरितनं समग्रं शास्त्रमित्याशयः ।

तत्तत्प्रमेयावधारणाय प्रत्यक्षादीनि प्रमाणानि दार्शनिकैरङ्गीकृतानि । तेषु सर्वप्रमाणानां मूलं प्रत्यक्षमित्यविवादम् । तद्धर्मे प्रमेये प्रमाणं भवितुमर्हति न वेति विचिकित्सायां सूत्रकारः प्रत्यक्षस्वरूपमभिधाय तस्यानिमित्तत्वं प्रत्यपादयत्—

'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' इति ।

पुरो विद्यमानेन पदार्थेन सहेन्द्रियाणां सन्निकर्षद्वारा जायमानं ज्ञानं प्रत्यक्षमिति स्वरूपे प्रत्यक्षस्याभिहिते धर्मपदार्थेन सह तादृशेन्द्रियसन्निकर्षाभावेन कथं प्रत्यक्षं प्रमाणं धर्मे स्यात् ? धर्मश्च स्वर्गादिफलसाध्यसाधनभावरूपः, स च न सन् । अत्र भाष्यकाराः—'भविष्यंश्चैषोऽर्थो न ज्ञानकालेऽस्तीति । सतश्चैतदुपलम्भनं नाऽसतः । अतः प्रत्यक्षमनिमित्तम्' इति । अत्र 'सतश्चैतदुपलम्भनं नासतः, इति भाष्यं सौत्रविद्यमानोपलम्भनत्वात् इति हेतोर्विवरणपरम् । तथा च 'प्रत्यक्षं विद्यमानार्थोपलब्धिरूपं वर्तमानेन्द्रियार्थसंयोगजन्यत्वात्' इति प्रयोगस्सम्पन्नः । तेन च 'प्रत्यक्षं धर्माधर्मागोचरं विद्यमानोपलम्भनत्वात्' इति प्रयोगो निर्गलति । एवं प्रत्यक्षस्य तन्मूलानुमानोपमानपुरुषवचनार्थापत्तीनामनिमित्तत्वमुक्त्वा 'अभावोऽपि नास्ति, यतः' इति भाष्येण औत्पत्तिकसूत्रमवतारयति-

भाष्यकारः। प्रत्यक्षादिसर्वप्रमाणानां धर्मेऽप्रसक्तौ अनुपलब्धिप्रमाणमेव प्रसज्येत। तेन च धर्मस्याभाव एव सिध्येत्। कथं तर्हि चोदनासूत्रकृतप्रतिज्ञायाः 'चोदनैव धर्मे प्रमाणम्' 'चोदना धर्मे प्रमाणमेव' इत्येवंरूपायास्सिद्धिः? अतश्च धर्मो निष्प्रमाणक इत्येवं पक्षे प्राप्ते भाष्यकार आह—'अभावोऽपि नास्ति' इति। सर्वप्रमाणानां प्रवृत्त्यभावेनानुपलब्धिगम्यत्वेन धर्मस्य योऽभावश्शङ्कितः स नास्ति। यतः—'औत्पत्तिकस्तु' इति सूत्रेण तन्निराकरणात्। शब्दस्यार्थेन सह सम्बन्धो नित्यः स च तस्य प्रतिज्ञाताग्निहोत्रादिलक्षणस्य धर्मस्य प्रत्यक्षादिप्रमाणैरनवगतस्य निमित्तम्। एतादृशस्य तस्य ज्ञानं-ज्ञापकम् उपदेशः—अग्निहोत्रादिविधायकं वाक्यम्। यद्धि वाक्यं ज्ञानानुत्पादकं तदप्रमाणम्, अग्निहोत्रादिवाक्यञ्च न तथा। किञ्च यत्र च बाधकमुदियात्, तस्याप्रामाण्यं लोकसिद्धम्। तदत्र नास्तीत्यव्यतिरेकपदेनाह सूत्रकारः—अव्यतिरेकश्चेति। वेदवाक्यैर्जायमानः प्रत्ययः स्वयम्प्रत्ययः, प्रमाणान्तरनिरपेक्षं सद्वेदवचनं धर्मावबोधकमिति भावः।

एवं भाष्यकारः स्वमतेन तस्य निमित्तेत्यादि सूत्रत्रयं व्याख्याय वृत्तिकारस्योपवर्षस्य मतेनापि व्याख्यां सूत्रत्रयस्य दर्शयामास—'वृत्तिकारस्त्वि' त्यादिना। वृत्तिकारमते 'तस्य निमित्तपरीष्टिः' इत्यस्य नञ्पदमध्याहृत्य व्याख्यानम्। प्रतिज्ञातस्य धर्मस्य निमित्तपरीक्षा न कर्तव्येति। कुतः प्रत्यक्षादेः प्रसिद्धत्वात्। अतश्चतुर्थसूत्रं सत्-तत्पदयोर्व्यत्यासेन व्याख्यातम्। सूत्रे प्रथमं पठितं सत्पदमनन्तरपठिततत्पदस्थाने, तत्पदञ्च सत्पदस्थाने निवेश्य सूत्रार्थः कर्तव्यः। यद्विषयकं ज्ञानमुत्पद्यते तेन विषयेणेन्द्रियादिसन्निकर्षद्वारा जायमानं ज्ञानं सत् प्रत्यक्षं, समीचीनं प्रत्यक्षमिति। 'इदं रजतम्' इत्यादौ ज्ञानं रजतविषयकम्, न तेन विषयेणेन्द्रियसन्निकर्षः, किन्तु शुक्तिकया। अत इदं न सत् प्रत्यक्षम्। एवं प्रसिद्धस्य प्रत्यक्षस्य धर्मे प्रवृत्तिर्नास्तीति न तत्परीक्षितव्यम् किं धर्मे प्रत्यक्षस्य प्रवृत्तिरस्ति नास्ति वेति।

अस्मिन्सन्दर्भे सम्यग्ज्ञानमिथ्याज्ञानयोर्भेदकं भाष्यकारा एवं प्रादर्शयन्—'यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययस्स एवासमीचीनः प्रत्ययो नान्यः' इति। एवञ्चोत्तरकाले बाधकप्रत्ययः; करणेषु वा दुष्टत्वावगमो यत्र भवति तत्रैवान्यसम्प्रयोगजं ज्ञानम्, यत्र च न तथा तदेव ज्ञानं सम्यक्प्रत्यक्षमिति ज्ञातुं शक्यत्वादव्यभिचरितं प्रत्यक्षमिति न तत् परीक्षणीयमिति सिद्धम्।

पुनरत्रेयं शङ्का समुदेति—पूर्वोक्ता व्यवस्था नोपपद्यते, सर्वज्ञानानां मिथ्यात्वात्, यतश्च ज्ञानसामान्यं निरालम्बनम्—बाह्यालम्बनशून्यम्। स्वाप्निकज्ञानानि बाह्यालम्बनशून्यानि जायन्त इति निर्विवादम्, कालान्तरदेशान्तरवर्तिनां संनिहितकालदेशवर्तित्वेन पदार्थानां प्रतिभानस्यानुपपन्नत्वात्। एवं स्वशिरश्छेदादयोऽपि स्वप्ने भासन्ते।

इदञ्च क्वचित्कदाचिदपि न सम्भवितुमर्हति। अतश्चात्र ज्ञानानि स्वात्मांशमेव गृह्णन्तीत्यभ्युपेयम्। अनेनैव न्यायेन जाग्रज्ज्ञानान्यपि स्वांशमात्रग्रहणेन चरितार्थानि भवन्तु, कृतं बाह्यार्थालम्बनस्वीकारेण। अतस्सर्वज्ञानानां मिथ्यात्वे सिध्यति कथं प्रत्यक्षं न परीक्षितव्यं स्यादिति पक्षे प्राप्ते भाष्यकाराः समादधते 'उच्यते—स्तम्भ इति जाग्रतो बुद्धिः' इत्यादिना। स्वाप्नप्रत्ययस्य जाग्रत्प्रत्ययस्य चैकरूपत्वमसिद्धम्। स्वाप्नप्रत्ययविपर्याससिद्धि र्बाधकप्रत्ययेन भवति, जाग्रत्प्रत्यये तु न तादृशः प्रत्ययः। प्रत्यक्षं हि बाह्यार्थग्राहि। तस्मिन् जाग्रति कथमिव निरालम्बनानुमानस्योदयः? न खलु वह्नौ प्रत्यक्षेणौष्ण्ये गृह्यमाणे शैत्यानुमानस्योदयो भवति।

भाष्यकारैः प्रदर्शितस्य प्रयोगस्य परीक्षामारभमाणा भट्टपादाः प्रथमं बौद्धैः प्रयुज्यमानं 'संवृति' शब्दं परिगृह्य विचारितवन्तः। बौद्धा हि संवृतिसत्यं पारमार्थिकसत्यमिति द्वे सत्ये समाश्रित्य प्रथमेन प्रमाणप्रमेयव्यवहारं द्वितीयेन च प्रत्ययानां निरालम्बनत्वं समर्थयन्ते। परमार्थतः प्रत्ययानां निरालम्बनत्वे सत्यपि तैः सर्वोऽपि लौकिकव्यवहार उपपादनीय एव। स च संवृतिसत्यत्वप्रयुक्तः। इयञ्च सरणिरद्वैतिनामप्यस्ति। ते हि त्रिविधं सत्यं 'व्यावहारिकसत्यम्', प्रातिभासिकं सत्यम्', 'पारमार्थिकं सत्यम्' इति स्वीचक्रुः। बौद्धा अपीमां सरणिमनुकृतवन्तः। किन्तु शब्दत एवानुकरणं न त्वर्थतः। व्यावहारिक-प्रातिभासिकावस्थयोरद्वैतिनो ज्ञानानां बाह्यपदार्थालम्बनत्वं न त्यजन्ति, तदापि ब्रह्मविवर्तरूपेण बाह्यपदार्थास्तिष्ठन्त्येव। बौद्धप्रक्रियायान्तु संवृतिसत्यस्थलेऽर्था न सन्त्येव। दर्शनान्तरे सत्यपदविशेषणतया व्यावहारिकपदं युक्तम्। संवृतिसत्यस्थले संवृतिपदं सत्यस्य विशेषणं न युक्तम्, संवृतिपदस्य मिथ्यापरपर्यायत्वात्। संवृतिरूपं सत्यम् संवृतेस्सत्यमिति वा वक्तव्यम्। तदुभयं न सङ्गतम्। न हि सत्यं मिथ्यारूपं भवेत्, नापि संवृतेस्सत्यं किञ्चिद्भवेत्। अतः केवलं प्रतारणपरोऽयं संवृतिशब्द इत्यादीनि दूषणान्युद्भाव्य बौद्धाभिलषितमनुमानप्रयोगं विमृश्य तत्र पक्षसाध्यहेतुदूषणानि भट्टपादा उद्भावयामासुः। अत्रत्यो विशेषः 'अध्वरमीमांसाकुतूहलवृत्तेः' चतुर्थभागे मत्कृतभूमिकतोऽवगन्तव्यः।

एवं प्रत्यक्षविरुद्धमनुमानं निराकृत्य प्रत्यक्षस्य बहिः प्रवृत्तौ सामर्थ्यमेव नास्तीत्युत्थितं पक्षं दूषयामासुर्भाष्यवार्तिककाराः। ज्ञानं साकारं प्रत्यक्षम्, बाह्यार्थस्तु निराकारः। ज्ञानं स्वकारमेव गृह्णाति, न बाह्याकारमिति नास्तिकः। ज्ञानं निराकारं, बाह्यार्थ एव साकारः, ज्ञानञ्चानुमेयं बाह्यार्थश्च प्रत्यक्ष इति मीमांसकः। इमौ पक्ष-प्रतिपक्षौ साधु विचारितौ भट्टपादैः। एवञ्च वृत्तिकारमतरीत्या निमित्तसूत्रे प्रत्यक्षस्य प्रसिद्धत्वेनापरीक्ष्यत्वं वर्णयित्वा प्रत्यक्षमूलकानुमानादिकमपि न परीक्षितव्यमित्युपपादनाय अनुमानादिलक्षणान्याहुर्भाष्यकाराः—'अनुमानं ज्ञातसम्बन्धस्य' इत्यादिना। सर्वाणीमानि न परीक्षितव्यानि प्रसिद्धत्वात्।

लोकसिद्धानां प्रत्यक्षादिप्रमाणानां प्रसिद्धत्वहेतुना परीक्ष्यत्वेऽपि वैदिकानां 'चित्रया यजेत पशुकामः, कारीर्या वृष्टिकामो यजेत' इत्यादीनां वाक्यानामप्रामाण्यमेव, न ह्यासामिष्टीनामनुष्ठानेन पश्वादिफलान्युपलभामहे इति शंकापरत्वेन चतुर्थसूत्रावयवं 'अनिमित्तं विद्यमानोपलम्भनत्वात्' इति व्याख्यान्ति भाष्यकाराः। इदं चित्राक्षेपभाष्यमिति कथ्यते। किञ्चिच्च वेदवाक्यं प्रत्यक्षविसंवादार्थप्रतिपादकम्। यथा 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति' इति। यजमाने दिवंगते तच्छरीरं प्रत्यक्षं दह्यते, तथापि वाक्यमिदं तं यजमानं शरीरसहितं स्वर्लोकगमनवन्तं निर्दिशत् प्रत्यक्षविसंवादि कथं प्रामाण्यमर्हति ? इति शङ्का-समाधानार्थत्वेनौत्पत्तिकसूत्रमवयवशो व्याख्यान्ति। शब्दार्थसम्बन्धाक्षेप-चित्राक्षेप-प्रत्यक्षविसंवादाक्षेपादीनां वृत्तिकारमतेन परिहारपरमिदं सूत्रमिति प्रदर्शितं भाष्यकारैः। एवञ्च भाष्यकाराः स्वमतेन वृत्तिकारमतप्रदर्शनव्याजेन च बहवो मीमांसकसम्मतप्रमेयाः प्रमाणानि च प्रादर्शयन्, वार्तिककाराश्च तानीमानि समुपबृंहितवन्तः।

मीमांसाशास्त्रे प्रस्थानद्वयम्—प्रमाण—प्रमेयप्रस्थानम्, अधिकरणप्रस्थानञ्चेति। तत्र द्वितीयं विलोक्य केचनाक्षिपन्ति यदिदं शास्त्रं कर्मकाण्डैकनिरूपणाय प्रवृत्तं, न किञ्चिदत्र दार्शनिकं तत्त्वमस्तीति। तदिदं शास्त्रतत्त्वाऽज्ञानविजृम्भितम्। तर्कपादे प्रमाणप्रमेयप्रस्थानसम्बन्धिनो बहवः पदार्था भाष्यवार्तिककारैः सम्प्रकाशिताः 'स एष यजमानोऽञ्जसा स्वर्गं लोकं याति' इति वाक्यविचारप्रसङ्गे भाष्यकारा आत्मनिरूपणम्, तद्विवरणावसरे वार्तिककारा मोक्षस्वरूपं विवृतवन्तः। दार्शनिकेषु मोक्षो दुःखाभावात्मेति नित्यसुखाभिव्यक्तिरिति च प्राधान्येन द्वेधा मार्गः प्रचलति। तत्र मीमांसकसम्मतं किमिति विचारे प्रवृत्ते भट्टपादा व्याकरणाधिकरणे साधुशब्दज्ञानस्य संस्कारार्थत्वं परार्थत्वञ्चाङ्गीकुर्वन्तः 'द्रव्यसंस्कारकर्मसु परार्थत्वात्' इति न्यायेन फलबोधकवाक्यानामर्थवादत्वमभिप्रयन्तो लिखन्ति—

'सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते।
पराङ्गञ्चात्मविज्ञानादन्यत्रेत्यवधारणात्'॥

(तं वा. पृ. २८८) इति।

अस्यां कारिकायाम् 'आत्मविज्ञानादन्यत्र, इति पदमुपाददाना उपरिष्टात् संयोगपृथक्त्वन्यायेनात्मज्ञानस्य क्रत्वर्थत्वपुरुषार्थत्वोभयरूपत्वं स्वीकुर्वन्ति। तदनन्तरञ्च—'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'मन्तव्यो बोद्धव्यः' 'आत्मानमुपासीत' स सर्वांश्च लोकानवाप्नोति सर्वांश्च कामानाप्नोति,' 'तरति शोकमात्मवित्' 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो

महीयते' इत्यादिवाक्यैः फलसम्बन्धञ्च प्रदर्श्य लिखन्ति—'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते' इत्यपुनरावृत्त्यात्मकप्राप्त्यवस्थाफलवचनम्। अप्रकरणगतत्वेनानैकान्तिकक्रतुसम्बन्धाभावाच्च नाञ्जन-खादिरस्रुववाक्यादिफल-श्रुतिवदर्थवादत्वम्' इति। (तं. वा. पृ. २८८) एवं ज्ञानविधाने कर्मसम्बन्ध-वारणञ्चेन्मीमांसायाः का गतिःस्यादिति प्रश्ने 'न च ज्ञानविधानेन कर्मसम्बन्धवारणम्, प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वकृतदुरितक्षयार्थमकरणनिमित्ताऽ-नागतप्रत्यवायपरिहारार्थञ्च कर्तव्यानि। न च तेषां भिन्नप्रयोजनत्वाद् भिन्नमार्ग-त्वाच्च बाध-विकल्प-परस्पराङ्गाङ्गिभावास्सम्भवन्ति' इति च समादधते। वार्तिक-सन्दर्भमिमं विवृण्वाना न्यायसुधाकाराः सोमेश्वरभट्टाः—' स ब्रह्मोपासको यावदा-युषमेवं विधां वृत्तिमाचरन् 'ब्रह्माभिसम्पद्यते' इति श्रुतेश्च संसारिरूपशरीरसंबन्धोपाधिक-त्वे च परमानन्दात्मकपरमात्मप्राप्तेरसंसारिनिजरूपावस्थानस्या ऽजन्यत्वादपुनरावृत्ति-र्युक्तैव' (न्या. सु. पृ. ३२८) इति निर्दिशन्ति। सर्वमिदमवलम्ब्य मीमांसाकुतूहल-प्रणेतारः श्रीकमलाकरभट्टाः दुःखाभावरूपत्वं मोक्षस्य पार्थसारथ्यभिमतं नानायुक्तिभिः खण्डयन्त उपसंहरन्ति—'तस्मात्सिद्धं नित्यसुखाभिव्यक्ति र्मुक्तिरिति। तत्त्वतस्त्वस्माकं मोक्षो वेदान्तिमतादभिन्न एव' इति। (मी. कु. P. ३७ मातृकायाः) विस्तरेण विषयोऽयं मीमांसाकुतूहल-भूमिकायां विशदीकरिष्यते।

सम्प्रति मीमांसाध्येतारोऽति विरलाः अस्या अध्ययनमत्यावश्यकम्। धर्मशास्त्रस्य वेदवेदान्तादिशास्त्राणाञ्चेदं शास्त्रं महदुपकारकम्, न केवलमिदं कर्मकाण्डनिरूपणा-यैव प्रवृत्तम्। शास्त्रेऽस्मिन् निर्णीतानां न्यायानां समाजेऽस्ति महानुपकारः। अस्याध्यय-नाप्रवृत्तौ कारणमिदमप्यस्ति—यदध्ययनाय ग्रन्थानामभावः। अस्माकमन्तेवासी काशी-हिन्दुविश्वविद्यालयीय-मीमांसा-धर्मशास्त्रविभागस्य अध्यक्षपदात् साम्प्रतं सेवानिवृत्तो दर्शनशास्त्रेषु निष्णातः डॉ० श्रीगजाननशास्त्री तमिमं ग्रन्थाभावं शनैश्शनैर्दूरीकृत्य मीमांसाध्ययनमार्गं प्रशस्तं विदधातीति प्रसन्नचेता अस्मि।

बि० सं० २०३६ — विद्वदाश्रवः

चैत्र शु० ९, वाराणसी। — पट्टाभिराम शास्त्री

## ॥ विषयाऽनुक्रमणिका ॥

## चोदनासूत्रम् ॥ २ ॥

"तस्य निमित्त-परीष्टिः"—३



— चतुर्थ-सूत्रम् —

—'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं-विद्यमानोपलम्भनत्वात्"—

समाप्तं सूत्रतात्पर्यम्

## —अथाऽवयवतात्पर्यम्—

—एवं मीमांसकमतेन नैयायिकमतेन च प्रमाण-फलयो र्भेदः,
तथा विषयस्य एकता च प्रतिपादिता ।



॥ सूत्रस्य लक्षणपरत्वं स्वीकृत्य विचारः समाप्तः ॥

प्रत्यक्षसूत्रं समाप्तम्

## – पञ्चमम् औत्पत्तिकसूत्रम् –



– औत्पत्तिकसूत्रं समाप्तम् –

---

## –अथ वृत्तिकारग्रन्थारम्भः–

॥ इति वृत्तिकारग्रन्थः ॥

## — अथ निरालम्बनवादः —

॥ पूर्वपक्षीयभाष्यस्य व्याख्यानं समाप्तम् ॥

## – अथ सिद्धान्तभाष्यस्य व्याख्यानम् –

निरालम्बनवादः समाप्तः



## अथ शून्यवादः

॥ शून्यवादः समाप्तः ॥



## - अथाऽनुमानवादः -

॥ इति पक्षधर्मताग्रहणेलिङ्गसामान्यस्यानुमानसापेक्षत्वात्–
अनवस्थाप्रदर्शनं समाप्तम् ॥

॥ इत्यनुमानपरिच्छेदः समाप्तः ॥

पूज्याः पितृचरणाः :—



ब्रह्मलीनाः महामहोपाध्यायाः श्री सदाशिवशास्त्रिपादाः ।

पूज्याः श्री गुरुचरणाः :—



[ब्रह्म]लीनाः पंडितराजाः श्रीराजेश्वरशास्त्रिपादाः ।

पूज्याः मीमांसागुरुचरणाः :—



मीमांसाकेसरिणः श्रीपट्टाभिरामशास्त्रिचरणाः

# समर्पणम्

स्वर्यातस्य पितुः 'सदाशिव' इति प्रख्यातनाम्नो, गुरोः
श्रीमत्पण्डितराजराजितयशो-राजेश्वरस्याऽमलम् ।
पादाम्भोजयुगं समीहितफलप्राप्तेर्निदानं शिवं
ध्यायन्नेष गजाननो नवगुणे ग्रथ्नाति संवित्स्रजम् ॥१॥

मीमांसादिषु दुर्गमागममहारण्येषु यस्याऽनिशं
प्राज्ञानाम्प्रथते पुरो बलवतां शार्दूलविक्रीडितम् ।
पाणौ तस्य गुरोरुदारयशसः पट्टाभिरामाख्ययाऽ-
ख्यातस्य प्रणतो गजानन इदम्भक्त्याऽर्पयन् नन्दति ॥

विनीतो—गजाननः



प्रस्तूयमानस्य

## पूर्वमीमांसादर्शनग्रन्थस्य-स्वरूपम्

तत्त्वालोचनचातुरीविलसितम्प्रोत्कर्षबीजं विदां
युक्तेरुच्छ्वसितं नितान्तविमलज्ञानाय लब्धोदयम् ।
बुद्धेर्वैभवमुत्तमं सुमनसाम्पुञ्जीभवत्सौरभ-
म्भारत्या महिमानमुन्नमयितुं विद्योतते 'दर्शनम्' ॥१॥

प्रख्यातेष्विह दर्शनेषु फलवज्जैमिन्युपज्ञं महाशास्त्रं
भाति यथाधिकारमुपदीकर्तुं नृणां वाञ्छितम् ।
भाष्यं तत्र चिरं चकास्ति शबरस्वामि-प्रणीतं नुतं
यत्र प्राज्ञकुमारिलस्य जयति श्लोकात्मकं वार्तिकम् ॥२॥

तत्रोद्भासित-तर्करत्ननिचिता सन्न्यायरत्नाकर-
व्याख्या नन्दति पार्थसारथिकृता विद्वज्जनाभ्यर्चिता ।
एकीभूतमिव त्रिमूर्तिघटितं सारस्वतं भास्वरं
तत्पुण्यायतनं नवीकृतमिदम्प्रस्तौमि वः प्रीतये ॥३॥

—गजाननशास्त्री



* नमः साम्बसदाशिवाय *

शाबरभाष्य - श्लोकवार्त्तिक - न्यायरत्नाकर -

व्याख्यान - विभूषितं

श्रीमज्जैमिनिप्रणीतं

# मीमांसादर्शनम्

तत्र

## तर्कपादाभिधं

श्रीकुमारिलभट्टपादविरचितम्

## मीमांसाश्लोकवार्त्तिकम्[1]

### मङ्गलम्

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥

### न्यायरत्नाकरः

( पार्थसारथिमिश्रनिर्मितो व्याख्यारूपः )

( मङ्गलम् )

श्लोकवार्तिकमारिप्सुस्तस्याऽविघ्नसमाप्तये ।
विश्वेश्वरं महादेवं स्तुतिपूर्वं नमस्यति ॥ १ ॥

विशुद्धेति । विशुद्धं मीमांसया संशोधितं ज्ञानमेव देहो यस्य । त्रिवेद्येव दिव्यं चक्षुः प्रकाशकं यस्य । सोमस्य अर्धं स्थानं ग्रहचमसादि तद्धारिणे इति यज्ञपक्षेऽपि संगच्छते ॥ १ ॥

---

१. उक्तानुक्तदुरुक्तादिचिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकम्प्राहुर्वार्तिकज्ञा मनीषिणः ॥

अभिवन्द्य गुरूनादौ शिष्यधीपद्मिनीरवीन् । *
तत्प्रसादात् करिष्येऽहं मीमांसाश्लोकवार्तिकम् ॥ २ ॥
तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः[1] प्रसादिभिः ।
सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ॥ ३ ॥
न [2]चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ ४ ॥
कुतो वा गृह्णते दोषं सूरयो मद्विधोक्तिषु ।
नेष्यते यः परस्थोऽपि स स्वयं गृह्यते कथम् ॥ ५ ॥
निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते ।
सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रति ॥ ६ ॥

न्या० र —विद्यागुरूणां स्तुतिनमस्कारौ कुर्वन् वार्तिकारम्भं प्रतिजानीते अभिवन्द्येति ॥ २ ॥

संप्रति लोकयात्रामाद्रियमाणो विदुषामनुनयं करोति तदिति ॥ ३ ॥

परीक्षकाणामिदानीं माध्यस्थ्यमर्थयते न चात्रेति । दोषैकदृष्टिपराणामसन्नपि दोषः प्रकाशते अतो मध्यस्था[3] भूत्वा परीक्षध्वमिति ॥ ४ ॥

दुर्जनानिदानीमुद्धतोक्त्या दमयति कुत इति । परस्थानपि दोषाननिच्छन्तस्तत्परिजिहीर्षायां यतमाना मद्विधाः कविप्रवराः कथं स्वग्रन्थे दोषान् संगृह्णीयुः अविद्यमानांश्च दोषान् कथं सूरयो गृह्णीयुः, मूर्खास्तु कामं गृह्णीयुरपीति ॥ ५ ॥

संप्रति शिष्यजनमनुशास्ति निर्दोषत्वेति । यद्यपीमं ग्रन्थं दुर्जनाः कतिपये दूषयिष्यन्ति तथापि न दोषवत्त्वं मन्तव्यम् । न हि क्वचिदपि सर्वस्य लोकस्य निर्दोषत्वसम्प्रतिपत्तिर्भवति । तथाहि—तिष्ठतु तावदन्यद्, यावत्यन्तनिर्दोषौ परमपुरुषार्थात्मकौ मोक्षस्वर्गौ तत्रापि नास्तिकाः सापवादाः, भीमः खल्वयमपवर्गः बह्वत्र भद्रकं लुप्यते, वरं हि संसारः, यत्र कियानपि तावत्सुखलेशोऽनुभूयते, इति मोक्षेऽपवादः । तथा स्वर्गेऽपि, किं स्वर्गेण चिरसाध्येन मरणव्यवहितेन, वरमत्रत्यमेव भोजनशय्यादिसुखमिति । अतो न कैश्चिद् दूषितमिति मत्वा सदोषत्वं मन्तव्यमिति ॥ ६ ॥

---

* गुरुवन्दनानन्तरं वार्त्तिकविरचनप्रतिज्ञा क्रियते, यतो गुरुप्रसादेनैव अर्थतत्त्वोपदेशस्य दृश्यमानत्वात्, अदृष्टस्यापि स्तुतिनमस्कार-जन्यत्वाच्च । दुरुक्तभङ्गमनुक्तवचनं च समाधातुं वार्त्तिकग्रहणं । 

१. 'स्तोत्रैः'—क

२. 'नवा'—क

३. 'मध्यस्थीभूत्वा'—क

आगमप्रवणश्चाहं[1] नापवाद्यः स्खलन्नपि । *
न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते ॥ ७ ॥

यथाकथंचिदारब्धा त्रयीमार्गाऽनुसारिणी ।
वाग्वृत्तिरल्पसाराऽपि श्रद्दधानस्य शोभते ॥ ८ ॥

मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते ।
वेदार्थज्ञानरत्ने मे तृष्णाऽतीव विजृम्भते ॥ ९ ॥

प्रायेणैव हि मीमांसा लोके लोकायतीकृता । □
तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥ १० ॥

॥ इत्युपोद्घातः ॥

न्या०र०—संप्रति उपेत्यापि सदोषत्वं संग्राह्य एवायं ग्रन्थ इत्याह **आगमेति** । सन्मार्गो ह्ययं वेदानुसारः सन्मार्गेण गामिनां च सत्यपि स्खलने नापवादो युक्तः । तेन वेदव्याख्यानात्मकस्य ग्रन्थस्य भूयिष्ठगुणस्याल्पो दोषः सन्नप्युपेक्षणीय इति ॥ ७ ॥

किञ्चाल्पसारा बहुदोषा यथा कथंचिदतिक्लेशेन समारब्धा वाग्वृत्तिस्त्रयीमार्गानुसारिणी चेच्छ्रद्दधानस्य शोभत एव किं पुनरस्मादृशानामत्यन्तनिर्दोषा वाग्वृत्तिरित्याह **यथाकथञ्चिदिति** ॥ ८ ॥

ननु वेदं व्याचिख्यासोस्ते किं मीमांसाव्याख्यया ? वेद एवोपक्रमादारभ्य व्याख्यायतामत आह **मीमांसेति** । वेदवाक्यानि मीमांसागतन्यायवशेन निरूपितानि मनोहराणि भवन्ति, नोपदेशरूपेण व्याख्यातानि । तेन मीमांसाव्याख्यायामेव तृष्णा वर्धत इति ॥ ९ ॥

ननु मीमांसायाश्चिरन्तनानि भर्तृमित्रादिरचितानि व्याख्यानानि विद्यन्ते किमनेनेत्यत आह **प्रायेणेति** । मीमांसा हि भर्तृमित्रादिभिरलोकायतैव सती लोकायतीकृता नित्यनिषिद्धयोरिष्टाऽनिष्टं फलं नास्तीत्यादिबह्वपसिद्धान्तपरिग्रहेणेति तामास्तिकपथे कर्तुं वार्तिकारम्भयत्नः कृतो मयेति ॥ १० ॥

॥ इत्युपोद्घातः ॥

---

* नहि किमपि अभिमतं वस्तु निर्दोषं भवति । अतो दोषान् समाधाय गुणा उपजीवितव्याः ।

□ लोकायतं नाम नास्तिकानां तन्त्रम् । अनेकापसिद्धान्तग्रहणेन तद्भावमापादितेत्यर्थः । 'कृतो मया' इत्यत्र आशंसायां वर्तमानार्थे वा क्तो वर्णनीयः

१. 'अयम्'—क

## [ प्रतिज्ञासूत्रम्[1] ]

### [2]अथाऽतोधर्मजिज्ञासा ( अ०१पा०१सू०१ )

'अथातो धर्मजिज्ञासा' सूत्रमाद्यमिदं कृतम् ।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥ ११ ॥

* सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित् ।
यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते ? ॥ १२ ॥

मीमांसाख्या तु विद्येयं बहुविद्यान्तराऽऽश्रिता ।[3]
न शुश्रूषयितुं शक्या प्रागनुक्त्वा प्रयोजनम् ॥ १३ ॥

एवं समर्थितारम्भं वार्तिकमारभमाण: सूत्रतात्पर्यं तावद्दर्शयति अथात इति । धर्माख्यो योऽस्य शास्त्रस्य विषय: प्रतिपाद्य: तदेवास्य प्रयोजनमिति वक्तुं शास्त्रादौ इदं सूत्रं कृतम् । धर्मजिज्ञासायां हि कर्तव्यतामुक्त्वाऽऽरभ्यमाणं शास्त्रं ननं तत्प्रतिपादनार्थमिति गम्यते, अतस्तदर्थमिदं सूत्रम् । आद्यमिति प्रयोजनाभिधानस्यावसरं दर्शयति ॥ ११ ॥

किमर्थं पुन: प्रयोजनकथनमत आह सर्वस्येति । सर्वस्याऽल्पायाससाध्यस्यापि शास्त्रस्य कर्मणो वा प्रवृत्तिसिद्धयेऽवश्यं वक्तव्यमेव प्रयोजनम् ॥ १२ ॥

विशेषतो मीमांसाया बहुप्रयाससाध्यत्वादित्याह मीमांसेति । मीमांसा हि व्याकरणादिशास्त्रान्तरवशेन व्युत्पन्नपदपदार्थस्य वाक्यार्थसन्देहनिवृत्त्यर्था, बहूनि विद्यान्तराणि उपायभूतान्याश्रिता, बह्वायाससाध्या, नास्यां प्रयोजनमनुक्त्वा प्रवर्तयितुं शक्यमिति ॥ १३ ॥

---

१. अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥

२. अत्र सूत्रे जिज्ञासापदेन विचारो लक्ष्यते । धर्मस्य जिज्ञासा धर्मजिज्ञासा । धर्मस्येति कर्मणि षष्ठी । विषयत्वं तदर्थः । सपरिकरो धर्मोऽत्र विषयः । कर्तव्या इति अध्याह्रियते । तथाच सूत्रस्याऽयमर्थः—अथ वेदाध्ययनानंतरम्, अतः वेदाध्ययनस्य संवृत्तत्वाद्धेतोः, धर्मजिज्ञासा धर्मविषयकविचारः कर्तव्य इति । अत्र धर्मपदमधर्मस्याऽप्युपलक्षणम् । अधर्मोऽपि हानाय जिज्ञासितव्य इति । ( तं०सि०र० )

* सर्वस्यैवेति काक्वा मीमांसायामन्तर्णीतो विशेषो ध्वन्यते ।

३. 'श्रया'—ख

विद्यान्तरेषु नाप्येतद् यद्यभीष्टं[1] प्रयोजनम् ।
अनर्थप्रापणं तावत् तेभ्यो नाशङ्क्यते क्वचित् ॥ १४ ॥
मीमांसायां त्वविज्ञाऽज्ञाते दुर्ज्ञाते वा ऽविवेकतः ।
न्यायमार्गे महान् दोष इति यत्नोपचर्यता ॥ १५ ॥
तस्मात्प्रयोजनं पूर्वमुक्तं सूत्रकृता स्वयम् ।
यत् [2]स्वेनोक्तं [3]वदेयुस्तद् भाष्यकारादयः कथम् ॥ १६ ॥
सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन [4]वक्तव्यः सम्बन्धः सप्रयोजनः ॥ १७ ॥
शास्त्रं प्रयोजनं चैव सम्बन्धस्याश्रयावुभौ ।
तदुक्त्यन्तर्गतस्तस्माद् भिन्नो नोक्तः प्रयोजनात् ॥ १८ ॥

अपरमपि मीमांसायां विद्यान्तरेभ्यः प्रयोजनाभिधानोपयोगं दर्शयति विद्यान्तरेष्विति । विद्यान्तरेष्वनुक्ते प्रयोजने यदि नाम न प्रवर्तेरन् तथाप्यल्प एव प्रत्यवायः तेषामल्पविषयत्वात् ॥ १४ ॥

मीमांसा तु सर्ववाक्यगतन्यायनिरूपणात्मिका तेनास्यां यो न्यायमार्गस्तस्मिन्नज्ञाते दुर्ज्ञाते वा विवेकाऽभावान्न किंचिज्ज्ञायेत । अतो महान् दोष इति प्रयोजनदर्शनेन प्रयत्नेनोपचरितव्येति ॥ १५ ॥

उपसंहरति तस्मादिति । किमिति पुनः स्वयमुक्तं न भाष्यकारादिभिर्वक्ष्यमाणं प्रतीक्षितमत आह यत्स्वेनेति । स्वयमनुक्ते प्रयोजने प्रयोजनान्तरमपि भाष्यकारादयो वदेयुरिति सम्भावयन् स्वोक्तमेव कथं ते वदेयुरित्येवमर्थं स्वयमुक्तवान् ॥ १६ ॥

अत्र चोदयति सिद्धार्थमिति । ज्ञातप्रयोजनं ज्ञातसम्बन्धं च शास्त्रं श्रोतुं श्रोतारः प्रवर्तन्ते । तस्मात् प्रयोजनवदेव सम्बन्धोऽपि शास्त्रावतारहेतुभूतः शास्त्रादावेव वक्तव्यः । 'अनेन सम्बन्धेनेदं शास्त्रमायात' मिति । यथा शास्त्रान्तरेषु 'अथातो धर्मं व्याख्यास्याम' इत्यादिषु शिष्यप्रश्नानन्तर्यरूपसम्बन्धोऽभिधीयते । अन्यथा ह्यसङ्गताभिधायिता सूत्रकारस्याशङ्क्य श्रोतारो नातीव तद्वचने श्रद्दधीरन्निति ॥ १७ ॥

परिहरति शास्त्रमिति । नात्र जैमिनेः शास्त्रारम्भे शिष्यप्रश्नानन्तर्यादिरूपः सम्बन्धो हेतुः, किन्तु योऽयं पूर्वोक्तेन प्रयोजनेन सह शास्त्रस्य साध्यसाधनसम्बन्धः स एव शास्त्रारम्भहेतुरिति विनैव शिष्यप्रश्नादिना स्वयमेव भगवान् जैमिनिर्लोकहितार्थं धर्मज्ञानसाधनभूतं शास्त्रमारब्धवान् । स चायं सम्बन्धः सम्बन्धिनोरभिधानादेवार्थाज्ज्ञात इति न कण्ठेनोक्तः ॥ १८ ॥

---

१. 'पीष्टं'—ख
२. 'तेनोक्तम्'—ख
३. 'गृह्येयुस्तत्'—ग
४. 'कर्तव्यः'—क

सिद्धिः श्रोतृप्रवृत्तीनां सम्बन्धकथनाद्यतः ।
तस्मात् सर्वेषु शास्त्रेषु सम्बन्धः [1]पूर्वमुच्यते ॥ १९ ॥

यावत् प्रयोजनेनास्य सम्बन्धो नाभिधीयते ।
असम्बद्धप्रलापित्वाद् भवेत् तावदसंगतिः ॥ २० ॥

इह त्वाक्षिप्य सम्बन्धं भाष्य एवाऽभिधास्यते ।
धर्मप्रसिद्ध्यसिद्धिभ्यां[2] तस्मान्नान्योऽभिधीयते ॥ २१ ॥

न चाप्यत्राऽथशब्देन शास्त्रसम्बन्ध उच्यते ।
सम्बन्धं क्रिययोर्ह्येष ब्रूते शास्त्राच्च ते पृथक् ॥ २२ ॥

पुनश्चोदयति सिद्धिरिति द्वयेन। अर्थोक्तो ऽयं सूत्रकारेण सम्बन्धो भवद्भिर्व्याख्यातृभिः कथनीय उपपादनीयः । अत एव हि शास्त्रान्तरेषु सम्बन्ध उपपाद्यते । यावद्धचयं सम्बन्धः प्रयोजनेन सह साध्यसाधनरूपो नोपपाद्यते तावदस्याऽनुपपत्ति मन्यमानाः श्रोतारोऽसम्बद्धप्रलापित्वं सूत्रकारस्य मन्यमानाः शास्त्रस्याऽसङ्गतिमेव मन्येरन् । अतोऽयं सम्बन्ध उपपादनीयः, सम्बन्धान्तरं वा वक्तव्यमिति ॥१९॥२०॥

परिहरति इह त्विति । भाष्यकारैरेवाऽयं सम्बन्धो धर्मप्रसिद्धचप्रसिद्धिभ्यामाक्षिप्य समाधास्यते, अतो नेदानीमस्माभिरुपपाद्यते, न च सम्बन्धान्तरमभिधीयते ॥२१॥

केचित्तु सौत्रेणैवाथशब्देनाध्ययनक्रियानन्तर्यरूपः शास्त्रसम्बन्ध उक्त इति मन्यन्ते, तान्निराकरोति न चापीति । किमिति नोच्यतेऽत्त आह सम्बन्धमिति । अध्ययनजिज्ञासाक्रिययोर्हि सम्बन्धमथशब्दो ब्रूते, ते च क्रिये शास्त्रादत्यन्तभिन्ने । न हि जिज्ञासाशब्दो मीमांसापर्यायः, येन शास्त्रसम्बन्ध उच्येत । सन्नन्तत्वसाम्यात्तु तयोरेकार्थत्वभ्रमो भवताम् । श्रोतृक्रिया हि ज्ञानेच्छा जिज्ञासा, वक्तृक्रिया तु विचारात्मिका मीमांसा, कुतस्तयोरैक्यम् ? न चाध्ययनानन्तरं जैमिनिना शास्त्रं प्रणीतम् । अतोनानेन शास्त्रसम्बन्ध उच्यत इति । मा भूदानन्तर्यं शिष्यप्रश्नदेवताराधनरसायनादिक्रियानन्तर्यरूपो गुरुपर्वक्रमात्मको वा सम्बन्धः शास्त्रस्योच्यतामिति चेत्, तदपि तावज्जिज्ञासाशब्दस्य शास्त्रवचनत्वाऽभावादेवायुक्तम् ॥ २२ ॥

---

१. 'पृथगु'—ख

२. धर्मः प्रसिद्धो वा स्यादप्रसिद्धोवा ? स चेत् प्रसिद्धो न जिज्ञासितव्यः । अथाऽप्रसिद्धो ? नतराम् । तदेतदनर्थकं धर्मजिज्ञासाप्रकरणम् । अथवाऽर्थवत् । धर्मं प्रति हि विप्रतिपन्ना बहुविदः इ० ( शा० भा० सू० १ )

' योऽप्ययं शास्त्रसम्बन्धो वर्ण्यते कैश्चिदादितः ।*
क्रियाऽऽनन्तर्यरूपो वा गुरुपर्वक्रमोऽपि वा ॥ २३ ॥
तदतद्भावयोस्तस्य विशेषो नोपलभ्यते । □
श्रोतुर्विधौ निषेधे वा ज्ञाने वा शास्त्रगोचरे ॥ २४ ॥
तस्माद् व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः । △
शास्त्रावतारसम्बन्धो वाच्यो नान्यस्तु निष्फलः ॥ २५ ॥

निष्प्रयोजनश्चायं पक्ष इत्याह योऽपीति ॥ २३ ॥

न ह्येवं सम्बन्धतद्भावाऽतद्भावयोः श्रोतॄणां शास्त्रश्रवणे प्रवृत्तौ निवृत्तौ वा शास्त्रगोचरे वा ज्ञाने कश्चिद्विशेषः । विधिनिषेधाभ्यां तत्कार्यभूते प्रवृत्तिनिवृत्ती लक्षयति । पर्वाऽवच्छेदः, गुरुपर्वणां क्रमो गुरुपर्वक्रमः । तद्यथा 'ब्रह्मा प्रजापतये मीमांसां; प्रोवाच सोऽपीन्द्राय सोऽप्यादित्याय स च वसिष्ठाय सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय सोऽपि जैमिनये स च स्वोपदेशानन्तरमिमं न्यायं ग्रन्थे निबद्धवानिति । सोऽयमेवंविधः सम्बन्धो निष्फलो निर्हेतुकश्च । न ह्यस्मिन् सम्बन्धे किञ्चित् प्रमाणमस्तीति ॥२४॥

उपसंहरति तस्मादिति । वेदव्याख्यात्मकस्य मीमांसाशास्त्रस्याऽङ्गभूतं सम्बन्धमिच्छद्भिः सप्रमाणकः सप्रयोजनकश्च सम्बन्धो वाच्यः । स च पूर्वोक्त एव । अन्यस्तु निष्फलो न वाच्यः । शास्त्रमवतारयतीति शास्त्रावतारः ॥२५॥

---

* काणादे हि तंत्रे क्रियानन्तर्यरूपः संबंधो दर्शितः । एवं हि तत्र भाष्यकारेणोक्तम्—"को धर्म इत्यादिकान् शिष्येणोदीरितान् पञ्च प्रश्नान् अपेक्ष्याह—"अथातो धर्मं व्याख्यास्याम" इति ।

* "योऽप्ययं शास्त्रसम्बन्धः" इति वार्तिकेन निराकार्यस्वरूपोपन्यासः ।

□ विधिनिषेधयोः कार्ये प्रवृत्तिनिवृत्ती, नहि तत्रैतादृशेन संबंधेन कोऽपि विशेष उपलभ्यते ।

□ "तदतद्भावयोस्तस्य इति वार्तिकेन निराकरणहेतुरुक्तः ।

△ शास्त्रमवतार्यतेऽनेनेति करणे घञ् । शास्त्रावतारश्चासौ संबंधश्चेति शास्त्रावतारसम्बन्धः । स चोपायोपेयलक्षणः । ( काशिका )

△ "तस्माद्व्याख्याङ्गमिच्छद्भिः" इति वार्तिकेन उपसंहारः । तथाच—न चायमथशब्दः शिष्यप्रश्नानन्तर्यलक्षणगुरुपर्वक्रमलक्षणसम्बन्धप्रतिपादको वा व्याख्यायते, अप्रवृत्त्यङ्गत्वेन तयोरवाच्यत्वात् ।

## शबरस्वामिकृतम् भाष्यम्[1]

लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति संभवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम्; नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा। एवं वेदवाक्यान्येवैभिर्व्याख्यायन्ते।

लोकइत्यादिभाष्यस्य षडर्थान् संप्रचक्षते।
भाष्यकाराऽनुसारेण [2]प्रयुक्तस्यादितः पृथक् ॥ २६ ॥
सर्वव्याख्यामुपालम्भं प्रत्याख्यानं तथाऽपरे।
परिसंख्यास्तुस्ती केचिदथशब्दस्य दूषणम् ॥ २७ ॥
साधारणी विशिष्टा च सूत्रव्याख्या द्विधा [3]मता।
विशिष्टा प्रतिसूत्रं या सर्वार्था त्वियमुच्यते ॥ २८ ॥

भाष्यमिदानीमनुसन्धत्ते **लोके** इति। ननु यत्रैव भाष्यं सङ्गच्छते स एवार्थः। कथं षडर्थत्वमत आह **भाष्येति**। सर्वत्रैव भाष्यं सङ्गच्छत इति भावः। ननु सन्निधिविशेषादेतत्सूत्रगताऽथशब्ददूषणमेवार्थो नार्थान्तरमत आह **प्रयुक्तस्यादित इति**। शास्त्रादौ प्रयुक्तमिदं भाष्यम्। अतः सर्वव्याख्यादीनामेतदेव स्थानमिति न स्थानतो विशेषलाभः। तथापि सकृदुच्चरितस्य कथमनेकार्थत्वमत आह **पृथगिति**। नैते समुच्चीयन्तेऽर्थाः, किन्तु पृथक्पृथगेतानर्थान् व्याख्यातारः प्रचक्षते केचिदन्यं केचिदन्यमिति। किञ्चाऽनेकार्थत्वमपि पौरुषेयस्य सम्भवत्येव श्वेतो धावतीत्यादिवत्। तदिदं प्रयुक्तग्रहणेन सूचितं वेदितव्यमिति ॥ २६ ॥

तानेव षडर्थान् उपदर्शयति सर्व व्याख्यामिति ॥२७॥

सर्वव्याख्यां विवृणोति **साधारणीति**। सर्वसूत्रसाधारणीयं व्याख्या लोकइत्यादिना क्रियते ॥२८॥

---

१. 'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

वृत्तिग्रन्थस्य भाष्यत्वनिवारणार्थं वाक्यैरितिविशेषणम्। वार्त्तिकादिव्यावृत्त्यर्थं सूत्रानुकारिभिर्वाक्यैरिति। 'स्वपदानिच वर्ण्यन्ते' इत्येतावन्मात्राभिधाने संग्रह–विवरणरूप–प्रकरणेतिव्याप्तिः इत्यत उक्तं सूत्रार्थोवर्ण्यत इति।

२. 'प्रयुक्तः'—क

३. 'कृता'—ख

प्रवृत्तिस्तु पदेष्वेव निवृत्तिः सूत्रसंश्रया ।
वेदवाक्याऽविरुद्धेषु नतु सर्वेषु केषु चित् ॥ २६ ॥ *

* अध्याहारस्य वाक्येषु □ व्यत्यासस्यच [1]संभवः ।
तेनैषामिति सूत्राणां पारार्थ्ये सत्यपि ग्रहः ॥ ३० ॥

अत्र भाष्ये सूत्रेषु पदानि प्रसिद्धार्थान्येवेत्यवगन्तव्यमिति प्रवृत्तिमुपदिश्य नाऽध्याहारादिभिरेषां कल्पनीयोऽर्थं इति निवृत्तिरुपदिष्टा । तत्र एषामिति सर्वनाम्ना पूर्वप्रकृतप्रधानपरामर्शात् सूत्राणां च सप्तम्या पदविशेषणार्थत्वात् प्रधानभूतानां पदानामेव परामर्शात् प्रवृत्तिवन्निवृत्तिरपि पदविषयेति प्रतिभाति, तथा न मन्तव्यमित्याह प्रवृत्तिरिति । सति सम्भवे इत्यस्यार्थमाह वेदवाक्येति । यदेतत् प्रसिद्धार्थग्रहणम् अध्याहारादिवर्जनञ्च तन्न सर्वेषु किन्तु केषुचिदेव वेदवाक्याऽविरुद्धेष्वित्यन्वयः ॥२६॥

किमिति पुनर्निवृत्तिः सूत्रसंश्रयेत्यत आह अध्याहारस्येति । प्राप्तिपूर्वको हि प्रतिषेधः, न चाध्याहारव्यहितकल्पनयोः पदे प्राप्तिः, न्यूनपदाप्रयोगात्, नियतक्रमत्वाच्च प्रकृतिप्रत्यययोः । विपरिणामगुणकल्पने तु यद्यपि पदाधारे तथापि पदानामेव संहतानां वाक्यत्वाद्वाक्याधारतापि सम्भवति । तेन निषेध्यानां सर्वेषां प्राप्तिः सूत्रेष्वेव सम्भवतीति परार्थानामपि तेषामेव परामर्श इति ॥३०॥

---

* अत्र येयं प्रसिद्धार्थग्रहणं कर्तव्यमिति प्रवृत्तिः, सा पदेषु । या च वाक्यदोषाणामध्याहारादीनां निवृत्तिः सा सूत्रेषु । नैषामध्याहारादिभिरर्थवर्णनं कार्यमित्यर्थः । 'वेदवाक्याविरुद्धेष्वि' त्यनेन 'सतिसंभव' इति भाष्यस्यार्थमाह —वेदवाक्याऽविरुद्धेषु पदेषु सूत्रेषु च प्रसिद्धार्थग्रहण प्रवृत्तिः अध्याहारादिनिवृत्तिश्च, नान्यत्रेत्यर्थः । पदसूत्रयोः पौर्वापर्यविवक्षया भाष्यकारस्यापि पदार्थपूर्वको वाक्यार्थोऽभिमत इति सूच्यते ।

* अध्याहारो नाम न्यूनवाक्यपूरणसमर्थाधिकपदाहरणात्मकः ।

□ व्यत्यासो हि व्यवहितकल्पना, सा च अन्यत्र स्थितस्य अन्यत्र संचारः ।

□ निषेध्यानामध्याहारादीनां साक्षात् पारम्पर्येण वा वाक्य एव संभवः । वाक्यं हि नाम न पदेभ्यो व्यतिरिक्तमन्यदेव किमपि तत्त्वम् । अपि तर्हि पदान्येव एककार्यपरिष्वङ्गसमासादितसमन्वयानि ।

१. 'सम्भवात्' —क

भा० — इतरथा वेदवाक्यानि व्याख्येयानि स्वपदार्थाश्च व्याख्येया इति प्रयत्नगौरवं प्रसज्येत ।

एवशब्दोऽल्पवाच्यत्वादस्याऽऽवृत्तौ तु गौरवम् ।
प्रसिद्धत्वादवाच्यं चेन्न दोषः पुङ्गिरामयम् ॥ ३१ ॥
व्याख्याङ्गत्वाऽभिमानेन योऽध्याहाराद्यपेक्षते ।
स्वसंज्ञां वापि तस्येदं शास्त्ररूपं निरूप्यते ॥ ३२ ॥
वृत्त्यन्तरेषु केषांचिल्लौकिकाऽर्थव्यतिक्रमः ।
शब्दानां दृश्यते तेषामुपालम्भोऽयमुच्यते ॥ ३३ ॥
अथात इत्ययं *लोके नाऽऽनन्तर्ये प्रयुज्यते ।
तस्मात् तादर्थ्यमेतस्य परिभाषादिभिर्भवेत् ॥ ३४ ॥

एवं साधारणव्याख्यां कृत्वा किं पुनरस्याः प्रयोजनमित्याशङ्क्य भाष्यकारेणोक्तम् 'एवं वेदवाक्यान्येवैभिर्व्याख्यायन्त' इति । अस्यायमर्थः—एवं साधारणव्याख्यायां कृतायामनेनैव ज्ञातार्थैः सूत्रैर्वेदवाक्यान्येव व्याख्येयानि भविष्यन्ति, न पुनः सूत्राण्यपीति । तत्र विशेषव्याख्यानस्यापि करिष्यमाणत्वात् कथमेवशब्द इत्याशङ्क्याह एवशब्द इति । अनयैव गतार्थप्रायेषु पश्चादल्पमेव वक्तव्यं भवतीति अल्पत्वादसत्त्वमुपचर्य एवशब्दः प्रयुक्त इति । इतरथेत्यादि प्रसज्येतेत्यन्तं भाष्यं[२] तस्यार्थमाह अल्पेति । भाष्ये व्याख्येयानीत्यत्र प्रकृतं व्याख्यानं परामृशति अस्येति । अस्य व्याख्यानस्य वेदे सूत्रे चावृत्तौ सत्यां यत्नगौरवं स्यादितरथेत्यादिना भाष्येणोक्तमिति । अत्र चोदयति प्रसिद्धत्वादिति । सति सम्भवे प्रसिद्धार्थग्रहणम् अध्याहारादिवर्जनञ्च प्रसिद्धमेवेति मन्दफलं साधारणं व्याख्यानमिति । परिहरति न दोष इति । प्रसिद्धवचनत्वं पुंवाक्यानां गुणो, न दोष इति ॥ ३१ ॥

अथैतेनाऽपरितोषस्तत एवं वक्तव्यमित्याह व्याख्येति । शास्त्रान्तरेषु सूत्राणामध्याहारपरिभाषादिभिर्व्याख्यानं दृष्ट्वा व्याख्यानस्यैवेदमङ्गमिति यो मन्यते तस्य । तं प्रतीदं शास्त्ररूपम् अनेन भाष्येण निरूप्यते, अध्याहारादिकं नास्मिन्नपेक्ष्यत इति ॥ ३२ ॥

उपालम्भपक्षं परिगृह्णाति वृत्त्यन्तरेष्विति । केषाञ्चिद्भवदासादीनां वृत्त्यन्तरेषु ॥ ३३ ॥

कीदृशः पुनरुपालम्भ इति तत्स्वयं दर्शयति अथात इति । पदद्वयमर्थद्वयवाचि लोकप्रसिद्धमपि भवदासेनैकपदीकृत्यानन्तर्यमात्रार्थं व्याख्यातं तच्चायुक्तमित्युपालम्भ इति ॥ ३४ ॥

---

* लोक्यते इति लोकः वृद्धव्यवहारः । तत्र अथातः शब्दयोः पृथक् पदत्वमेव दृश्यते । यथा भुक्तवानयमथ व्रजतीति । न भुक्तवानतो न व्रजतीति ।

प्रसिद्धहानिः शब्दानामप्रसिद्धे च कल्पना ।
न कार्या वृत्तिकारेण सति सिद्धार्थसंभवे ॥ ३५ ॥

सूत्रार्थे [1]क्लिश्यतश्चैवं दूरे वेदार्थनिर्णयः ।
तत्र यत्नस्य भारत्वं वक्तृश्रोत्रोः प्रसज्यते ॥ ३६ ॥

न व्याख्यास्यति सूत्राणि चोदनार्थपरत्वतः ।
यत् तस्य परिहारोऽयं प्रत्याख्यानेन [2]चोच्यते ॥ ३७ ॥

प्रयासो वेदवाक्येषु कार्यः सूत्रेष्वनेन किम् ।
फलवत्त्वाऽफलत्वाभ्यामेभिः करणसंमतैः ॥ ३८ ॥

चोदनार्थ उपेतव्यो नोभयं यत्नगौरवात् ।
पदार्थानां प्रसिद्धत्वाद् व्याख्येयं नावशिष्यते ॥ ३९ ॥

अत्रैव भाष्यं योजयति **प्रसिद्धहानिरिति** द्वयेन ॥ ३५ ॥ ३६ ॥

प्रत्याख्यानपक्षं परिगृह्णाति **न व्याख्यास्यतीति** । भाष्यकारो हि सूत्राणि पठित्वाऽनन्तरं वेदवाक्यान्युदाहृत्य तदर्थनिर्णये यत्नं करिष्यति, न सूत्रव्याख्याने । तेनैवमाशङ्का भवति, यदेतत्केवलं चोदनार्थपरो भूत्वा सूत्राणि न व्याख्यास्यति तत्किमनर्थत्वादेषामाहोस्विदर्थापरिज्ञानाद्, उताऽव्याख्येयत्वादिति, तत्परिहारोऽयं प्रत्याख्यानेनैवोच्यते न व्याख्येयानीति ॥३७॥

प्रत्याख्याने कारणमाह **प्रयास** इति श्या मन्तेन । फलवन्ति हि वेदवाक्यानि धर्मप्रमापणात्, अतस्तेषु सफलो व्याख्याप्रयासः । सूत्रेष्वफलत्वात् किं प्रयासेनेति । अतस्तैरुपायभूतैश्चोदनार्थ उपेतव्यः व्याख्येय इत्याह **एभिरिति** । तदिदमेव 'वेदवाक्यान्येव एभिर्व्याख्यायन्ते' इत्यादिना भाष्येणोक्तम् ॥३८॥

अथ मा नाम केवलानि सूत्राणि व्याख्यायन्तामुभयन्तु किमितिनोपेयतइत्याह **नोभयमिति** । तदिदमितरथेत्यादिना भाष्येणोक्तम् । ननूपायभूतानि सूत्राण्यविज्ञाय कथं तैर्वेदवाक्यान्युपेतुं शक्यन्तेऽत आह **पदार्थानामिति** । सत्यम्, ज्ञातव्यार्थानि सूत्राणि, न तु तान्यव्याख्यातदुर्ज्ञानानि । पदार्थास्तावल्लोकप्रसिद्धास्तत एव च वाक्यार्थोऽपि प्रसिद्ध इति न किंचिद्व्याख्येयमवशिष्यते । तदिदं 'लोके' इत्यादिनोक्तम् ॥३९॥

---

१. 'क्लिश्यते'—क

२. 'वोच्यते'—ख

'एवं' शब्दादिको ग्रन्थः पक्षे चास्मिन् समर्थ्यते ।
पदच्छेदाद्यभावेन प्रत्याख्यानमतिस्त्वियम् ॥ ४० ॥
ब्रवीत्येव हि सूत्रार्थमतिरिक्तादि [1]चेष्यते ।
[2]नन्वशक्तमिदं सूत्रं सम्यक् सूत्रित मित्यपि ॥ ४१ ॥

सूत्रे चागमकत्वादि प्रत्याख्याने विरुध्यते ।
न चोपायाऽनभिज्ञेन शक्योपेयाऽवधारणा ॥ ४२ ॥

नाऽन्यतो वेदविद्भ्यश्च सूत्रवृत्तिक्रियेष्यते ।
प्रत्याख्यानस्य हेतुश्च पदार्थानां प्रसिद्धता ॥ ४३ ॥

योक्ता सा [3]वेदवाक्यानां तुल्यार्थत्वान्निवारयेत् ।
वाक्यार्थे तत्र सन्देहाद् व्याख्यानं चेत् प्रवर्तते ॥ ४४ ॥

अस्मिश्च पक्षे सर्वथैव सूत्राणामव्याख्यानादेव यत्नगौरवशब्दौ समञ्जसावित्याह एवंशब्दादिक इति । प्रत्याख्यानपक्षं तावद् दूषयति पदच्छेदादीति पादत्रयेण । स्थूलदृशामेषां पदच्छेदाद्यकरणादव्याख्यानभ्रान्त्याप्रत्याख्यानमतिः । निपुणतस्तु निरूप्यमाणे ब्रवीत्येव सूत्राणां तात्पर्यतोऽर्थमिति न प्रत्याख्यानोपपत्तिः । किञ्च न्यूनातिरिक्तं सूत्रेष्वपेक्षत इत्याह अतिरिक्तेति । अत्रैवोदाहरणान्याह । नन्विति चोदनासूत्रे 'नन्वशक्तमिदं सूत्र' मिति न्यूनत्वं चोदयित्वा परिहरिष्यति । तथाच 'अर्थैकत्वादेकं वाक्यं साकाक्षंचेद्विभागे स्यात्, ( जै०सू०अ०२पा०१सू०१४ ) इत्यत्र किमर्थमुभयं सूत्रितमिति अतिरेकं चोदयित्वा परिहृत्य सम्यक् सूत्रितमिति वक्ष्यति । 'विशये प्रायदर्शनात्, ( जै० सू० अ० २ पा० ३ सू० १६ ) इत्यत्रागमकं सूत्रमिति न्यूनतां चोदयित्वा [4]परिहारं च वक्ष्यति, तदिदं सर्वं प्रत्याख्याने विरुध्येतेति । किञ्चोपायभूतानि सूत्राण्यनभिज्ञाय कथं तैर्वेदवाक्यार्थो ज्ञायते अतस्तान्यपि व्याख्येयानीत्ययुक्तं प्रत्याख्यानमित्याह न चेति ॥ ४० ॥ ४२ ॥

मा नाम सूत्रैर्वेदार्थो ज्ञायताम्, अन्यतस्तु ज्ञास्यतइत्यत आह नान्यत इति ।

यत्तु ज्ञातव्य एव सत्यं सूत्रार्थः न तु व्याख्येयः प्रसिद्धत्वादिति, तदनु भाष्ये परिहरति प्रत्याख्यानस्येति । अत्राशङ्कते[5] वाक्यार्थे इति ॥ ४३ ॥ ४४ ॥

---

१. 'चेक्षते'—ग
२. 'नत्वशक्तमिति'—ग
३. 'पदवा'—ग
४. 'न्यूनतावोध्यं परिहारं'—ङ
५. 'शङ्कयते'—ख

सूत्रेष्वपि समानत्वात् प्रत्याख्यानं न युज्यते।
न व्याख्यातव्यमित्येव प्रत्याख्याने च सिध्यति ॥ ४५ ॥

दुष्टव्याख्यानिषेधेन तदपेता न वार्यते।
अस्य दृष्टविरुद्धत्वात् फल्गुत्वाच्चापि पूर्वयोः॥ ४६ ॥

मध्यमे चातिदौर्जन्यात्[१] परिसंख्यैव युज्यते।
वैदिकं जैमिनीयं च यत्र वाक्यं विरुध्यते। ४७ ॥

यथाश्रुतगृहीतेऽर्थे तत्रेदमुपदिश्यते।
अध्याहारादिभिः सूत्रं [२]वैदिकं तु यथाश्रुतम् ॥ ४८ ॥

नेयं विरोधेऽन्योन्यस्य वैदिकानां भवन्तु ते।
यथा धर्मावबोधस्य प्रमाणं वैदिक वचः ॥ ४६ ॥

परिहरति सूत्रेष्वपीति। भाष्यमपीदं नातीव प्रत्याख्याने समर्थमित्याह न व्याख्यातव्यमिति। प्रत्याचिख्यासुर्न व्याख्यातव्यमित्येवावक्ष्यत्, अध्याहारादिभिर्न कल्पनीयोऽर्थ इति दुष्टव्याख्याया एव निषेधाद्दोषापेता व्याख्या न वार्यतइति।

तदेवमस्य प्रत्याख्यानपक्षस्य प्रत्यक्षदृष्टव्याख्याविरुद्धत्वात् पूर्वयोश्च सर्वव्याख्योपालम्भयोर्मन्दफलत्वेन फल्गुत्वान्मध्यमस्य चोपालम्भस्य दौर्जन्यापादकत्वात् न्यायाभासप्राप्तवेदवाक्याऽन्यथाकरणनिवारणेन महाफला ऽनुक्तदुर्ज्ञाता च परिसंख्यैवास्य भाष्यस्यार्थं इत्याह अस्येति।

परिसंख्याविषयं स्वरूपं चाह वैदिकमिति नेय मन्तेन। यत्र वेदसूत्रयोर्यथाश्रुतगृहीतार्थयोर्विरोधस्तत्र वेदं यथाश्रुतं व्याख्याय सूत्रमध्याहारादिभिर्नेयमिदमनेन भाष्येणोपदिश्यते इति।

ननु सूत्रवशेन वेदाऽन्यथाकरणमपि दृश्यते। 'वेदो वा प्रायदर्शनात्' ( जै० सू० अ० ३ पा० ३ सू० २ ) इति सूत्रे ऋगादिशब्दानां लक्षणया वेदपरत्वव्याख्यानादत आह विरोधे इति। नेदं सूत्रविरोधाद्वेदाऽन्यथाकरणं किन्तु वैदिकेनैवोपक्रमेण विरोधात्। तेन वैदिकानामेव मिथो विरोधे भवन्तु दुर्बलस्य लक्षणादयः। वेदसूत्रविरोधे तु सूत्रस्यैवाऽन्यथाकरणमिति।

ननु प्रधानभूतवेदविरोधे गुणभूतानां सूत्राणामन्यथाकरणं प्रसिद्धमिति मन्दफलैव परिसंख्याऽत आह यथेति।

---

१. 'दौर्बल्यात्'—ख
२. 'व्याख्येयं'—क

तदर्थनिर्णये हेतुर्जैमिनीयं तथैव नः ।
वाक्यसामर्थ्यतुल्यत्वात् तथा पदतदर्थयोः ॥ ५० ॥

अध्याहारादि[1]भिर्मुक्ता व्याख्या सर्वत्र युज्यते ।
असम्भवादवश्यं या विरोधेऽन्यतरस्य तु ॥ ५१ ॥

[2]अन्याय्यकल्पना सापि विकल्पेन प्रसज्यते ।
प्राथम्येनावरुद्धत्वादुपाय[3]वशतोऽथ वा ॥ ५२ ॥

यथाश्रुतेन सूत्रेण न्याय्यां बाधेत चोदनाम् ।
तेन [4]वेदाऽविरोधस्य सति सम्भवइत्ययम् ॥ ५३ ॥

सत्यमेवं न्यायः, तथापि न्यायाभासात्सूत्रकारबहुमानाच्चैवं श्रोतारो भ्राम्येयुः नास्माकं वेदसूत्रयोः कश्चिद्विशेषः । यथैव हि धर्मविबोधस्य वैदिकवाक्यं प्रमाणं तथैव वेदार्थनिर्णये सूत्रमेवाऽस्माकं प्रमाणमिति । न चान्योऽपि कश्चिद्वेदसूत्रयोर्विशेषः, येन सूत्राणामध्याहारादिकं युज्येत, न वेदानाम् । अतः सर्वत्र वेदे सूत्रे चाध्याहारादिनिर्मुक्तैव व्याख्या युज्यत इत्याह वाक्येति ।

ननु यत्रोभयोर्यथाश्रुतग्रहणाऽसम्भवस्तत्र गुणत्वात्सूत्राणामेवाऽन्यथाकरणमत आह असम्भवादिति । येयमुभयोर्यथाश्रुतार्थाऽसम्भवेनाऽन्यतरस्याऽन्याय्यकल्पना साऽप्यगृह्यमाणविशेषत्वादुभयोर्विकल्पेनैव प्रसज्यतइति ।

अथवा सूत्राणि वेदार्थज्ञानोपायत्वात्प्रथमोपनिपातीन्यसञ्जातविरोधित्वाद्यथाश्रुतानि गृहीत्वा तद्वशेन चोदनामेव न्याय्यामबाध्यां बाधेत । अतस्तन्निवृत्तयेऽर्थवत्येव परिसंख्येत्याह प्राथम्येनेति ।

अत्रैव भाष्यं योजयति तेनेति । यदेतत्प्रसिद्धार्थग्रहणमध्याहारपरिभाषादिवर्जनं च यत्नगौरवभयादाश्रयणीयं प्राप्तमित्यनूद्य, तत्सर्वं वेदाऽविरोधसम्भवे सति नासतीत्ययमर्थो भाष्येण विधीयते । वेदग्रहणं न्यायस्याप्युपलक्षणार्थम् । सति सम्भवे कर्तव्यमित्येवं विधिरूपस्य वाक्यस्याऽसति सम्भवे नेत्येवं निषेधपरत्वात्परिसंख्यात्वमिति ।

---

१. 'निर्मुक्ता'—ग
२. 'अन्यायकल्पना'—ग
३. 'वशगो'—ग
४. 'वेदाविरुद्धस्य'—घ

विधीयतेऽर्थः, शेषं तु यथाप्राप्तमनूद्यते ।
* 'शेषभाजां भवेल्लोप' इत्यध्याहारकल्पना ॥ ५४ ॥
'विप्रकर्षात्' पशोश्चेति विभक्तिः [1]परिणम्यते ।
पदेन व्यवधानं तु 'लोके संनियमा' दिति ॥ ५५ ॥

क्व पुनरसम्भवादध्याहाराद्याश्रितमिति तदुदाहरणानि दर्शयन् अध्याहारोदाहरणं तावदाह शेषभाजामिति । दर्शपूर्णमासयोः प्रधानार्थस्याऽवदानस्य नाशदोषापहारेषु सत्सु शेषादवदानं पूर्वपक्षीकृत्य हविरन्तरोत्पादने सिद्धान्तिते शेषकार्यार्थं गृहीतस्याऽवदानस्य नाशादौ सति किं कर्तव्यमित्यपेक्षायां सूत्रम् 'अपि वा शेषभाजां स्यात्' ( जै० सू० अ० ६ पा० ४ सू० ३ ) इति । अत्र किं स्यादित्यस्याऽनिर्देशाद् अनन्तरोक्तं हविरन्तरोत्पादनं सम्बध्यते, तच्चाऽयुक्तम् । न हि प्रतिपत्तिर्द्रव्यं प्रयुङ्क्ते । अथ तद्व्यावृत्तिसमर्थादपिवाशब्दात्तत्रत्यपूर्वपक्षोक्तं शेषाऽवदानं सम्बध्यते, तदप्ययुक्तम् । शेषस्य प्रतिपत्त्यन्तरगृहीतस्य नष्टाऽवयवपूर्वप्रतिपत्तिसम्बन्धाऽभावात् । तस्माल्लोप एवास्यां दशायां युज्यते इति लोपपदाध्याहारः कल्पयिष्यते ॥ ४५-५४ ॥

विपरिणाममुदाहरति विप्रकर्षादिति । ज्योतिष्टोमे सौत्येऽह्नि सवनीयः पशुः सवनीयाश्च पुरोडाशाः । तत्र पशुतन्त्रस्य पुरोडाशेषु प्रसङ्गार्थं पशुतन्त्रमध्ये पुरोडाशानां विधानं प्रतिपादयितुं सूत्रम् 'पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात्' (जै० सू० अ० १२ पा० २ सू० ३२ ) इति । अत्र तन्त्रमध्ये विधानं साध्यत्वात्प्रथमार्हं न पञ्चम्यर्हमिति पञ्चमी प्रथमया विपरिणम्यते । तथा विप्रकर्षोऽपि वपायाः प्रातःसवनइत्यादिप्रत्यक्षवचनसिद्धत्वाद्धेतुत्वेन पञ्चमीमर्हति न प्रथमामिति पञ्चम्या विपरिणम्यते । तदयमर्थः—पशोश्च विप्रकर्षात् तत्तन्त्रमध्ये पुरोडाशानां विधानमिति ।

अथ व्यवहितकल्पनामुदाहरन् पदव्यवधिं तावदुदाहरति पदेनेति । लौकिकवाक्यवद्वैदिकवाक्यमपि पौरुषेयमित्युक्ते वैषम्यप्रदर्शनार्थं सूत्रम्—'लोके सन्नियमात् प्रयोगसन्निकर्षः स्यात्' ( जै०सू०अ०१पा०१सू० २६ ) इति । अत्र लोक इत्यस्य पदस्य सन्नियमप्रयोगपदव्यवहितेन सन्निकर्षपदेन सम्बन्धः । लोके चक्षुरादिसन्निकर्षादर्थस्य तद्विषयःशब्दप्रयोगः सन्नियम उपपद्यते, न तु वेदे । अतीन्द्रियार्थत्वादर्थस्येति । तदिदं विपरिणामोदाहरणमपि सम्भवत्तस्योदाहृतत्वाद् व्यवहितकल्पनाया एवोदाहरणमिति ॥ ५५ ॥

---

* 'अपि वा शेषभाजां स्यात्' अत्र 'लोप' पदाऽध्याहारेण अयमर्थः क्रियते- शेषं भजन्ते यानि इडाप्राशित्रादीनि, तेषां द्रव्यान्तरप्रयुक्तिशक्तेरभावात् विद्यमानशेषस्य प्रतिपत्त्यन्तरसम्बन्धाल्लोपः अकरणमेव स्यात् ।

१. 'परिणंस्यते'—ग

सूत्रेण व्यवधानं तु पानव्यापदि कल्पितम् ।
पशुसामान्यविध्यादौ सूत्रमेवाऽन्यथा कृतम् ॥ ५६ ॥
अग्नयश्च स्वकालत्वाद्देयधर्माऽपयातनम्[1] ।
व्याख्यानं[2] वाक्यभेदेन' गुणकल्पास्त्वमी कृताः ॥ ५७ ॥

सूत्रव्यवधिमुदाहरति सूत्रेणेति । अश्वप्रतिग्रहेष्टिर्लौकिके अश्वप्रतिग्रहे वैदिके वेति संशये 'दोषात्त्विष्टिर्लौकिके स्यात्' (जै०सू०अ०३पा०४सू०३४) इति पूर्वपक्षमुक्त्वा 'अर्थवादो वाऽनुपपातात्तस्माद्यज्ञे प्रतीयेत'(जै०सू०अ०३पा०४सू०३५)इति सिद्धान्तितम् । ततः 'सौमैन्द्रं चरुं निर्वपेदिति सोमपानव्यापदि विहितश्चरुर्लौकिके वैदिके वेति संशये 'पानव्यापच्च तद्वत्' (जै०सू०अ०३पा०४सू०३८) इति सूत्रम् । तत्र सूत्रत्रयव्यवहितो लौकिकपक्षस्तद्वदिति प्रत्यवमृश्यते इति ।

सूत्राऽन्यथाकरणमुदाहरति—पश्विति । ज्योतिष्टोमे पशुधर्मविधिः किं त्रयाणामपि पशूनां साधारणः, अथवा सवनीयस्यैव, अथवा ऽग्नीषोमीयसवनीययो, रुताऽग्नीषोमीयस्यैवेति संशये 'तुल्यः सर्वेषां पशुविधिः प्रकरणाऽविशेषात्' (जै०सू०अ०३ पा०६सू० १८) इति सूत्रम् । तदिदं सर्वपशूनां समानो विधिरित्यस्याद्यपक्षस्य प्रतिपादकमपि सत् 'स्थानाच्च पूर्वस्य' (जै०सू०अ०३पा०६सू०१९) इत्यादिसूत्राऽसङ्गतिप्रसङ्गात्तत्सङ्गतिसिद्धयर्थमाद्यपक्षमुत्सूत्रं कृत्वा सवनीयस्यैवेत्यस्मिन् पक्षेऽन्यथा कृत्वा योजितं 'तुल्यः सर्वेषां पशुविधिः स्याद्यदि प्रकरणे विशेषो न भवेत्, भवति तु प्रकरणे विशेष' इति ॥ ५६ ॥

वाक्यभेदमुदाहरति॰अग्नय इति पादत्रयेण । 'ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात्' (जै० सू० अ० ३ पा० ७ सू० ३९) इत्येतत्सूत्रं वाक्यभेदमाश्रित्याऽधिकरणान्तरं व्याख्यातम् । तथा 'अभ्युदये दोहापनयः सधर्मः स्यात्प्रवृत्तत्वात्' (जै० सू० अ० ६ पा० ४ सू० ४१) 'शृतोपदेशाच्च' (जै० सू० अ० ६ पा० ४ सू० ४२) इति सूत्रद्वयेनाऽभ्युदितेष्टौ दधिशृतयोर्देयस्वधर्माः कर्तव्या इत्युक्त्वा 'अपनयो वाऽर्थान्तरे विधानात् चरुपयोवत्'( जै० सू०· अ० ६ पा० ४ सू० ४३) 'लक्षणार्था शृतश्रुतिः' (जै० सू० अ० ६ पा० ४ सू० ४४) इति सूत्रद्वयेन देयधर्माणामपयातनमुक्तम् । तदिदं पूर्वयोः सूत्रयोरनयोश्च वाक्यैकभावेनैकाधिकरण्यादभ्युदितेष्ट्यामेव देयधर्माऽपयातनमुच्यतइति प्रतिभासमानमपि ततो भित्त्वाऽधिकरणान्तरं पशुकामेष्टिविषयं व्याख्यातम् ।

---

१. 'धर्मावपातमम्'—क
२. 'व्याख्यातम्'—क

* औत्पत्तिकस्तु गव्यस्य तथोष्णिक्ककुभोरिति ।
दर्शनाच्च विशेषस्य तथाऽभ्युदय इत्यपि ॥ ५८ ॥

सूत्रकारप्रशंसा वा 'लोक' इत्यादिनोच्यते ।
प्रसिद्धैरभिधानाद्धि न शिष्याः क्लेशिता यतः ॥ ५९ ॥

गुणकल्पनायामुदाहरणानि दर्शयति ∴ गुणकल्पास्त्विति सपादेन । औत्पत्तिकसूत्रे लक्षणयोत्पत्तिशब्देन स्वभावाभिधानम् । 'गव्यस्य च तदादिषु' ( जै० सू० अ० ८ पा० १ सू० १८ ) इत्यत्र गव्यशब्देन गोविकारतदवयववाचिना 'गावो वा एतत्सत्रमासत' इत्यर्थवादोदितगोसम्बन्धमात्रेण गवामयनस्याभिधानम् । तदयमर्थः— गवामयनस्य विध्यन्तः संवत्सरसत्रेष्वतिदिश्यत इति । तथा सामिधेनीविवृद्धावागम्यमानानाम् ऋचां सर्वासां 'समिध्यमानवतीं समिद्धवतीं चान्तरा निवेश' इति पूर्वपक्षमुक्त्वा 'या एव धाय्याशब्दितास्तासामेव तत्र निवेशो नाऽन्यासाम् । आगन्तूनामन्ते निवेश इति सिद्धान्तमुक्त्वा तल्लिङ्गमिदमुच्यते 'उष्णिक्ककुभोश्चान्ते दर्शनात्' ( जै० सू० अ० ५ पा० ३ सू० ६) इति ।' अत्रोष्णिक्ककुप्शब्देन 'त्रिष्टुभो वा एतद्वीर्यं यदुष्णिक्ककुभा' वित्यर्थवादात्कारणे कार्यवदुपचारात् त्रिष्टुबुच्यते । तदेष सूत्रार्थः—त्रैधातव्यायामधाय्याशब्दिता 'अग्ने त्री ते वाजिना त्री षधस्थे' ति त्रिष्टुबन्ते दृश्यते 'त्रिष्टुभा परिदधाती' ति । तस्मादधाय्याशब्दितानामन्ते निवेश इति । तथा दर्शनाच्च विशेषस्य तथाभ्युदये इत्यत्र अभ्युदयशब्देनाऽभ्युदयसाधनभूतो द्वादशाहो लक्ष्यते । तदयमर्थः—द्वादशाहे अर्द्धिनः पादिनस्तृतीयिन इति समाख्याविशेषदर्शनात्तदनुरूपः प्रकृते दक्षिणाविभागः सर्वर्त्विजां न समो, न प्रयासानुरूप इति ५७ ॥ ॥ ५८ ॥

✦✦ स्तुतिपक्षमिदानीं परिगृह्णाति सूत्रकारेति । कीदृशी पुनः प्रशंसेति तां दर्शयन् भाष्यं योजयति प्रसिद्धैरिति ॥ ५९ ॥

---

* उत्पत्तिशब्दो हि उत्पत्तिलक्षितोत्पद्यमानसमवेतसत्तागुणयोगात् शब्दार्थयोर्वर्तमानो गौणो भवति । अतश्च शब्दार्थस्वरूपाधीनः सम्बन्ध इत्युक्तं भवति । तत्स्वरूपनित्यत्वाच्च सम्बन्धोऽपि नित्य इति विवक्षितसिद्धिः ।

∴ कल्पनं कल्पः गुणानां कल्पो गुणकल्पः । गौणो हि गुणादेव अन्यवचन शब्द अन्यत्र कल्प्यते, यथा—अग्निर्माणवकः ।

✦✦ यस्तु उभयप्राप्तेर्मन्दत्वात् परिसंख्यामपि नानुमन्यते, सम्प्रति अर्थान्तरमाह । भाष्यकारो हि शिष्यान् आत्मानं न सूत्रकारप्रशंसया प्रयोजयति ।

* भवितव्यं तु तेनेति प्रागस्मादेकवाक्यता ।
वेदाध्ययनवाक्याद्वा तेनाथेत्यस्य दूषणम् ॥ ६० ॥
प्रसिद्धार्थपदैः शक्यः सूत्रैर्वेदार्थनिर्णयः ।
न च सोऽस्त्यथशब्दस्य विना[1] ते पूर्वकर्मणा ॥ ६१ ॥
[1]प्रसिद्धार्थं पदं युक्तं तच्च नास्तीति दूषणम् ।
प्रसिद्धोऽप्यथशब्दादेः किं पदार्थोऽत्र वर्ण्यते ॥ ६२ ॥
प्रदर्शनार्थमित्येके केचिन्नानार्थवाचिनः[2] ।
समुदायादवच्छिद्य भवदासेन कल्पितात् ॥ ६३ ॥
शङ्कितोऽवयवञ्चैव[3] वर्णयन्त्यष्टमादिवत् ।
न चात्र चोदनाव्याख्या गौरवं तत्र चोदितम् ॥ ६४ ॥

उपयोगमान्द्यात् स्तुतिपक्षमनादृत्य सम्प्रत्यथशब्ददूषणपक्षं परिगृह्णाति **भवितव्यमिति**। 'भवितव्यं तु तेनेत्यतः' 'तत्तु वेदाध्ययनमित्यतो' वा प्रागेकवाक्यभूतेन 'लोक' इत्यादिना भाष्येणाऽथशब्ददूषणमुच्यत इति ॥ ६० ॥

प्रथमावधिना भाष्यं योजयति **प्रसिद्धार्थेति** ॥ ६१ ॥

परावधिना योजयति **प्रसिद्धार्थमिति**। 'भवितव्यन्तु तेने' त्यस्याऽर्थकथनं '**प्रसिद्धार्थं पदं युक्तमिति । तच्च नास्तीति** चाभिप्रायपूरणमिति । अत्र चोदयति **प्रसिद्धोऽपीति**। सर्वव्याख्यादिषु पञ्चस्वपि पक्षेषु प्रसिद्धार्थग्रहणस्योक्तत्वात् अथशब्दादीनां पदार्थकथनं किमर्थमिति ॥ ६२ ॥

परिहरति **प्रदर्शनार्थमिति**। परिहारान्तरमाह **केचिदिति**। नानार्थमपि पदद्वयमेकीकृत्याऽऽनन्तर्यमात्रार्थतया भवदासेन कल्पितं पृथक्कृत्याऽवयवस्यैवाथ-शब्दस्याऽष्टमाद्याथशब्दवदानन्तर्यार्थत्वं स्वयुक्त्या वर्णयितुं पदार्थकथनमिति ।

परिहारान्तरमाह **न चेति**। उभयव्याख्यायां हि यत्नगौरवम् । न चात्र चोदना काचिदपि व्याख्यायते । सूत्रमपि चेन्न व्याख्यायेत निर्विषयमेव भाष्यं स्यादिति ॥ ६३ ॥ ६४ ॥

---

* ये तु स्तुतौ वा अस्तुतौ वा तावानेव अर्थ इति न स्तुतावाद्रियन्ते, तान् प्रति अथशब्ददूषणपरमिदं भाष्यम् ।

१. 'प्रसिद्धार्थपदैर्युक्तम्'—ख,

२. 'वादिनः'—ख,

३. 'वयवस्यै'—ख

भा०—तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः; न चेह किञ्चिद् वृत्तमुपलभ्यते। भवितव्यन्तु तेन, यस्मिन् सत्यनन्तरं धर्मजिज्ञासाऽवकल्पते; तथा हि—यः प्रसिद्धपदार्थकः स कल्पितो भवति। तत्तु वेदाध्ययनम्, तस्मिन् हि सति साऽवकल्पते।

यद्वाऽऽक्षेपो यथोक्तस्य वृत्ताभावादसम्भवात्।
यदि लोकप्रसिद्धार्थग्रहणं क्रियते [1]पदे ॥ ६५ ॥
स नास्त्यत्राऽथशब्दस्येत्यध्याहारादिकल्पनम्।
वेदाऽध्ययनवृत्तत्वं स्नानस्योत्कर्षकल्पना ॥ ६६ ॥
नाऽव्याख्यातेऽथशब्दार्थे ज्ञायते तेन वर्ण्यते। *
अनर्थकेऽथ वाऽन्यार्थे प्रसिद्धिर्बाध्यते ध्रुवम् ॥ ६७ ॥

परिहारान्तरमाह यद्वेति। यत्प्रसिद्धार्थग्रहणं तदेव 'तत्र लोक' इत्यादिना भाष्येणाऽथशब्दस्य वृत्ताभावेनाऽऽनन्तर्यार्थत्वाऽसम्भवेनाऽऽक्षिप्यते। कृते चाक्षेपे तत्समाधानाय युक्तमेव पदार्थकथनमिति। आक्षेपभाष्यं 'तत्रलोक' इत्यादिकं व्याचष्टे यदि लोकेति ॥ ६५ ॥

परिहारान्तरमाह वेदाध्ययनेति। नेदमथशब्दव्याख्यानं तत्स्वरूपपरम्, किन्तु अथशब्दव्याख्याने सति चोद्यपरिहारक्रमेण वेदाध्ययनवृत्तत्वं स्नानस्योत्कर्षकल्पना च वक्तव्या भवति तदर्थमिदं व्याख्यानम्। अव्याख्याते ह्यथशब्दे विवक्षितमपि तदसङ्गतत्वान्न वक्तुं शक्येतेति।

अत्र पञ्चसु पक्षेषु यत्नगौरवपर्यन्तं पृथग् वाक्यम्। तत्र लोक इत्यादि तु वाक्यान्तरमथशब्ददूषणार्थम्, तस्य चावधिद्वयं पूर्ववद् द्रष्टव्यम्। तत्र भवितव्यमित्यादेः पूर्वेण दूषणग्रन्थेनैकवाक्यभूतस्य योऽर्थः स व्याख्यातः। प्रथमावधिपक्षे तु भवितव्यमित्यादिः परिहारग्रन्थः। तस्यार्थमाह अनर्थके इति। अथशब्दस्यानर्थक्येऽर्थान्तरवाचित्वे वा प्रसिद्धिबाधादानन्तर्यार्थत्वे स्थिते तद्बलेनैव किमप्युपपादकं कल्पनीयमिति सामान्योत्तरम्। 'तत्तु वेदाध्ययन'मिति विशेषो दर्शितः। यदा तु 'भवितव्यमिति' दूषणभाष्यं तदा तु वेदाध्ययनमित्येवोत्तरमिति ॥ ६६ ॥ ६७ ॥

---

१. पूर्वव्याख्यायां हि "भवितव्यं तु तेन" इति प्रागस्मात् सकलमिदं पूर्वपक्षभाष्यम्, इदानीं तु "लोके" इत्यादि गोरवपर्यन्तं सिद्धान्तभाष्यम्।

* "भवितव्यं तु तेन" इत्यादि सिद्धान्तभाष्यं, तस्याभिप्रायमाह "अनर्थक" इति। श्रुतानन्तर्यान्यथानुपपत्त्या किमपि वृत्तं गम्यते। आनन्तर्ये हि अथशब्दार्थे प्रसिद्धार्थता। आनर्थक्यान्यार्थत्वयोस्तु प्रसिद्धिबाधः।

भा०—नैतदेवम् । अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा युक्ता, प्रागपि च वेदाध्ययनात् ।

[1]तस्माच्छ्रुताऽर्थसिद्ध्यर्थं वृत्तं किमपि गम्यते ।
विशिष्टलिङ्गविज्ञानादविशिष्टे लिङ्गिनीक्षिते ॥ ६८ ॥

सूत्रेणाऽसम्भवं मत्वा नैतदित्यब्रवीत् परः ।
आनन्तर्योपदेशेन तद्दृष्टार्थतयाऽपि च ॥ ६९ ॥

वेदाध्ययनमाक्षिप्तं किमसूत्रितचोदना ।
येन वृत्तेन जिज्ञासा विना नैवोपपद्यते ॥ ७० ॥

तदानन्तर्यमुक्तं हि दृष्टार्थमवकल्पते ।
क्रियमाणा च[2] जिज्ञासाऽनियमाद् यस्य कस्य चित् । ७१ ॥

क्रियेताऽनन्तरैवेति व्यर्थं तदुपदेशनम् ।
संकल्पादिभिरप्येषा विना सत्यं न सिध्यति ॥ ७२ ॥

साधारण्यात् तु[3] तेऽप्यत्र नोपदेश्याः कथंचन ।
तस्माद् धर्मबुभुत्सायामसाधारणकारणम् ॥ ७३ ॥

अपरमपि 'अन्यस्यापि' इति चोद्यभाष्यं तदयुक्तम्, धर्मजिज्ञासात्मकलिङ्ग-बलेनैव वेदाध्ययनस्यैव लिङ्गिनो वृत्तत्वनिर्णयादत आह **विशिष्टेति** । सत्यमेवं, तथापि सूत्रेणाऽस्यार्थस्याऽसम्भवं मत्वा चोदितवानिति ।

एतदेव विवरितुं पृच्छति **आनन्तर्येति** । सूत्रेणैवानन्तर्योपदेशात् तस्य च दृष्टार्थत्वाद् वेदाध्ययनमाक्षिप्तमेवेति असूत्रितत्वोपालम्भो न युक्त इति । यथा च दृष्टार्थतया वेदाध्ययनाक्षेपस्तथा दर्शयति **येनेति** ॥ ६८ ॥ ७० ॥

यथा चानन्तर्योपदेशेन तदाक्षेपः तथा तमुपदर्शयति **क्रियमाणेति** । यत्किञ्चि-दानन्तर्यं तावद्धर्मजिज्ञासायाः स्वभावत्वादनुपदेश्यम् । अतस्तदुपदेशे तावत्क्रिया-विशेषानन्तर्यमेव विवक्षितमिति निश्चिते दृष्टार्थतया वेदाध्ययनानतर्यं निश्ची-यत इति ।

ननु सङ्कल्पोऽपि दृष्टोपकार्येव । तदानन्तर्यमिदं कस्मान्न भवति अत आह **सङ्कल्पादिभिरिति** । सर्वक्रियासाधारणत्वात् ते नोपदेश्या इति । उपसंहरति **तस्मादिति** ।

---

१. 'तस्मात्स्मृतार्थं'—ख, २. 'पि'—ख' ३. 'णा'—क

निर्वृत्तं सूत्रकारेष्टं तच्च नाध्ययनादृते ।
अन्यस्यापीत्यीनेनैव वेदपाठे [1]प्रबाधिते ॥ ७४ ॥

प्रागपीति न वक्तव्यं तत्राऽप्यन्यस्य सम्भवात् ।
पूर्वेणैव हि लब्धार्थे 'तादृशीं' त्वित्यनेन किम् ॥ ७५ ॥

वक्ष्यमाणमनालोच्य सम्भवेत् परिचोदना ।
न तावत् साध्यते ऽद्यापि चोदना धर्मसाधनम् ॥ ७६ ॥

इह वा [2]कानि वाक्यानि विवरिष्यति जैमिनिः ।
धर्ममात्राभिधानाद्धि बुद्धादिवचनान्यपि ॥ ७७ ॥
पठित्वा धर्मजिज्ञासेत्यन्यस्यापीति [3]चोदना ।
यद्वा भवतु नामेदृक् सूत्रं वेदमधीत्य तु ॥ ७८ ॥

जिज्ञासाऽनन्तरं कार्येत्यत्रापि द्वयमीप्सितम् ।
नाऽनधीत्य न चाप्यन्यत् कुर्वेत्येतन्न[4] लभ्यते ॥ ७९ ॥

अपरमपि "प्रागपि च वेदाध्ययना" दिति चोद्यभाष्यं, तदाक्षिपति अन्यस्यापीति । यदैव ह्यन्यस्यापीति वेदाध्ययनमतन्त्रीकृतं तदैवाविशेषेण प्रागपि प्रसक्तिरुक्तैवेति 'प्रागपी'ति पुनरुक्तमिति । तादृशीं त्वित्यादिपरिहारभाष्यं च "तत्तु वेदाध्ययनमि"-त्यनेन पुनरुक्तमित्याह पूर्वेणेति । तत्रापि हि "तस्मिन् हि सति सा ऽवकल्पते" इति जिज्ञासाऽनुपपत्त्यैव वेदाध्ययनाक्षेप उक्तः । अत्रापि वेदाध्ययनमन्तरेण न सम्भवतीति तावन्मात्रमेवोच्यते । अतः पुनरुक्तमिति ॥ ७१ ॥ ७५ ॥

एवमाक्षेपे सति चोद्यं तावत्समाधत्ते वक्ष्यमाणमिति । एतदेव विवृणोति न तावदिति द्वयेन । न हि अद्यापि वेदार्थ एव धर्म इति ज्ञातं, नापि वेदवाक्यान्येव जैमिनिर्विचारयिष्यतीत्येतदपि ज्ञायते, धर्ममात्रं तु श्रुत्वा चैत्यवन्दनादीनामपि धर्मत्वं भगवांश्चोदितवान्, अन्यस्यापि बुद्धवाक्याऽध्ययनादेरनन्तरं धर्मजिज्ञासा युक्तेति नैकान्ततो वेदाध्ययनानन्तर्यं तस्या इति । अत्र च पक्षे "प्रागपि च वेदाध्ययनात्" इति भाष्यं भिन्नक्रमं योजनीयम् । अपि च प्राग्वेदाध्ययनात् धर्मजिज्ञासा कर्त्तव्या अतो नाऽध्ययनानन्तर्यं तस्या इति । तथा हि—हानोपदानार्थं जिज्ञासा प्रागेव हानोपादानाभ्यां कर्त्तव्या । अतो धर्मं जिज्ञासित्वा वेदार्थ एव धर्म इति ज्ञात्वा पश्चाद्धर्माऽवबोधाय वेदोऽध्येय इति ।

---

१. 'ऽव'—ख
२. 'तानि'—क
३. 'चोद्यते'—ख
४. 'व न'—ख

वक्ष्यमाणवचोभङ्ग्योर्वाक्यभेदप्रसङ्गतः ।
अधीत्यैवेति हि विधौ स्नानादेरप्यनन्तरा ॥ ८० ॥

भवेद् धर्मस्य जिज्ञासा नाऽनन्तर्यविधिस्तदा ।
आनन्तर्यविधाने[1] तु या वेदाऽध्ययने कृते ॥ ८१ ॥

वक्ष्यमाणाऽऽलोचनेऽपि सम्भवत्येव चोद्यमित्याह यद्वेति चतुर्भिः । 'वेदमधीत्याथाऽतो धर्मजिज्ञासा' इतीदृशमिदं सूत्रमङ्गीकृत्यैव चोद्यम् । अत्रहि द्वयमीप्सितम् । अधीत्यैव नाऽनधीत्येति । तथाऽनन्तरमेव नान्यत्कृत्वेति । तच्चैकस्मिन् वाक्ये न लभ्यते । "वेदमधीत्येत्येकस्यां विधीयतेऽनूद्यानन्तर्यं, विपरीतमन्यस्याम्" इति वक्ष्यमाणभाष्योक्तवचोभङ्गिद्वयप्रसङ्गेन वाक्यभेदप्रसङ्गात् । अत एकस्मिन्नेव विधातव्ये यदि अधीत्यैवेति विधीयते तत्रेदं चोद्यम् । अन्यस्यापि स्नानादेरनन्तरं धर्मजिज्ञासा युक्ता । न हि तदानीमानन्तर्यस्य विधिरिति । अथ त्वनन्तरमेवेति विधिः, ततो या वेदमधीत्य जिज्ञासेत्येवमध्ययनपश्चाद्भाविनीं जिज्ञासामनूद्य तस्या एवानन्तर्यं विधीयते । ततश्च प्राग्वेदाध्ययनाद् धर्मजिज्ञासा न केनचिद्वारितेति प्रागपि वेदाध्ययनात् स्यादिति चोद्यम् ॥ ७६ ॥ ८१ ॥

भा० — उच्यते- तादृशीं तु धर्मजिज्ञासामधिकृत्याऽथशब्दं प्रयुक्तवानाचार्यः, या वेदाऽध्ययनमन्तरेण न सम्भवति । कथम् ? वेदवाक्यानामनेकविधो विचार इह वर्तिष्यते ।

इत्येवमनुवादत्वात् प्रागप्येषा प्रसज्यते ।
बुद्धवाक्यादिपाठस्य 'तादृशीं' त्वित्यपाक्रिया ॥ ८२ ॥

एवं चोद्याभिप्रायं व्याख्याय 'तादृशीं' त्वित्यादि परिहाराभिप्रायमाह बुद्धेति । यत्तावद्वक्ष्यमाणाऽनालोचनेनाऽन्यस्यापि बुद्धवाक्यादिपाठस्याऽनन्तरं धर्मजिज्ञासेति चोद्यं, तस्य 'तादृशी' मित्यनेन 'वेदवाक्यानामनेकविधो विचार इह वर्त्तितव्य' इति वक्ष्यमाणप्रदर्शनेनोत्तरम् । यदपि हानोपादानार्थं जिज्ञासा प्रागेवाध्ययनात्कर्त्तव्येति चोद्यं, तस्याप्येतदेवोत्तरम् । अनेकविधवेदवाक्यविचारार्था जिज्ञासा न प्रागध्ययनात्सम्भवतीति ।

नन्वनवगते वेदार्थस्य धर्मत्वे कथं तदर्थं वेदाध्ययने प्रवर्त्तन्ते, हितकारिभिः पित्रादिभिः प्रवर्त्तिताः प्रवर्त्तन्त इत्यदोषः । यदपि वचोव्यक्तिद्वयाऽसम्भवादन्यतरग्रहणे चेतरस्याऽविधानाच्चोद्यं, तत्रानन्तर्यविधानं परिगृह्णीताम् । तत्परिग्रहाच्चान्यस्यापीति चोद्यं नावतरति ॥ ७६ ॥ ८२ ॥

---

१. 'धित्वे'—ख

भा०— अपिच नैव वयमिह वेदाध्ययनात्पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः; परस्ताच्चानन्तर्यम्। नह्येतदेकं वाक्यं पुरस्ताच्च वेदाध्ययनाद् धर्मजिज्ञासां प्रतिषेधिष्यति, परस्ताच्चानन्तर्यं प्रकरिष्यति। भिद्येत हि तथा सति वाक्यम्। अन्या हि वचनव्यक्तिरस्य, पुरस्ताद् वेदाध्ययनाद् धर्मजिज्ञासां प्रतिषेधति। अन्या च परस्तादानन्तर्यमुपदिशति। 'वेदमधीत्य – इत्येकस्यां विधीयतेऽनूद्याऽऽनन्तर्य्यम् विपरीतमन्यस्याम्। अर्थैकत्वाच्चैकवाक्यतां वक्ष्यति।

किन्तु, अधीते वेदे द्वयमापतति — गुरुकुलाच्च समावर्तितव्यम्, वेदवाक्यानि च विचारयितव्यानि। तत्र गुरुकुलान्मा समावर्तिष्ट, कथं नु वेदवाक्यानि विचारयेत् इत्येवमर्थोऽयमुपदेशः।

प्रागपीति च चोद्यस्य सामर्थ्याद्वेदलाभतः।
'नैवैतयोर्वचोभङ्ग्योरेकोऽप्यर्थो [1]विधीयते ॥ ८३ ॥
अपि चेत्यादिकेनोक्तं' किंत्वित्येतद् विधीयते।
आनन्तर्यं [2]परस्ताच्च नापि शिष्म इतीह तु ॥ ८४ ॥
केचिदध्याहरन्त्यस्य सूत्रस्याऽन्यपरत्वतः।
न वार्यतेऽनधीतत्वं नाऽनन्तर्यं विधीयते ॥ ८५ ॥

यत्तु तथा सत्यधीत्यैवेत्यविधानात् प्रागपि स्यादिति चोद्यं, तस्यापि 'तादृशी' मित्येतदेवोत्तरमित्याह प्रागपीति। कथमित्याह सामर्थ्यादिति। वेदवाक्यविचारो हि नाऽनधीतवेदस्य सम्भवति। अतः सामर्थ्यसिद्धत्वादध्ययनस्याधीत्यैवेत्यविधावपि न प्राक् प्रसक्तिः।

'अत्राऽपरम् 'अपि च' इत्यादि भाष्यं तस्यार्थमाह नैवेत्युक्त मन्तेन। एते वचोव्यक्ती, तयोरेकोऽपि श्रौतोऽर्थो न विधीयते। तदिदम् 'अपि चे' त्यादिना 'वक्ष्यती' त्यन्तेन भाष्येणोक्तमिति ॥ ८३ ॥

किं तर्हि विधीयते ? तत्राह किं त्विति। 'किंत्वधीते वेदे' इत्यादिना 'एवमर्थ उपदेश' इत्यन्तेनोक्तं, गुरुकुलवासाऽवसानस्य स्मार्त्तस्य निवारणमस्मिन् सूत्रे विधीयत इति। अस्मिंश्च वाक्ये केचिदध्याहरन्तीत्याह आनन्तर्यमिति। "नैव वयमिह वेदाध्ययनात्पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्म" इत्यस्यानन्तरं नापि परस्तादानन्तर्यं शिष्म इत्यध्याहरन्ति। अध्याहारे कारणमाह अस्य सूत्रस्येति। गुरुकुलवासनिवृत्तिव्यावृत्तिपरत्वात्सूत्रस्य। तत्परत्वमेव कुतः, कथं चेदं सूत्रं गुरुकुलनिवासनिवृत्तिव्यावृत्तिं दर्शयति ? न हि तदनुरूपाणि सूत्रे पदानीत्यत आह न वार्यत

---

१. 'ऽभि'—ख २. 'पुर'—क

भा०—यद्येवं, न तर्हि वेदाध्ययनं पूर्वं गम्यते धर्मजिज्ञसायाः, एवं हि समामनन्ति 'वेदमधीत्य स्नायात्' इति। इह च वेदमधीत्य स्नास्यन् धर्मं जिज्ञासमानः इममाम्नायमतिक्रामेत्; न चाऽऽम्नायो नामातिक्रमितव्यः।

सामर्थ्यसिद्धयदृष्टार्थप्रसङ्गात् तेन लक्षगा।
आनन्तर्यवचोव्यक्तिराश्रितैवात्र लक्ष्यते ॥ ८६ ॥

श्रुतार्थं [1]त्वपरित्यज्य लक्षणार्थो विधीयते।
प्रतीता धर्मजिज्ञासा वेदाध्यायादनन्तरा ॥ ८७ ॥

तत्कालस्याऽवरुद्धत्वात् स्नानाभावं हि लक्षयेत्।
विरोधो युगपत्प्राप्तेर्दौर्बल्यं वेदबोधनात् [2] ॥ ८८ ॥

इति। न तावदधीत्यैवेत्येतद्विधातव्यं सामर्थ्यसिद्धत्वादित्युक्तम्। आनन्तर्यस्वरूपमप्यदृष्टार्थत्वान्न विधेयम्। नहि न्यायशास्त्रे युक्तमदृष्टार्थविधानम्; अतोऽन्यपरत्वमेव, लक्षणया च तत्परत्वं सिध्यतीति। तमिममध्याहारपक्षं दूषयति आनन्तर्येति। भाष्ये तावदानन्तर्यवचनव्यक्तिरत्राश्रितैव निषेधस्य श्रुतत्वाद् गम्यते।

न चैवमदृष्टार्थत्वमित्याह श्रुतार्थं त्विति। एतदुक्तं भवति—श्रुतार्थद्वारा हि लक्षणा अजहत्स्वार्था। तस्मादानन्तर्यवचनव्यक्तिमाश्रित्यैव श्रौततदर्थपरिग्रहे सत्यदृष्टार्थत्वाऽपाताल्लक्षणागम्यो गुरुकुलवासनिवृत्तिव्यावृत्तिरूपोऽर्थो विधीयत इति। केन पुनः सम्बन्धेन तद्व्यावृत्तिर्लभ्यतेऽत आह प्रतीतेति ॥ ८४ ॥ ८७ ॥

स्नानजिज्ञासे हि मिथो विरुद्धे। स्नानशब्देन ह्यत्र सकलब्रह्मचारिधर्मनिवृत्तिर्लक्ष्यते। अतो गुरुकुलवासस्याऽपि निवृत्तिः स्यात्, सा च विचारविरोधिनी विचारस्याप्यध्ययनवद्गुर्वधीनत्वाद्, विरोधिसत्ता च विरोध्यन्तराऽभावव्याप्ता। तेनाध्ययनानन्तरकाले जिज्ञासा प्रतीता सती तस्य कालस्य स्वेनाऽवरुद्धत्वात् स्वविरुद्धस्य स्नानस्याभावं लक्षयतीति।

ननु विरोधे सति लक्षयेन्न त्वत्रास्ति विरोधः पर्यायेणोभयसम्भवात्, अत आह विरोध इति। सत्यं पर्याये न विरोधः, युगपत्तु प्राप्तौ विरोधोऽस्ति, स्नानं हि वेदाध्ययनानन्तरमेव प्रतीयमानमुत्कर्षकारणाभावादनन्तरमेव प्राप्तं, धर्मजिज्ञासाऽप्यथशब्देन तस्मिन्नेवकाले प्रतीयमाना तेन विरुध्यते। ननु सत्यपि विराधे वाचनिकत्वेन स्नानस्य बलीयस्त्वान्न बाधो युक्तः, धर्मजिज्ञासैव तु न्यायप्राप्ता दुर्बलत्वात्तु बाधितव्या। तदिदं यद्येवमित्यादिना न चाम्नायोनामातिक्रमितव्य इत्यन्तेन भाष्येण चोदितम्।

---

१. 'तु प'—ख        २. 'बाधनात्'—ख

भा०— तदुच्यते – अतिक्रमिष्याम इममाम्नायम्, अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेम। दृष्टो हि तस्यार्थः कर्मावबोधनं नाम। न च तस्याऽध्ययनमात्रात् तत्रभवन्तो याज्ञिकाः फलं समामनन्ति; यदपि च समामनन्तीव, तत्रापि 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्' (जै०सू० ४-३-२) इत्यर्थवादतां वक्ष्यति।

न च 'अधीतवेदस्य स्नानानन्तर्यमेतद् विधीयते; न हि अत्र आनन्तर्यस्य वक्ता कश्चिच्छब्दोऽस्ति; पूर्वकालतायां 'क्त्वा' स्मर्यते, नाऽऽनन्तर्ये। दृष्टार्थता चाऽध्ययनस्याऽऽनन्तर्ये व्याहन्येत। लक्षणया त्वेषोऽर्थःस्यात्।

स्नानस्य तेन बाधः स्याद् धर्मजिज्ञासया बलात्।
'दृष्टार्थत्वादिसंयुक्तं वाक्य लक्षणया त्विति॥ ८९॥

पुनरुक्त्या गतार्थत्वात् त्यक्तं कैश्चित् तदुच्यते।
यद्यप्यस्य भवेद् वाच्यमानन्तर्यमसंशयम्॥ ९०॥

तत्परिहारभाष्यम् 'अतिक्रमिष्याम इत्याद्यर्थवादतां वक्ष्यती'त्यन्तम्, तस्यार्थमाह दौर्बल्यमिति। स्नानस्यैवात्र दौर्बल्यं, तदाश्रयणे समस्तस्यैव वेदस्याऽर्थावबोधार्थतयाऽध्ययनोपात्तस्य तदसाधनत्वेनानर्थक्यापत्तेः। तदिदमुक्तं "वेदमर्थवन्तं (प्रयोजनवन्तं) सन्तमनर्थकमवकल्पयेम" इति। नन्वदृष्टार्थता भविष्यति, कथमानर्थक्यमित्यत उक्तम्, "दृष्टो हि तस्यार्थः कर्मावबोधनं नाम" इति॥८८॥

किं च एकस्यापि वेदवाक्यस्य बाधे स्मृतिरप्रमाणं भवति। किं पुनः समस्तस्यैवानर्थक्यापत्तौ। तस्मात्स्नानस्यैव स्मार्त्तस्य धर्मजिज्ञासया बलवत्त्वाद्बाधः। स्वाध्यायविधिना ह्यर्थावबोधायाऽध्येतव्यो विहितो वेदो विचारमन्तरेण तादर्थ्याऽसम्भवाद्विचारमाक्षिप्य तद्विरुद्धं स्नानं बाधते इति।

एवं "स्मृतिविरोधाद्विचारो न कर्त्तव्य" इत्येतच्चोद्यं, विचार एव स्मृतिं बाधत इत्येवं परिहृतम्। इदानीं विरोधाभावादपि न स्मृतिर्विचारं बाधते इति दर्शयितुं भाष्यम्, न चाधीतवेदस्येत्यादि नानन्तर्यं (३) इत्येतदन्तम्। तस्यार्थः स्नानस्याध्ययनोत्तरकालमात्रं स्मृतावुक्तम्, उत्कर्षकारणाभावे त्वनन्तरं स्यात्। वेदविरोधेन त्वानन्तर्ये बाधितेऽपि न स्मृतेर्विरोध इति।

अपरमपि "दृष्टार्थता चाध्ययनस्यानन्तर्ये व्याहन्येत," "लक्षणयात्वेषोऽर्थः स्यात्" इति भाष्यद्वयम्, तत्र प्रथमं 'दृष्टो हि तस्यार्थः' इत्यनेन पुनरुक्तत्वाद् लक्षणयेति वा ज्ञातार्थत्वात्, कैश्चिद्व्याख्यातृभिः परित्यक्तम्, तत्तावदुपन्यस्यति दृष्टा-

भा०—न चेदं स्नानमदृष्टार्थं विधीयते, किन्तु लक्षणया अस्नानादिनियमस्य पर्यवसानं वेदाऽध्ययनसमकालमाहुः।

तथापि पूर्वतामात्रं लक्षयेदविरोधतः।
ग्रन्थग्रहणमात्रे च कृते स्नानं विरुध्यते॥ ९१ ॥
अधीत्येत्यंधिगम्येति व्याख्याने त्वविरोधिता।
यस्त्वेवमविरोधित्वं कुर्वन्नाप्लवनं वदेत्। ९२ ।
अदृष्टायाऽथवाऽप्यन्यः[1] संस्कार[2]स्तस्य चोत्तरम्।
इहाऽस्नानादिनियमो यः कृतो ब्रह्मचारिणः॥ ९३ ॥
अवधित्वमनाश्रित्य सोऽवसानमपेक्षते।
ततोऽपेक्षावशात्स्नानमस्नानादिनिवर्तनम् ॥ ९४ ॥
विरोधसाहचर्याभ्यां दृष्टार्थत्वेन लक्षयेत्।
तस्मादध्ययनस्नानजिज्ञासाक्रमवाचिनाम् ॥ ९५ ॥

र्थत्वादिति केश्चिदन्तेन। स्वयं तु समर्थयते तदुच्यत इति। पूर्वभाष्ये आनन्तर्यं 'क्त्वा' शब्दस्य न वाच्यमित्युक्तम्, इदानीं तु तस्यानन्तर्यं वाच्यं यद्यपि, तथापि श्रौतार्थपरिग्रहेऽध्ययनस्य दृष्टार्थता व्याहन्येतेति तदविरोधाय पूर्वकालतामात्रमेवार्थो लक्षणया ग्रहीतव्य इत्युच्यतइति। अपरमप्यविरोधकारणमाह ग्रन्थेति। इण् गतावित्यस्येदं रूपमित्यर्थः। एतच्चैवमपि सम्भवतीत्येतावन्मात्रेणोक्तम्॥८९॥९१॥

परमार्थतस्त्वध्ययनप्रकरणात्समुदायप्रसिद्धेर्बलीयस्त्वाच्चाध्ययनमेवार्थो नाऽधिगतिः।

'न चेदं स्नान' मित्यादिभाष्याऽर्थमाह यस्त्वेवमिति। एवं वक्ष्यमाणप्रकारेणाऽविरोधस्मृतेर्दुर्बलाप्लवनमात्रं ज्योतिष्टोमादिवत् फलार्थं दीक्षितस्नानवत् संस्काररूपं वा स्नानं स्मृत्यर्थं यो मन्यते तस्योत्तरमिदं भाष्यमिति। तदेवोत्तरं दर्शयति इहेति द्वयेन। ब्रह्मचारिधर्मस्याऽस्नानादिनियमस्याऽनिर्दिष्टावधेरवधिमपेक्षमाणस्याऽवधिविधिरयमपेक्षितत्वात्। नाऽऽप्लवनमात्रविधानमनपेक्षितत्वात्। अतः स्नानशब्देन स्वविरुद्धस्याऽस्नानस्य तत्सहचारिणां च धर्माणां निवृत्तिर्लक्ष्यते, वेदमधीत्य स्नायात्, अस्नानादिकं वर्ज्जयेत्, अध्ययनसमाप्तिरेव तस्याऽवधिरिति। सर्वधर्माणां चाध्ययनाङ्गत्वात्तत्समाप्तौ निवृत्तिर्न्यायप्राप्तैव, न्यायमूलत्वाच्च स्मृतेर्लक्षणार्थत्वमदोष इति।

प्रकरणार्थमुपसंहरति तस्मादिति। 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनवाचिनः शब्दस्यार्थावबोधनार्थत्वं यद्व्याख्यातं, यच्च स्नानशब्दस्याऽस्नानादिनिवृत्तिपरत्वं, यच्च जिज्ञासाक्रमवाचिनोऽथशब्दस्य गुरुकुलनिवृत्तिव्यावृत्तिपरत्वं, तत्र सर्वत्र दृष्टार्थत्वं कारणमिति।

---

१. 'न्यं'—ख २. 'रं त' ख

दृष्टार्थत्वाय शब्दानामेवं व्याख्येयमाश्रिता ।
स्नात्वा जिज्ञासमानोऽपि ननु वेदं न बाधते ॥ ९६ ॥
तेनाऽविरोधिता[1] तस्येत्येवं वदत उत्तरम् ।
यथैवाऽध्ययनात् स्नानं स्मर्यते समनन्तरम् ॥ ९७ ॥
तथा ततः परोऽप्यन्यः पदार्थोऽन्यः परस्ततः ।
ततश्चावश्यकर्तव्ये बाधे स्मार्तस्य कस्यचित् ॥ ९८ ॥
योग्यत्वादागते काले प्राथम्यात् स्नानबाधनम्' ।
सोऽयं पाठक्रमस्यार्थाद् बाध इत्यवगम्यते ॥ ९९ ॥
गुणप्रधानयोर्वापि विरोधाद् गुणबाधनम् ।
स्नानोपलक्षिता चात्र निवृत्तिर्गुरुवेश्मनः ॥ १०० ॥
विरोधित्वेन बाध्येत न तु मध्वादिभक्षणम् ।
तस्माद् गुरुकुले तिष्ठन् मधुमांसाद्यवर्जयन् ॥ १०१ ॥

अत्र चोदयति स्नात्वेति । स्नात्वापि ह्यर्थे जिज्ञास्यमाने वेदस्याऽऽनर्थक्यं न भवति, अतः स्मृत्यविरोधार्थमेवं क्रियताम् इति । परिहरति एवं वदत इति बाधन मन्तेन । भवेदप्येवं यद्यविरोधो भवेत्, एवमप्यस्ति विरोधः, 'स्नात्वा भार्याम् उपगच्छेदि' ति स्नानानन्तरं गार्हस्थ्यविधानात् । ततः परमपि 'कृष्णकेशोऽग्नीनादधीते' त्यादिश्रुतेराधानादिकर्त्तव्यम्, तदवश्यकर्त्तव्ये कस्यचिद्बाधेऽध्ययनानन्तरमुपनिपतितो विचारस्तत्कालवर्त्ति स्नानमेव बाधते। किं चाऽविदुषोऽधिकाराभावात्प्रागेव कर्मभ्यो विद्याऽर्ज्जयितव्या, न चान्तरेण विचारं तदर्ज्जनं सम्भवति । अतः स्नानात्प्रागेव विचारः कर्त्तव्य इति ।

एवं स्नानस्याध्ययनानन्तर्यबाधमुक्त्वाऽत्र वाधिकरणमुदाहरति सोऽयमिति । स्नानस्याध्ययनानन्तर्यं पाठप्राप्तमर्थक्रमेणाध्ययनप्रयोजननिबन्धनेन जिज्ञासानन्तर्येण बाध्यते, पाकहोमयोरिव अर्थक्रमो हि पाठक्रमस्य बाधक इति पञ्चमे वक्ष्यते । ननु क्त्वाप्रत्ययात् श्रुतिक्रमोऽयं न पाठक्रमः । सत्यम्, श्रुतिक्रमोऽपि भवन् स्मृतिगतत्वेन विप्रकृष्टार्थत्वात् पाठक्रमतुल्य इति पाठक्रम उच्यते । अथवा क्त्वाप्रत्ययस्य पूर्वकालवाचित्वात् तत्परश्रुत्यभावाभिप्रायेणोक्तमिति ।

अधिकरणान्तरमुदाहरति गुणेति । क्रमो हि पदार्थानामङ्गम् । तदिहाध्ययनस्नानयोरानन्तर्ये समाश्रीयमाणे प्रधानभूतमध्ययनमेव प्रयोजनाभावाद् बाधितं स्यात् । अतस्तदनुरोधेन क्रमस्यैव बाध इति । एवं स्मार्त्तस्य क्रमस्याऽविशेषेण बाधमभिधाय सम्प्रति क्रमं विशिनष्टि स्नानेति । स्नानलक्षिताया गुरुकुलनिवृत्तेरे-

---
१. 'शास्त्रं स्यादेवं'—ख

जिज्ञासेताऽविरुद्धत्वाद् धर्ममित्यवगम्यते ।
गुरुगेहनिवृत्त्यंशो याव'च्च न समाप्यते ॥ १०२ ॥

तावत् सकलवाचित्वान्न स्नानं पर्यवस्यति ।
गुरुगेहादनावृत्तः स्नातको हि' न कथ्यते ॥ १०३ ॥

वाध्ययनानन्तर्यं बाध्यते । तस्या एव विचारविरोधित्वात् । न तु मध्वादिभक्षणस्य, अविरोधित्वादिति । ततश्चैवमनुष्ठातव्यमित्याह तस्मादिति । किमेवं सति दारसंग्रहोऽपि कर्त्तव्यः ? नेत्याह गुरुगेहेति । गुरुगेहनिवृत्तिर्यावन्न भवति तावत्स्नानम् अस्नानादिनिवर्त्तनं स्मृत्युक्तं न पर्यवस्यति । तदपर्यवसाने च स्नातको न भवति । एतदेव वृद्धप्रयोगे दर्शयति गुरुगेहादिति । ॥ ९९ ॥ १०३ ॥

भा०—'वेदमधीत्य स्नायात्; गुरुकुलान्मा समावर्तिष्टेति' अदृष्टार्थतापरिहारायैव । तस्माद् वेदाध्ययनमेव पूर्वमभिनिर्वर्त्याऽनन्तरं धर्मो जिज्ञासितव्य इति 'अथ' शब्दस्य सामर्थ्यम् । न च ब्रूमः— अन्यस्य कर्मणोऽनन्तरं धर्मजिज्ञासा न कर्तव्येति, किन्तु वेदमधीत्य त्वरितेन न स्नातव्यम्, अनन्तरं धर्मो जिज्ञासितव्यइति 'अथ' शब्दस्यार्थः ।

तत्परत्वविधानाच्च न तावद् दारसङ्ग्रहः ।
व्याख्याय कीर्तिता चात्र स्नायादिति पुनः स्मृतिः । १०४ ॥

समावर्तिष्ट मेत्यादि स्मृतेर्यद्यप्यनन्तरम् ।
विपरीतार्थमित्यस्मात् तद्वाक्यादपनीयते ॥ १०५ ॥

अथशब्देन यो बाधः पुरस्तादुपवर्णितः ।

ततः किमित्यत आह तत्परत्वेति । स्नातकस्य हि भार्याधिगतिः स्मर्यते । न चाऽसमाप्तब्रह्मचारिधर्मः स्नातको भवति, अतो न दारसंग्रह इति । अत्र भाष्यं "वेदमधीत्य स्नायाद् गुरुकुलान्मा समावर्त्तिष्टेत्यदृष्टार्थतापरिहारायैव" इति । तदसंगतार्थं मत्वा भित्वा व्याचष्टे व्याख्यायेति । पूर्वमधीत्य स्नायात् इति अस्नानादिनियमपर्यवसानार्थतां स्मृतेर्व्याख्याय तामेवानुकीर्त्तितवान् । अयमेवार्थोऽस्याः स्मृतेरिति भाष्यार्थ इत्यर्थः ॥ १०४ ॥

गुरुकुलान्मा समावर्त्तिष्टेत्येतत्तु स्मृतिविपरीतार्थत्वात् ततोऽपनेतव्यमित्याह समावर्त्तिष्टेति ॥ १०५ ॥

अपनीतस्यार्थमाह अथेति । स्मृतेर्लक्षणार्थतामुक्त्वा तत्प्रसङ्गादथशब्दस्यानन्तर्यस्वरूपपरत्वं हित्वा गुरुकुलान्मा समावर्त्तिष्टेत्येवंपरत्वं यदुक्तं, तत्रापि

१. 'न्न च'—ख २. 'न हि' ख

तन्मात्रस्यैव बाधोऽत्र दृष्टार्थत्वात् प्रदर्शितः ॥ १०६ ॥
स्मृतिप्राप्तमिदानीं तु मधुमांसाद्यवर्जनम् ।
प्रतिषेधवन्नदृष्टार्थं सूत्रकारो न शोभते ॥ १०७ ॥
निवृत्त्य गुरुगेहाच्च[1] जिज्ञासार्थः पुनर्भवेत् ।
प्रवेशः सोऽप्यदृष्टार्थ इति नैवेह [2]सूत्रितः ॥ १०८ ॥
निर्गमो हि कृतार्थस्य दृष्टार्थो गुरुवेश्मनः ।
स्मर्यते तस्य नार्थः स्यादकृतार्थस्य [3]निर्गमे ॥ १०९ ॥

दृष्टार्थत्वमेव कारणम् इत्येतदनेनोच्यते, न हि भाष्यकारेणेदमुक्तम् इति । अथवा न सर्वस्य स्मृत्यर्थस्य बाधः, किंतु गुरुकुलनिवृत्तिमात्रस्येत्यत्रेदं दृष्टार्थत्वं कारणमित्याह तन्मात्रस्येति ॥ १०६ ॥

एतदेव विवृणोति स्मृतेति । इदानीमधीते वेदे स्मृतिप्राप्तं मधुमांसाद्यवर्ज्जनं धर्मजिज्ञासायामविरोधि प्रतिषेधवन्नदृष्टार्थत्वेन प्रतिषेधेन्न चैतद्युक्तमिति ॥ १०७ ॥

ननु स्मृतिबलेन गुरुगेहान्निवृत्तिः, पुनः प्रवेशे धर्मजिज्ञासायाः को विरोधः ? अत आह निवृत्येति । इदं चोद्यं प्रागन्यथा परिहृतम् । इदानीं त्वदृष्टार्थतया परिह्रियत इत्यपौनरुक्त्यम् । गुरुगेहावस्थितस्यैव ह्यकृतार्थस्य यद् गुरुगेहान्निवर्त्तनं प्रवेशश्च तदुभयमदृष्टार्थं स्यात् ॥ १०८ ॥

ननु 'वेदमधीत्य स्नाया' दिति वाचनिकं निष्क्रमणमदृष्टार्थतयापि क्रियमाणं न दुष्यति इत्यत आह निर्गम इति । सत्यं यद्यदृष्टार्थो निर्गमः स्यात्, अयन्तु कृतार्थस्याश्रमान्तरनिवेशाय गुरुगेहान्निर्गमो दृष्टार्थः स्मर्यते । अतोऽकृतार्थस्य निर्गमोऽनर्थक इति ॥ १०९ ॥

भा०—'अतः' शब्दो वृत्तस्यापदेशको हेत्वर्थः । यथा—क्षेमसुभिक्षोऽयम्, अतोऽहमस्मिन् देशे प्रतिवसामीति; एवमधीतो 'वेदो' धर्मजिज्ञासायां हेतुर्ज्ञातः, अनन्तरं धर्मो जिज्ञासितव्य इति 'अतः' शब्दस्य सामर्थ्यम् । धर्माय हि वेदवाक्यानि विचारयितुमनधीतवेदो न शक्नुयात्, अत एतस्मात् कारणात् अनन्तरं धर्मं जिज्ञासितुमिच्छेदिति 'अतः' शब्दस्यार्थः ।

अथशब्दप्रसिद्ध्यैव [4]वेदग्रहणहेतुता ।
आनन्तर्योपदेशित्वादतःशब्देन किं पुनः ॥ ११० ॥

अतः शब्दमिदानीं व्याचिख्यासुस्तावदाक्षिपति अथशब्देति । दृष्टार्थं ह्यध्ययनानन्तर्यम् । यदि चाध्ययनं जिज्ञासायां हेतुः स्यात्, ततस्तदानन्तर्यं दृष्टार्थं भवति नान्यथा । अतोऽथशब्देनैवाध्ययनहेतुता सिद्धेति किम् अतःशब्देनेति ॥ ११० ॥

---

१. 'वासाच्च'—ख २. 'संस्थितिः'—ख ३. निर्गमः—ख ४. 'वेदाध्ययन'—ख

योग्यत्वमथशब्देन यद्यपि [1]प्रतिपादितम् ।
तदेव हेतुरत्रेति नातः शब्दाद्विना भवेत् ॥ १११ ॥
लक्षणं पुरुषस्यैव तदा तद्धि प्रसज्यते ।
जिज्ञासायाश्च हेतुत्वे फलार्थित्वादि सम्भवेत् ॥ ११२ ॥
अतःशब्दगृहीतं वा तत्राऽध्ययनमाश्रितम् ।
हेतावकथ्यमाने हि मङ्गलाद्यर्थतां[2] वेदत् ॥ ११३ ॥
स्नानबाधस्य वा हेतुरत इत्युच्यते पुनः ।
योग्यस्याऽधीतवेदत्वान्नावस्थातुं हि [3]शक्यते ॥ ११४ ॥

परिहरति योग्यत्वमिति । अध्ययनेन धर्मजिज्ञासाया योग्यत्वं भवतीत्येतादृशं हेतुत्वं यद्यप्यथशब्देन सिद्धं, तथापि तस्यैवानुष्ठानहेतुत्वं वक्तुमतःशब्द इति ॥१११॥

एतदेव विवृणोति लक्षणमिति । एवं विधः पुरुषो धर्मजिज्ञासाऽधिकारीत्येतावदथशब्देन सिध्यति । जिज्ञासाहेतुश्च फलार्थित्वादि सम्भवेदिति । फलार्थित्वशब्देन कामश्रुतयोऽभिधीयन्ते । कामश्रुतयो हि विद्यार्थित्वात् तत्सिद्ध्यर्थं विचारमाक्षिपेयुरिति सम्भाव्यते । ताश्चेद्विद्यां प्रयुञ्जीरंस्ततः शूद्रमधिकृत्य शूद्रस्यापि प्रयुञ्जीरन्, ततोऽध्ययनविधिरेव विचारस्य प्रयोजक इति वक्तुम् 'अतः' शब्द इति, एतदुक्तं भवति—वेदाध्ययनानन्तरम् अत एवाधीतवेदत्वात्कारणात् तदर्थं धर्मजिज्ञासा कर्त्तव्येति । अध्ययनविधिर्हि अर्थज्ञानार्थतया अध्ययनं विदधद्विचारमन्तरेण तदरम्भवाद्विचारमाक्षिपतीति अधीते वेदे तूष्णीमवस्थातुं न लभ्यते । अध्ययनविधिश्च त्रयाणामेव वर्णानां प्रकृतानामुपनयनसंस्कृतानामध्ययनं विचारं च विधत्ते । तेषु च विद्वत्सु लब्धेषु कामश्रुतयो नाऽविद्वांसमधिकृत्य तस्य विद्यां प्रयुञ्जते । ततः शूद्राधिकारो निवर्त्तते । ततः प्रयोजनवान् 'अतः' शब्द इति ॥ ११२ ॥

परिहारान्तरमाह अतः शब्देति । कथमित्याह हेताविति । वृत्तस्य हि हेतुत्वमतः शब्दो वदति, तेन यस्य वृत्तस्य हेतुत्वं तदतःशब्देनाऽपेक्षितमिति प्रत्ययादध्ययनानन्तर्यसिद्धिः । अन्यथा मङ्गलार्थताऽप्यथशब्दस्याशङ्क्येत । यद्यपि माङ्गल्यमन्यार्थनीयमानोदकुम्भादिवत् अथशब्दस्यानन्तर्यवाचिनः प्रासङ्गिकं प्रयोजनं नाभिधेयं, तथापि यत्किंचित्क्रियानन्तर्यमर्थप्राप्तमनुवदन्मङ्गलार्थतया प्रयुक्त इति सम्भाव्येतेति ॥ ११३ ॥

परिहारान्तरमाह स्नानेति, जिज्ञासाहेतुत्वे ऽध्ययनस्याथशब्देन प्रतिपादितेऽपि तस्यैव स्नानबाधहेतुत्वमभिधातुम्'अतः'शब्द इति । स्नानबाधहेतुत्वमेव विवृणोति योग्यस्येति । अधीतवेदतया विचारयोग्येन क्षिप्रमेव कर्माधिकाराय विद्वत्तायै यतितव्यं न स्नातव्यम् ॥ ११४ ॥

---

१. 'प्रतिपाद्यते'—ख, २. 'द्यप्यसौ भवेत्'—क, ख ३. 'लभ्यते'—क, ख

'सन्वाच्येच्छाऽऽन्तरं कर्म ज्ञानं व्याप्नोति तावता।
ज्ञानोपसर्जना सैव न तु विध्यादि गम्यते ॥ ११५ ॥

इषेस्तु कर्म [1]बाह्यः स्याद् धर्मः सा वाऽथवा द्वयम्।
समानकर्तृकत्वं तु तुमुनोक्तं लिङा विधिः॥ ११६ ॥

एवं विषयनानात्वान्न काचित् पुनरुक्तता'।
सूत्रितेच्छाभिनिर्वृत्त्यै द्वितीयेच्छाऽत्र सूत्रिता ॥ ११७ ॥

अत्र भाष्यं "धर्मं जिज्ञासितुमिच्छेत्" इति। तत्र सनादीनामपौनरुक्त्यमाह सन्वाच्येति सार्द्धद्वयेन। सन्वाच्या तावदिच्छा आन्तरं समानपदोपात्तं ज्ञानाख्यं कर्म आप्नोति तत्कर्मिकेत्यर्थः। तेन तावता सन्प्रत्ययपर्यन्तेन भागेन सैव ज्ञानेच्छैव गम्यते, न तु विध्यादिकम्। इषेस्त्विषिधातुवाच्याया इच्छाया बाह्यः पदान्तरोपात्तो धर्मः कर्म। सैव ज्ञानेच्छैव वा, द्वयं वा धर्मश्च ज्ञानेच्छा च। अतो भिन्नविषयेच्छावचनत्वात्सन्निच्छत्योरपौनरुक्त्यं, लिङ्-तुमुनोस्त्वर्थान्तरवाचित्वात्स्पष्टमेवाऽपौनरुक्त्यमिति। नन्वेकैव ज्ञानेच्छा सूत्रिता तत् कथमिच्छाद्वयोपादानं भाष्ये? अत आह सूत्रितेति। सूत्रितामेवेच्छामभिनिर्वर्तयितुमिच्छान्तरमुक्तमिति न दोषः। नचेच्छाविषयमिच्छान्तरं नेष्यतइति वाच्यम्। मन्दाग्नीनां भोजनेच्छायामिच्छादर्शनात् ॥ ११५ ॥ ११७ ॥

भा०—धर्माय जिज्ञसा धर्मजिज्ञासा; साहि तस्य ज्ञातुमिच्छा।

प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते।
तादर्थ्ये यूपदार्वादौ तेनास्मिन्नसमासता ॥ ११८ ॥

'सा हि तस्ये' त्यनेनोक्तो धर्मस्येत्येष विग्रहः।
धर्मायेति तु तादर्थ्ये षष्ठी वृत्तोति कथ्यते ॥ ११९ ॥

"धर्माय जिज्ञासा धर्मजिज्ञासे" ति भाष्यं तदाक्षिपति प्रकृत्येति। यत्र हि तादर्थ्ये चतुर्थी समस्यते तत्र विकृतिरेव चतुर्थ्यन्ता प्रकृत्या समस्यते, यूपदार्वादौ दर्शनात्। तथा च वार्त्तिककारेणोक्तं 'चतुर्थी तदर्थे प्रकृतिविकृतिग्रहणं कर्त्तव्य' मिति। न च सामर्थ्यप्रदर्शनार्थं तदिति वाच्यम्। तथा सति 'समर्थः पदविधि' रित्यनेनैव सिद्धे तद्ग्रहणस्याऽकर्त्तव्यत्वात्। अतो वाचनिकमेवेदम्। न च धर्मो जिज्ञासाविकारः, तस्मादसमास इति ॥ ११८ ॥

परिहरति सा हि तस्येति। "सा हि तस्ये" त्यनेन भाष्येण दर्शितो धर्मस्य जिज्ञासेत्ययमत्र विग्रहः। तेन षष्ठीसमासोऽयं न चतुर्थीसमास इति। कथं तर्हि धर्मायेति भाष्यमत आह धर्मायेति ॥ ११९ ॥

---

१. बाह्यं—क

प्राप्नोत्यत्र चतुर्थ्येव विशेषश्चेद् विक्षितः ।
सामान्यस्य विवक्षायां [1]तादृशं कथ्यते कथम् ॥ १२० ॥
सम्बन्धमात्र एवैषा षष्ठ्युत्पन्ना तथापि तु ।
[2]विशेषनिष्ठता तस्य भाष्यकारेण वर्ण्यते ॥ १२१ ॥

ननु तादर्थ्यविवक्षायां चतुर्थ्येव प्राप्नोति न षष्ठी, ततश्च समासाऽनुपपत्तिः । सम्बन्धसामान्यविवक्षायां तु तादर्थ्ये षष्ठीत्ययुक्तमिति चोदयति प्राप्नोतीति ॥ १२० ॥

परिहरति सम्बन्धेति । न षष्ठी तादर्थ्यमभिधत्ते इति ब्रूमः, किन्तु सम्बन्धसामान्यमेव, तस्य तु निर्विशेषस्याऽनुपपत्तेः तादर्थ्यरूपविशेषनिष्ठता 'धर्माये' ति भाष्येण दर्शितेति ॥ १२१ ॥

भा०—स कथं जिज्ञासितव्यः ? को धर्मः, कथं लक्षणः, कान्यस्य-साधनानि, कानि साधनाभासानि, किं परश्चेति ?

तत्र को धर्मः, कथंलक्षण इति एकेनैव सूत्रेण व्याख्यातम् — 'चोदनालक्षणोऽर्थो धर्म' इति। कान्यस्य साधनानि, कानि साधनाभासानि, किं परश्चेति शेषलक्षणेन व्याख्यातम् । क्व पुरुषपरत्वं, क्व वा पुरुषो गुणभूतः, एतासां प्रतिज्ञानां पिण्डस्य एतत् सूत्रम्—'अथातो धर्मजिज्ञासा' इति ।

साधनाभासता चात्र पूर्वपक्षार्थगोचरा ।
अन्यसाधनमन्यस्य साधनाभास [3]उच्यते ॥ १२२ ॥
क्रत्वर्थं पुरुषार्थस्य तदर्थं च क्रतोरिति ।
शेषलक्षणशब्दश्च कृत्स्नशास्त्रविवक्षया ॥ १२३ ॥

अत्र समस्तस्य वक्ष्यमाणस्याऽर्थस्याऽस्यां प्रतिज्ञायामन्तर्भावं कथयता भाष्यकारेणोक्तं 'स कथं जिज्ञासितव्य' इत्यादि, तत्र साधनाभासपदं तावद् व्याचष्टे साधनाभासता चेति । कथमेतदित्याह अन्यसाधनमिति ॥ १२२ ॥

एतदेवोदाहरणेन दर्शयति क्रत्वर्थमिति । क्रत्वर्थं पर्णमयीत्वादि; पुरुषार्थस्य अपापश्लोकश्रवणादेः फलस्य साधनाभासम्, पुरुषार्थं च गोदोहनादि; क्रतोः साधनाभासमिति । एतासां प्रतिज्ञानां व्याख्याप्रदेशं दर्शयता भाष्यकारेण को धर्मः कथंलक्षण इति द्वयं चोदनासूत्रेण व्याख्यातमित्युक्त्वा अवशिष्टं शेषलक्षणेन व्याख्यातमित्युक्तम् । शेषलक्षणशब्दश्च तृतीये प्रसिद्धः । न च तत्र सर्वं व्याख्यायते । अतः कथमिदम् इत्याशङ्क्याह शेषलक्षणेति । शेषं च तल्लक्षणं चेति ॥ १२३ ॥

---

१. 'तादर्थ्यं'—क २. 'विशिष्ट'—क ३. 'मु०'—क

भा०—धर्मः प्रसिद्धो वा स्यात्, अप्रसिद्धो, वा ? सचेत् प्रसिद्धो, न जिज्ञासितव्यः; अथ अप्रसिद्धः; नतराम्, तदेतदनर्थकं धर्मजिज्ञासाप्रकरणम्।

अथवाऽर्थवत्। धर्मं प्रति हि विप्रतिपन्ना बहुविदः—केचित् अन्यं धर्ममाहुः, केचित् अन्यम्; सोऽयमविचार्य प्रवर्तमानः कंचिदेव उपाददानो विहन्येत, अनर्थं च ऋच्छेत्। तस्माद् धर्मो जिज्ञासितव्य इति। स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमहे। तदभिधीयते—

*प्रसिद्धः शक्यते ज्ञातुं प्रसिद्धत्वात्[1] तु नेष्यते।
अप्रसिद्धस्त्वशक्यत्वान्नतरामित्यतोऽब्रवीत् ॥ १२४ ॥
जिज्ञास्यः संशयाद् धर्मः श्रेयस्करतयाऽपि च।
असंदिग्धो ह्यजिज्ञास्यो यो वा स्यान्निष्प्रयोजनः ॥ १२५ ॥

अत्र भाष्यकारेण शास्त्रसम्बन्धमाक्षिपतोक्तं "धर्मः प्रसिद्धो वा स्यादप्रसिद्धो वा ? स चेत्प्रसिद्धः, न जिज्ञासितव्योऽथाऽ प्रसिद्धो नतराम्" (शा० भा० अ१-पा१ सू० १) इति। तस्याऽर्थः—धर्मोऽस्य शास्त्रस्य प्रतिपाद्यमानतया प्रयोजनमिति वदता सूत्रकारेण यस्तेन प्रयोजनेन सह प्रतिपाद्यप्रतिपादकभावः सम्बन्धः सोऽस्य शास्त्रस्याऽवतारहेतुः सम्बन्ध इति सूचितम्। तदुक्तं "शास्त्रं प्रयोजनं चैवे" ति वार्त्तिके। स चायं सम्बन्धो न शास्त्रावतारहेतुः सम्भवति धर्मस्याऽजिज्ञास्यत्वात्। नह्यजिज्ञासितप्रतिपादकतया शास्त्रारम्भः सम्भवति। "तदेतदनर्थकं धर्मजिज्ञासा-प्रकरणम्" धर्मजिज्ञासारम्भशास्त्रमित्यर्थः। अत्र च "अथाऽप्रसिद्धो नतरा" मित्यतिशयो दर्शितः। तं दर्शयति प्रसिद्ध इति। जिज्ञासाशब्देन प्रकृत्या ज्ञानं प्रत्ययेन चेच्छोच्यते। तत्र प्रसिद्धे ज्ञानमस्ति, इच्छामात्रं तु तत्र नास्ति, अप्रसिद्धे तु ज्ञानमिच्छा चोभयमपि नास्तीति अतिशयोपपत्तिरिति ॥ १२४ ॥

"धर्मं प्रति" इत्यादि परिहारभाष्यम्। तत्र धर्मस्य जिज्ञास्यत्वे कारणद्वय-मुक्तम्, विप्रतिपत्त्या सांशयिकत्वं, स हि पुरुषमित्यनेन प्रयोजनवत्त्वंच। तदुभयमपि दर्शयति जिज्ञास्य इति। एतदेव व्यतिरेकमुखेन विवृणोति असंदिग्ध इति॥१२५॥

---

१. 'चने'—क

* "धर्मः प्रसिद्धो वा स्यादप्रसिद्धोवा" इतिभाष्यमनुलक्ष्य अध्ययनविधेर्दृष्टार्थत्वं विचारप्रयुक्तिभाक्षिपति, तत्र "अप्रसिद्धो नतराम्" इत्यत्र भाष्ये नञः अभाववचनत्वात्, कोऽयमातिशायनिकः 'तरप्' प्रत्ययः ? नञर्थस्य अतिशयाभावात्, न हि निषेधस्य स्वगतः कश्चिद् विशेषोऽस्ति। तत्रोच्यते-सत्यम्, नाभाव स्यस्वगतो विशेषः, तथापि निषेध्यतन्त्रत्वान्निषेधस्य तदतिशयात् सोऽप्यतिशेते।

*स्वरूपादिषु धर्मस्य द्विधा विप्रतिपद्यते ।
पूर्वं प्रमाणरूपाभ्यां पादेना¹द्यस्य निर्णयः ।। १२६ ।।

'स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये ।
मतिर्बहुविदां पुंसां संशयान्नोपजायते ।। १२७ ।।

केचिदाहुरसावर्थः केचिन्नाऽसावयं त्विति ।
तन्निर्णयार्थमप्येतत् परं शास्त्रं प्रणीयते' ।। १२८ ।।

## ※ इति प्रतिज्ञासूत्रं प्रथमं समाप्तम् ※



सन्देहहेतुं विप्रतिपत्तिं विवृणोति—स्वरूपादिष्विति । धर्मस्वरूपादीनां मध्ये पूर्वं तावद् द्विधा विप्रतिपत्तिः क्रियते । किंप्रमाणको धर्मः, किंस्वरूप इति च । तदस्याऽऽद्यस्य विप्रतिपत्तिद्वयस्याऽनेन पादेन निर्णयः क्रियत इत्याह पादेनेति । अत्र हि प्रत्यक्षादिनिराकरणेन चोदनाप्रामाण्यं साध्यते । तत्साधनादेव च तद्गम्योऽग्निहोत्रादिर्धर्मो न चैत्यवन्दनादिरिति स्वरूपमपि सविशेषं कथितं भवति । एतच्च निरपेक्षप्रामाण्याभिप्रायेणोक्तम् । चोदनैव हि निरपेक्षं प्रमाणं, तत्प्रामाण्यं चेहैव पादे सिद्धम् । उपरितने तु पादत्रये तदेकवाक्यतया तन्मूलतया चाऽर्थवादादीनां प्रामाण्यं साध्यते । अतः समस्तोऽध्यायः प्रमाणलक्षणमेव । चोदनायास्त्विहैव सिद्धमित्यभिप्रायः । तथा भाष्यमपि "एकेनैव सूत्रेण व्याख्यातम्" इति स्वतन्त्रप्रामाण्याभिप्रायमेवेति ।। १२६ ।।

एवमाद्यविप्रतिपत्तिं निर्णयस्थानं चोक्त्वा विप्रतिपत्त्यन्तरं निर्णयस्थानं च दर्शयति स्थिते इति द्वयेन । एकमार्गदर्शिनामज्ञानां च संशयाऽनुत्पत्तेर्बहुविदामित्युक्तम् ।। १२७ ।। १२८ ।।

---

१. 'द्येन'—क

* धर्मे संशयः कीदृशः, किन्निमित्तो वेति प्रतिपादयति । पूर्वं तावत् धर्मस्य स्वरूपादिषु मध्ये प्रमाणस्वरूपाभ्यां विप्रतिपत्तिः क्रियते । वादिविप्रतिपत्तिः संशये निमित्तमिति नैयायिकाः। तस्मादेष संशयो भवति, किं खलु धर्मे प्रमाणं, किंस्विद् योगिप्रत्यक्षमुत चोदनेति । प्रमाणसंशयादेव तु स्वरूपसंशयः, किं यागादिर्धर्म उत चैत्यवन्दनादीति ।

## इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे प्रथमम् प्रतिज्ञासूत्रम्।।



## चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

*धर्मे सामान्यतः सिद्धे प्रमाणं चोदनोच्यते ।
स्वरूपादेस्ततः सिद्धिः स्वरूपं वेह सूच्यते ॥ १ ॥

द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते ।
स्वरूपेऽपि हि तस्योक्ते प्रमाणं कथ्यतेऽर्थतः ॥ २ ॥

इदानीं शास्त्रमारभते चोदनालक्षणोऽर्थो धर्म इति ।

तद्व्याचष्टे धर्म इति । योऽयं निष्प्रमाणकप्रत्यक्षादिप्रमाणकचोदनाप्रमाणकत्वादीनां विप्रतिपत्तिविशेषाणां विषयभूतः साधारणात्मा धर्मपदार्थः स चोदनाप्रमाणकः । चोदनैव तस्य प्रमाणं, न प्रत्यक्षादि । चोदना च तत्र प्रमाणमेव नाऽप्रमाणम्, इत्येवं धर्मानुवादेन प्रमाणविधिरिति । कथं तर्हि तत्स्वरूपविशेषयोः सिद्धिरत आह स्वरूपादेरिति । आदिशब्देन विशेषोपादानम् । प्रमाणमेवेति प्रमाणविधेरेवाऽर्थात् तद्गम्यस्याग्निहोत्रादेर्धर्मत्वमस्त्येव न तु नास्तीति धर्मस्वरूपसिद्धिः । सैव प्रमाणमित्यवधारणाच्च तद्गम्यस्याग्निहोत्रादेर्धर्मत्वं न चैत्यवन्दनादेरतद्गम्यत्वादिति धर्मविशेषसिद्धिरिति । विपरीता वा वचनव्यक्तिरित्याह स्वरूपं वेति । यश्चोदनालक्षणोऽग्निहोत्रादिः स धर्म एव नाऽधर्मः, स एव च धर्मो न चैत्यवन्दनादिरित्येवं धर्मस्वरूपतद्विशेषसिद्धिरिति ॥ १ ॥

ननु 'को धर्म' इति 'कथंलक्षण' इति द्वयमपि चोदनालक्षणसूत्रेण व्याख्यातमिति भाष्यकारेणोक्तं तत्कथमेकस्यैव सूत्रस्यार्थद्वयमुच्यते ऽत आह द्वयमिति । सत्यं द्वयमुच्यते, किं तु श्रुत्यर्थाभ्यां न श्रुत्यैव, न ह्येकस्यैव वाक्यस्य सति सम्भवे वचनव्यक्तिद्वयं युक्तमिति । तत्र यथा प्रमाणविधौ स्वरूपसिद्धिस्तथा दर्शितम् । स्वरूपविधावपि प्रमाणसिद्धिमर्थाद्दर्शयति स्वरूपे इति । यदा हि चोदनागम्यस्य धर्मत्वमितरस्य च धर्मत्वाभाव उक्तस्तदाऽर्थाच्चोदनायाः प्रामाण्यं प्रत्यक्षादेश्चाऽप्रामाण्यं सिद्धयतीति ॥ २ ॥

* "चोदनालक्षणोऽर्थो धर्मः" इति शास्त्रारम्भसूत्रम् । प्रथमसूत्रे विशेषधर्मजिज्ञासायाः प्रतिज्ञा कृता, तदभिप्रायेण को धर्म इति पृष्टम् । वेदागमे प्रमाणे यागादयः विशेषधर्मा भवन्ति । एवंच सामान्यतः सिद्धधर्मोद्देशेन प्रमाणविशेषश्चोदना विधीयते, ततश्च धर्मविशेषसिद्धिः । सामान्यात्मना धर्मस्य प्रीतिसाधनत्वं तु सर्ववादिनां सम्मतमेव, न तत्र कस्यापि विवादः । तथाच सौगतार्हतनैयायिकादिभिः प्रीतिसाधनतयैव धर्मा इष्यन्ते । अत एव अस्यां वचनव्यक्तौ 'अर्थ' शब्दोऽनुवादः इति 'लभ्यतेऽर्थानुवादेन' इत्यादिना वार्त्तिककारेण उक्तम् । अन्यथा 'अर्थ' शब्दस्य विध्यनुवादयोरसंभवः स्यादिति ।

भा० —चोदना—इति क्रियायाः प्रवर्तकं वचनमाहुः; आचार्यचोदितः करोमि–इति हि दृश्यते। लक्ष्यते ज्ञायते येन तल्लक्षणम्; धूमो लक्षणमग्नेः—इति हि वदन्ति। तया यो लक्ष्यते, सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे।

किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ।
तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिन् चोदनोच्यते॥ ३॥

"चोदनेति क्रियायाः प्रवर्त्तकं वचनमाहु" रिति भाष्यम्। तत्र प्रवर्त्तकं वचनमिति किं प्रत्ययमात्रं विध्यभिधायित्वादुच्यते, यद्वा तन्मात्रस्याऽप्रत्यायकत्वात्पदम्, अथवा वाक्यम्, इति बुभुत्सायामाह किमादीति। किं केन कथमित्यपेक्षितैः साध्यसाधनेतिकर्त्तव्यतांशैः पूर्णः प्रत्ययो विधौ पुरुषप्रवर्तने समर्थो भवति। तत्पूरणं च वाक्येन। अतोवाक्यमेव प्रवर्त्तकं चोदनोच्यते॥ ३॥

चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थं शक्नोत्यवगमयितुं; नान्यत् किञ्चनेन्द्रियम्।

नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना, यथा यत्किञ्चन लौकिकं वचनं—नद्यास्तीरे फलानि सन्ति–इति; तत् तथ्यमपि भवति, वितथमपि भवतीति।

चोदनैव प्रमाणं चेत्येतद्धर्मेऽवधारितम्।
साकाङ्क्षमिति मन्वानो युक्तिलेशं द्वयेऽस्पृशत्॥ ४॥
सम्भाव्यते प्रमाणत्वं शब्दस्यैवंविधेष्वपि।
इन्द्रियादेरसामर्थ्यं वक्ष्यमाणमदीदिशत्॥ ५॥

'चोदना हि भूतं भवन्तं भविष्यन्तमर्थ'मित्यादिभाष्यं 'नान्यत्किचनेन्द्रिय'-मिति च चोदनायाः प्रामाण्ये तदन्येषां चाऽप्रामाण्ये युक्तिकथनार्थम्, तत्प्रतिज्ञासूत्रेऽसङ्गतमित्याशङ्क्याह चोदनैवेति। सम्भावितो हि प्रतिज्ञातोऽर्थो हेतुना साध्यते। शब्दस्य च नित्यं प्रमाणान्तरपरतन्त्रस्य स्वातन्त्र्येण प्रामाण्यं, प्रत्यक्षादेश्च स्वतन्त्रस्याऽप्रामाण्यमित्यत्र प्रतिज्ञातं चोदनैव प्रमाणमेवेति, तदिदमवधारणद्वयमसम्भावितार्थं युक्तिसाकाङ्क्षमिति मन्वानः सम्भावनापदलाभार्थं प्रतिज्ञाद्वयेऽपि युक्तिलेशमस्पृशदिति॥ ४॥

युक्तिलेशमेव दर्शयति सम्भाव्यते इति। एवंविधेषु भूतादिष्विन्द्रियादेरसामर्थ्यं प्रत्यक्षसूत्रे वक्ष्यमाणमेवाऽत्रदर्शितमिति॥ ५॥

अत्यन्ताऽसत्यपि ज्ञानमर्थे शब्दः करोति हि ।
तेनोत्सर्गे स्थिते तस्य दोषाभावात्प्रमाणता ॥ ६ ॥

चोदनेत्यब्रवीच्चात्र शब्दमात्रविवक्षया ।
न हि भूतादिविषयः कश्चिदस्ति विधायकः ॥ ७ ॥

इन्द्रियादिव्युदासेन शब्दो यावन्न साध्यते ।
तावच्च तद्विशेषस्य कुतो वाऽवसरो भवेत् ॥ ८ ॥

निमित्तमात्रं वोच्येत प्रमाणं वेह[1] लक्षणम् ।
प्रमाणं त्वपि[2] शब्दो वा तज्ज्ञानं वा निरूप्यते ॥ ९ ॥

पदार्थस्तन्मतिर्वा स्याद्वाक्यार्थाधिगमोऽपि वा ।
पूर्वेषान्तु प्रमाणत्वे फलत्वं तस्य गम्यते ॥ १० ॥

कथं सम्भाव्यते ऽत आह अत्यन्तेति । ज्ञानोत्पादहेतुत्वं प्रामाण्यहेतुः, सति तस्मिन्प्रामाण्यस्यौत्सर्गिकत्वात्, शब्दश्चात्यन्ताऽसत्यपि शशविषाणादौ ज्ञानमुत्पादयति । तदिह चोदनाया धर्मज्ञानजनकत्वादुत्सर्गतः प्राप्तं प्रामाण्यमपवादभूतदोषाभावादनपोदितं भवति ॥ ६ ॥

भाष्ये चोदनापदं शब्दविशेषस्य विधायकस्य वाचकमपि लक्षणया शब्दमात्रपरं व्याख्येयमित्याह चोदनेति । तत्र कारणमाह न हीति ॥ ७ ॥

इतश्चैवमित्याह इन्द्रियादीति । प्रमाणविशेषस्य हि प्रत्यक्षादेः सामर्थ्ये व्युदस्ते तद्विशेषान्तरस्यैव शब्दस्य भूतादिषु सामर्थ्यं दर्शयितव्यं, न शब्दविशेषस्य चोदनायाः । किं च शब्दसामान्यप्रयुक्तमिदं यद् भूताऽनागतादिषु सामर्थ्यं न चोदनात्वप्रयुक्तम्, अतः सामान्यमुखेनैव तत्सामर्थ्यं वक्तव्यम् । तेनैवं भाष्यार्थः । चोदनायाः प्रामाण्यं धर्मे । कुतः ? शब्दस्य हि सर्वस्यैव ज्ञानजनकत्वेन प्रामाण्यं सम्भवति, शब्दश्चोदना, तेनाऽस्याः सम्भवत्यतीन्द्रिये ऽपि धर्मे प्रामाण्यमिति ॥ ८ ॥

लक्षणपदं व्याचष्टे निमित्तमात्रमिति । निमित्तं प्रमितेः कारणमात्रं प्रमाणं तत्तद्विशेषः करणमिति । करणत्वं च साधकतमत्वमापेक्षिकं विवक्षाधीनमिति । विवक्षाभेदेन प्रमाणभेदानाह प्रमाणं वेति । प्रमाणं वेत्यस्मिन्पक्षे इत्यर्थः ॥ ९ ॥

प्रमाणप्रसङ्गात् फलं दर्शयति पूर्वेषामिति । शब्ददीनां प्रामाण्ये वाक्यर्थाधिगमः फलम्, तत्प्रामाण्ये हानादिबुद्धिः फलमिति ॥ १० ॥

---

१. 'चेह'—क

२. 'वापि'—ख

ज्ञाने लक्षणशब्दोऽयं यदि नाम प्रयुज्यते ।
चोदनोक्तिस्तदा कार्यं तत्कार्यं [1]चाऽपि लक्षयेत् ।। ११ ।।

निमित्तमात्रे शब्दे च प्रमाणे मुख्यवृत्तयोः ।
सामानाधिकरण्यं स्याच्चोदनालक्षण[2]त्वयोः ।। १२ ।।

द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ।। १३ ।।

श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ।। १४ ।।

प्रदर्शनार्थमत्रोक्तमिन्द्रियं सूत्रकारवत् ।
नान्यत्किंचेति वा च्छेदः सामान्यार्थः प्रयुज्यते ।। १५ ।।

शब्दव्यतिरिक्तेषु तज्ज्ञानादिषु यदा लक्षणशब्दस्तदा शब्दवाचिना चोदनादिशब्देन कथं सामानाधिकरण्यमत आह ज्ञाने इति । ज्ञानादिष्वित्यर्थः । शब्दकार्ये तज्ज्ञाने तत्कार्येषु च पदार्थज्ञानादिषु लक्षणया वर्त्ततइति ।। ११ ।।

निमित्तमात्रलक्षणपक्षे शब्दप्रामाण्यपक्षे च मुख्यमेव सामानाधिकरण्यमित्याह निमित्तमात्रे इति ।

एतच्च भाष्यानुसारेण वाक्यमेव चोदनेत्यङ्गीकृत्योक्तम् । भवत्येव तु सर्वेषु पक्षेषु मुख्यमेव सामानाधिकरण्यं चोदनापदस्यापि लक्षणपदस्येव चोद्यतेऽनयेतिव्युत्पत्त्या ज्ञानादिषु मुख्यत्वसंभवात् । तथा चोक्तम् ।

प्रवर्त्तेऽहमिति ज्ञानं येन शब्देन जन्यते ।
स चोदनोच्यते यद्वा प्रवर्त्तनफला मतिः ।। इति ।। १२ ।।

ननु गोदोहनादि द्रव्यं नीचैस्त्वादिगुणो यागादिक्रिया च फलसाधनत्वाद्धर्मो नाऽपूर्वादिरिति श्रेयस्करभाष्ये वक्ष्यते । द्रव्यादि च प्रत्यक्षमिति कथं चोदनैवेत्यवधारितमत आह द्रव्येति । नैन्द्रियकेण रूपेण धर्मतेति ।। १३ ।।

किं पुनरेषां रूपान्तरं यच्चोदनागम्यम् । येन चैषां धर्मत्वमिति दर्शयति श्रेयइति ।। १४ ।।

ननु नान्यत्किंचनेन्द्रियमितीन्द्रियमात्रं प्रतिषिद्धम्, न च तावता चोदनैवेत्यवधारणं सिद्ध्यतीत्यत आह प्रदर्शनार्थमिति । यथा प्रत्यक्षसूत्रे प्रत्यक्षग्रहणं प्रदर्शनार्थमेवमिदमपीति । यद्वा एवं व्याख्येयमित्याह नान्यदिति ।। १५ ।।

---

१. 'दापि' ख
२. 'द्वयोः' क

तदसामर्थ्यसिद्ध्यै च पुनरिन्द्रियकीर्तनम् ।
किंचेति मध्यमच्छेदो हेतुप्रश्ने प्रयुज्यते ॥ १६ ॥

यद्यपि त्वनुमानस्याऽप्येवमादौ समर्थता ।
विना सम्बन्धबोधेन न तु तस्योद्भवः क्वचित् ॥ १७ ॥

न सामान्यविशेषाभ्यां धर्मसम्बन्धदर्शनम् ।
लिङ्गस्य कस्यचित्सिद्धं येन स्यादनुमानता ॥ १८ ॥

ननु शब्दोऽपि सम्बन्धबोधान्नर्ते प्रवर्त्तते ।
पदं तत्, न च तद्वाच्यो धर्मो, वाक्यार्थ एव सः ॥ १९ ॥

वाक्यस्याऽवाचकत्वं च पदार्थानां च हेतुता ।
सम्बन्धस्याऽनपेक्षाणां वाक्यार्थे स्थापयिष्यते ॥ २० ॥

नेन्द्रियमिति तु तस्यैव हेतुरित्याह तदसामर्थ्येति । अन्यत्सर्वमसमर्थमिन्द्रियस्याऽसमर्थत्वात्तत्पूर्वकत्वाच्चेतरस्येति । व्याख्यानान्तरमाह किंचेति । नान्यत्समर्थं, किं चात्र कारणम्, इन्द्रियस्याऽसामर्थ्यादिति ॥ १६ ॥

नन्वनुमानं भूतादौ समर्थमेव । भूता, व्यवहिता, विप्रकृष्टा, च वृष्टिर्नदीपूरेणाऽनुमीयते, मेघोन्नत्या च भविष्यन्ती वृष्टिः । सूक्ष्मं च द्रव्यं गन्धात् । अतो न सर्वनिषेधोपपत्तिरत आह यद्यपीति ॥ १७ ॥

ततः किमित्याह न सामान्येति । धर्मसामान्येन वा धर्मविशेषेण वा न कस्यचिल्लिङ्गस्य सम्बन्धग्रहणमस्ति, येन धर्मोऽस्तीति वा ऽग्निहोत्रादेर्वा धर्मत्वमनुमीयेत । अतो नाऽनुमानं सम्भवतीति ॥ १८ ॥

अत्र चोदयति नन्विति । परिहरति पदमिति । पदं हि सम्बन्धग्रहणापेक्षमिति । ततः किमित्याह न चेति । किं तर्हीत्याह वाक्यार्थ इति ॥ १९ ॥

ननु वाक्यस्यापि सम्बन्धग्रहणाऽपेक्षमेव वाचकत्वम् । अन्यथा प्रथमश्रवणेऽपि प्रतीतिप्रसङ्गादत आह वाक्यस्येति । सत्यं यदि वाक्यं वाचकं स्यात्, न तु तद्वाचकम् । कस्तर्हि वाक्यार्थावगतौ हेतुरित्याह पदार्थानां चेति । किं सम्बन्धग्रहणापेक्षाणामेव, नेत्याह सम्बन्धस्येति । तदेतत्सर्वं तद्भूताधिकरणे वक्ष्यतइति ॥ २० ॥

नित्यत्वादेरसिद्धत्वादभ्युपेत्योच्यतेऽथ वा ।
सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जनात् ।। २१ ।।

प्रमाणान्तरदृष्टं हि शब्दोऽर्थं प्रापयेत् सदा ।
स्मृतिवच्च स्वयं तस्य प्रामाण्यं नोपपद्यते ।। २२ ।।

नूनं [1]तत्राऽनुभूतोऽसावित्याप्तोक्तिनिबन्धना ।
बुद्धिः साक्षाददृष्टेऽपि युक्ताऽर्थे पुरुषोक्तितः ।। २३ ।।

नात्मीयादन्यदीयाद्वा प्रत्यक्षादेर्विना क्वचित् ।
वचसः सत्यता दृष्टा तथा स्याच्चोदनास्वपि ।। २४ ।।

"नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना । यथा यत्किंचन लौकिकं वचनं नद्यास्तीरे पञ्च फलानि सन्तीति, तत्तथ्यमपि भवति वितथमपि भवति" ( शा०भा०अ० १पा०२ सू०२) इति भाष्यम्, तदनुपपन्नम् । कथं हि सम्भवद्दोषलौकिकवचनदृष्टान्तेन नित्य-निर्दोषचोदनाया अप्रामाण्यं सम्भाव्येताऽत आह नित्यत्वादेरिति । बाह्यानां हि वेदनित्यत्वमसिद्धम् । अतश्चोदनामपि पौरुषेयीं मन्यमानाः पौरुषेयस्यैतादृशे प्रामाण्याऽसम्भवाल्लौकिकवचनसाम्येनाऽप्रामाण्यमापादयन्तीति ।

नित्यत्वाद्यभ्युपगमेन वा चोद्यमित्याह अभ्युपेत्येति । कथं नित्यत्वे चोद्य-मित्याह सुतरामिति । वक्तृप्रत्ययाऽधीनं हि शब्दस्य प्रामाण्यमसति वक्तरि दूराऽपास्तं स्यादिति ।। २१ ।।

वक्तृप्रामाण्याऽभावेऽपि स्वमहिम्नैव शब्दः किं प्रमाणं न भवत्यत आह प्रमाणान्तरेति । लौकिकी हि प्रमाणगतिः परीक्षकैरनुसरणीया । लोके च प्रमाणान्तरप्राप्ताऽर्थप्रापक एव शब्दः । अतोऽस्य स्मृतिवन्न स्वमहिम्ना प्रामाण्यमिति ।। २२ ।।

नन्वदृष्टोऽपि स्वयमर्थः पुरुषवचनात्प्रतीयते, दूरदेशादिवार्त्तास्विव कथमस्य प्राप्तप्रापकत्वमत आह नूनमिति । येयं साक्षात्स्वयमदृष्टेऽप्यर्थे पुरुषोक्तितो बुद्धिः सा युक्ता । सा हि नूनं वक्त्राऽनुभूतोऽसावर्थ इत्येवं वक्त्रनुभवकल्पनापुरःसरा । तेन तत्रापि वक्तृप्रमाणप्राप्तस्यैवाऽर्थस्य शब्दः प्रापको न स्वतन्त्रः । कुतः पुनर्वक्त्रनुभवकल्पनाऽऽप्तोक्तिनिबन्धना, उक्तिरुच्चारणं तन्निबन्धना । आप्तो नाऽननुभूतार्थं वाक्यं रचयति । तेनाप्तोच्चारणनिबन्धनवक्त्रनुभवाऽनुमानद्वारा पुरुषवचनार्थे बुद्धिर्युक्तेति ।। २३ ।।

यत्र त्वात्मीयमन्यदीयं वा प्रत्यक्षादिकं नास्ति तत्र वाक्यप्रामाण्यं लोके न दृष्टमिति वेदेऽपि तथैव युक्तमित्याह नात्मीयादिति ।। २४ ।।

१. 'वक्त्रा'—क

तेन सत्यपि विज्ञाने प्रतिभादेर्यथैव हि।
स्वातन्त्र्यान्न प्रमाणत्वं तथा वेदेऽपि दृश्यताम् ॥ २५ ॥

स्वर्गयागादिसम्बन्धविषया चोदना मृषा।
प्रत्यक्षाद्यगतार्थत्वादीदृग्बुद्धादिवाक्यवत् ॥ २६ ॥

यद्वाऽऽप्तेनाऽप्रणीतत्वाद्बालोन्मत्तादिवाक्यवत्।
व्योमादिवच्च नित्यत्वात् प्रामाण्यस्य निराकृतिः ॥ २७ ॥

यदि वा पुरुषाधीनप्रामाण्याः सर्वचोदनाः।
स्वतो वा न प्रमाणं स्युर्वाक्यत्वात् पुरुषोक्तिवत् ॥ २८ ॥

प्रामाण्यं वा नरापेक्षं सर्वशब्देषु गम्यताम्।
शब्दैः सम्बध्यमानत्वादप्रामाण्यं यथैव हि ॥ २९ ॥

न स्याद्वक्तृगुणानां चेद्वचःप्रामाण्यहेतुता।
तद्दोषैरप्रमाणत्वं किमित्यस्य भविष्यति ॥ ३० ॥

ननु वेदादपि ज्ञानं तावदुत्पद्यते किमित्यप्रमाणमत आह तेनेति। शब्दो हि यत्रैव उच्यते तत्रैव ज्ञानं जनयति। नार्थसदसद्भावावपेक्षते। यच्चैवमर्थसदसद्भावानपेक्षमत्यन्तस्वतन्त्रं ज्ञानं तस्य प्रतिभाज्ञानवत्प्रामाण्यं न सम्भवति। प्रत्यक्षादिरहितत्वं वा स्वातन्त्र्यम्। तदेवं प्रयोगः, वेदो न प्रमाणम् स्वातन्त्र्यात् प्रतिभावदिति ॥ २५ ॥

प्रयोगान्तरमाह स्वर्गयागादीति। बुद्धादिवचनमपि किंचित्सत्यमस्तीति साध्यवैकल्यं मा भूदिति ईदृग्ग्रहणम्। ईदृशं यत्प्रत्यक्षाद्यनधिगतार्थं चैत्यवन्दनादिवाक्यं तद्वदिति ॥ २६ ॥

अत्रैव हेतुदृष्टान्तान्तरमाह यद्वेति। प्रयोगान्तरमाह व्योमादीति। नित्यत्वाभ्युपगमेन प्रसङ्गापादनान्न हेतोः प्रतिवाद्यसिद्धिरुद्भावनीयेति ॥ २७ ॥

प्रयोगान्तरमाह यदि वेति। प्रामाण्ये गुणवन्तं पुरुषमपेक्षन्तइत्यर्थः। ततश्च पुरुषस्य गुणसद्भावे प्रमाणाभावादनायासेनाऽप्रामाण्यं सिद्ध्यतीति अभिप्रायः। प्रयोगान्तरमाह स्वत इति ॥ २८ ॥

प्रयोगान्तरमाह प्रामाण्यमिति। नरगुणापेक्षमित्यर्थः। तदपेक्षं च प्रामाण्यं वेदस्याऽपौरुषेयत्वात्, पौरुषेयत्वे वा गुणसद्भावे प्रमाणाभावान्न सिद्ध्यतीत्यभिप्रायः ॥ २९ ॥

अवश्यं च वक्तृगुणाधीनं शब्दस्य प्रामाण्यमङ्गीकर्तव्यम्, तदन्वयव्यतिरेकानुविधानात्। यदि तथा सत्यपि तदधीनं न स्यात्ततोऽप्रामाण्यमपि दोषाधीनं न स्यादित्याह न स्यादिति ॥ ३० ॥

एवं स्थिते तु वेदस्य सति वाऽसति वा नरे ।
प्रामाण्यं दुर्लभं मत्वा नन्वित्ये[1]तदचूचुदत् ।। ३१ ।।

उपसंहरति एवमिति । सति नरइति नित्यत्वादेरसिद्धत्वादित्यस्योपसंहारः, असतीत्यभ्युपेत्योच्यत इत्यस्येति ।। ३१ ।।

भा० — उच्यते — विप्रतिषिद्धमिदमुच्यते — ब्रवीति च वितथञ्चेति । ब्रवीति — इति उच्यतेऽवबोधयति, बुध्यमानस्य निमित्तं भवतीति । यस्मिश्च निमित्तभूते सति अवबुध्यते सोऽवबोधयति । यदि च चेदनायां सत्याम् अग्निहोत्रात् स्वर्गो भवतीति गम्यते, कथमुच्यते न तथा भवतीति? अथ — न तथा भवतीति कथमवबुध्यते ? असन्तमर्थमवबुध्यत — इति विप्रतिषिद्धम् ।

तत्र विप्रतिषिद्धत्वं बुद्धवाक्येऽपि युज्यते ।
ततोऽपि प्रत्ययोत्पत्तेस्तस्माज्जात्युत्तरं त्विदम् ।। ३२ ।।

सर्वविज्ञानविषयमिदं [2]तावत् प्रतीक्ष्यताम् ।
प्रमाणत्वाऽप्रमाणत्वे स्वतः किं परतोऽथ वा ।। ३३ ।।

स्वतोऽसतामसाध्यत्वात् केचिदाहुर्द्वयं स्वतः ।
अपरे कारणोत्पन्नगुणदोषाऽवधारणात् ।। ३४ ।।

अत्र परिहारभाष्यं "विप्रतिषिद्धमिदमभिधीयते ब्रवीति वितथं चे" ति । तदाक्षिपति तत्रेति । जात्युत्तरमुत्तराभासमिति ।। ३२ ।।

एवमाक्षिप्य तत्समाधित्सयैव तावदुपोद्घातचिन्तामवतारयति सर्वविज्ञानेति । तदिहैवं चिन्ता, किं ज्ञानस्य प्रामाण्यमप्रामाण्यं च स्वत एव निर्णीयते ? किं वोभयमपि कारणगुणदोषादिना निरूपयितव्यम् ? उताऽप्रामाण्यं स्वतः, प्रामाण्यं परतो विपरीतं वेति ? ।। ३३ ।।

तत्र प्रथमपक्षमुदाहरति स्वत इति । यस्य हि यत्र स्वाभाविकं सामर्थ्यं नास्ति न तत्तस्याऽन्येन साधयितुं शक्यते । अतो ज्ञानानामप्रामाण्यं प्रामाण्यं च स्वत एव साधयतीति । पक्षान्तरमाह अपरे इति । ज्ञानं हि प्रामाण्याऽप्रामाण्ययोः साधारण्यान्न स्वतः किंचिदवधारयितुं क्षमते । अतो गुणवता दोषवता च कारणेनोत्पन्नौ यौ ज्ञानस्य गुणदोषौ तद्वशेन यथार्थत्वरूपं प्रामाण्यमयथार्थत्वरूपं चाऽप्रामाण्यं निर्णेतव्यम्, अतो द्वयमपि परत इति ।। ३४ ।।

---

१. 'नद' — ख
२. 'परीक्ष्यताम्' — ग

स्वतस्तावद् द्वयं नास्ति विरोधात् , परतो न च ।
निःस्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यते ॥ ३५ ॥

कथं ह्यन्याऽनपेक्षस्य विपरीतात्मसम्भवः ।
किमात्मकं भवेत् तच्च स्वभावद्वयवर्जितम् ॥ ३६ ॥

विज्ञानव्यक्तिभेदेन भवेच्चेदविरुद्धता ।
तथाप्यन्याऽनपेक्षत्वे किं क्वेति न निरूप्यते ॥ ३७ ॥

स्वतो द्वयमिति तावन्निराकरोति **स्वतस्तावदिति** । प्रामाण्याऽप्रामाण्यशक्ती हि मिथो विरुद्धे । ते कथमेकस्मिन् ज्ञाने स्वाभाविक्यौ स्याताम् ? एवं हि ज्ञानोत्पत्तिवेलायामेव प्रामाण्यमप्रमाण्यं च निर्णेतव्यं स्यात् , तच्चाशक्यम् । तन्न तावद् द्वयं स्वत इति ।

नापि परत इत्याह **परत इति** । द्वयमित्यनुषङ्गः । कारणमाह **निःस्वभावत्वमिति** । उत्पन्नं हि ज्ञानं गुणदोषावधारणात्प्रागर्थमवधारयति चेत् स्वत एव प्रामाण्यम्' नोचेदप्रामाण्यम् । उभयस्य तु पराधीनत्वे प्राक् तदवधारणादुभयरूपरहितं निःस्वभावं विज्ञानं स्यात् । न ह्यर्थं नावधारयति, न च नावधारयतीति सम्भवति । किं च गुणदोषावधारणगम्यत्वं प्रामाण्याऽप्रामाण्ययोर्वदता गुणजन्यं प्रामाण्यं दोषजन्यं चाऽप्रामाण्यमित्यङ्गीकर्त्तव्यम् । तज्जन्यत्वे हि तयोः कारणभूताभ्यां ताभ्यां काष्ठाग्निसंयोगादिव धूमस्यावधारणं सम्भवति नान्यथा । तज्जन्यत्वे च गुणदोषादिरहिताच्चक्षुरादेरुत्पन्नस्य प्रामाण्यमप्रामाण्यं चोभयं नास्तीत्यापद्यते । तच्चायुक्तम् , निःस्वभावत्वप्रसङ्गादिति ॥ ३५ ॥

स्वतो न द्वयं विरोधादिति यदुक्तं तद्विवृणोति **कथमिति** । एकस्य ज्ञानस्य कारणान्तराऽनपेक्षस्य स्वत एव प्रामाण्यमप्रामाण्यं चात्यन्तविपरीतरूपं न सम्भवति । परतो न द्वयमित्येतद्विवृणोति **किमात्मकमिति** । सर्वं हि ज्ञानं राशिद्वये शक्यमन्तर्भावयितुं प्रमाणमप्रमाणं वेति, तदुभयरहितं ज्ञानं किमात्मकं स्यादिति ॥ ३६ ॥

स्वतो न द्वयं विरोधादित्यत्र किंचिदाशङ्कते **विज्ञानेति** । एकस्य हि विरुद्धरूपाऽसम्भवो विज्ञानव्यक्तिभेदात्तु विरोध इति । परिहरति **तथापीति** । न तावज्ज्ञानत्वाऽतिरिक्तं किंचिच्चिह्नमस्ति ईदृशं प्रमाणमीदृशमप्रमाणमिति, तत्सद्भावे वा तदधीननिरूपणात् स्वाभाविकत्वहानिः। अतो ज्ञानस्वभावत्वे यस्यामेव ज्ञानव्यक्तौ प्रामाण्यं तस्यामेवाऽप्रामाण्यमपि भवत्येव, अतो ऽस्त्येव विरोधः । अथापि ज्ञानव्यक्तिभेदः स्यात् तथाऽप्यन्यस्य चिह्नस्याऽनाश्रयणात् किं क्वेति निरूपणाऽशक्तेः प्रमाणाऽप्रमाणसंकरः स्यादिति ॥ ३७ ॥

'तस्मात् स्वाभाविकं तेषामप्रमाणत्वमिष्यताम् ।
प्रामाण्यञ्च परापेक्ष','मत्र न्यायो ऽभिधीयते ॥ ३८ ॥
अप्रामाण्यमवस्तुत्वान्न स्यात्कारणदोषतः ।
वस्तुत्वात्तु गुणैस्तेषां प्रामाण्यमुपजन्यते' ॥ ३६ ॥
प्रामाण्यं हि यदोत्सर्गात्तदभावोऽथ कृत्रिमः ।
तदा स्वप्नादिबोधेऽपि प्रामाण्यं केन वार्यते ॥ ४० ॥
मत्पक्षे कारणाभावात् प्रामाण्यं नोपजायते ।
हेतुमत्त्वप्रसङ्गो ऽतो न भविष्यत्यवस्तुनः ॥ ४१ ॥
इन्द्रियादिगुणाश्चास्य कारणं तदसद् द्विधा ।
दुष्टत्वा[1]दिन्द्रियादीनामभावेऽन्यतमस्य वा ॥ ४२ ॥

एवमनयोरुक्तं दूषणमुपसंहरन् पक्षान्तरं परिगृह्णाति तस्मादिति पादत्रयेण । कुत इत्याह अत्रेति सपादेन । अप्रामाण्यं हि प्रामाण्याऽभावः, अभावश्चाऽवस्तुत्वान्न केन चिज्जन्यते, अतो नाऽप्रामाण्यं दोषैर्जन्यते । अतज्जन्यं च न ततोऽवधारयितुं शक्यम् । प्रामाण्यं तु वस्तुत्वाद् गुणजन्यं सत्तदवधारणाधीननिर्णयमिति युक्तम् । किं च घटादघटाच्च घटज्ञानदर्शनात्कथं तन्मात्रेण घटनिश्चयः, अतोऽवश्यं गुणसंवादार्थक्रियाज्ञानानामन्यतमेनैव घटज्ञानस्य यथार्थतालक्षणं प्रामाण्यं निर्णेतव्यमिति ॥ ३८ ॥ ३६ ॥

परत एव प्रामाण्यम्, स्वतः प्रामाण्ये च सर्वेषां स्वप्नादिज्ञानानामपि प्रामाण्यं स्यादित्याह **प्रामाण्यमिति** । तेषामपि तावदुत्सगतः प्राप्तं प्रामाण्यम्, न च दोषाधीनेनाप्रामाण्येनापवादः सम्भवति, अप्रामाण्यस्याऽवस्तुत्वेन दोषाधीनत्वाऽसम्भवादित्युक्तमिति ॥ ४० ॥

त्वत्पक्षे कथमप्रामाण्यम् ? दोषादिति चेत्, तदवस्थं तर्ह्यवस्तुनो हेतुमत्त्वमत आह **मत्पक्षे इति** । मम हि स्वाभाविकमप्रामाण्यमपवादकं तु प्रामाण्यम् । तच्चेह कारणाभावादनुपजातम् । अतः स्वाभाविकमप्रामाण्यमनपोदितं तिष्ठति न तद्दोषैर्जन्यते । अतो न भविष्यत्यवस्तुनो हेतुमत्त्वप्रसङ्ग इति ॥ ४१ ॥

किं पुनः प्रामाण्यस्य कारणं यदभावादिह प्रामाण्याऽनुपजनोऽत आह **इन्द्रियादीति** । ज्ञानकारणभूतेन्द्रियादिगता गुणाः प्रामाण्यस्य कारणम् । अतस्तदभावे तस्याऽनुपजन इति । केन पुनः प्रकारेण तस्याऽभावोऽत आह **तदसदिति** । तावेव प्रकारौ दर्शयति **दुष्टत्वादिति** । शुक्तिरजतसंवेदने सतामेवेन्द्रियाणां दुष्टत्वाद् दोषनिराकृतत्वाद् गुणानामभावः । स्वप्नादिष्विन्द्रियादीनां ज्ञानकारणानामन्यतमस्येन्द्रियस्य लिङ्गस्य वाऽन्यस्य वाऽभावान्निराश्रयतया गुणानामभाव इति ॥ ४२ ॥

---

१. 'द् वेन्द्रि'—ख

अत एव [1]च वो भ्रान्तिर्दोषैर्मिथ्यात्वधीरिति ।
तद्व्याप्तेस्तु गुणाभावस्तत्कृता ह्यप्रमाणता ॥ ४३ ॥

तस्मात् कारणशुद्धत्वं ज्ञानप्रामाण्यकारणम् ।
स्वभावतोऽप्रमाणत्वं तदभावेन [2]लक्ष्यते ॥ ४४ ॥

अन्वयव्यतिरेकाभ्यामप्रामाण्यं न दोषतः ।
नाऽज्ञाने दृश्यते ह्येतत्कारणाभावहेतुके ॥ ४५ ॥

ततश्च पुरुषाभावात्सति वा शुद्ध्यसम्भवात् ।
निर्मूलत्वात् प्रमाणत्वं चोदनायां[3] न युज्यते ॥ ४६ ॥

ननु ज्ञायमानेषु सत्सु दोषेष्वप्रामाण्यं गम्यते । तत्कथं न दोषनिमित्तमत आह अत एवेति । यत एव दोषनिराकृतगुणेषु शुक्तिरजतवेदनादिष्वप्रामाण्यमत एव वो मीमांसकानामियं भ्रान्तिर्दोषैर्मिथ्यात्वधीर्ज्ञानस्य मिथ्यात्वावगम इति तद्भावभावभ्रमात् । परमार्थतस्तु तद्व्याप्तेर्दोषव्याप्तेरिन्द्रियादीनां गुणाभावोऽवगम्यते, तदभावाच्च तदधीनं प्रामाण्यमनवगम्यमानं न स्वाभाविकस्याऽप्रामाण्यस्यापवादकं भवतीत्यनपोदितैवाऽप्रमाणताऽवतिष्ठते । तत्कृता गुणाभावकृता । तत्कृतत्वं चापवादाऽभावस्य तदधीनत्वादिति ॥ ४३ ॥

एतदेवोपसंहरति तस्मादिति ॥ ४४ ॥

एवं तावद्दोषान्वयव्यतिरेकावप्रामाण्यस्याङ्गीकृत्याऽन्यथासिद्धिरुक्ता । सम्प्रत्यन्वयव्यतिरेकावपि न स्त इत्याह अन्वयेति । अन्वयव्यतिरेकाभ्यामप्रामाण्यं दोषत इति यदुच्यते तन्नेत्यन्वयः । कथमित्याह नाज्ञाने इति । त्रिविधमप्रामाण्यं संशयाऽज्ञानविपर्ययैः । तत्राऽज्ञानलक्षणस्याऽप्रामाण्यस्य दोषाधीनत्वं नास्ति ज्ञानकारणाभावादेव तत्सिद्धेरिति । केचित्वज्ञाने दोषव्यतिरेकेऽप्यप्रामाण्याऽन्वयान्न दोषो निमित्तमित्येवं व्याचक्षते ॥ ४५ ॥

आक्षेपमुपसंहरति ततश्चेति । यदा हि गुणापेक्षं प्रामाण्यं तदा शब्दस्य पुरुषशुद्ध्यधीनं प्रामाण्यम् । वेदस्य चाऽपौरुषेयत्वे निराश्रयत्वादेवशुद्ध्यभावः । पौरुषेयत्वे पुरुषस्याऽतीन्द्रियार्थे नैव शुद्धिः सम्भवतीत्यप्रामाण्यं वेदस्य । स्वतो द्वयमित्यत्रापि सांकर्यादेव प्रामाण्यानिर्णयात्फलतोऽप्रामाण्यमेव । परतो द्वयमित्यत्रापि गुणाभावादेवाऽप्रामाण्यमिति ॥ ४६ ॥

---

१. 'वचः भ्रान्तिः'—घ

२. 'लभ्यते' - ख

३. 'नां'—ग

स्वतः सर्वप्रमाणानां प्रामाण्यमिति [1]गम्यताम् ।
न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥ ४७ ॥
आत्मलाभे च भावानां कारणापेक्षता भवेत् ।
लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥ ४८ ॥
'जातेऽपि यदि विज्ञाने तव नार्थोऽवधार्यते ।
यावत्कारणशुद्धत्वं न प्रमाणान्तराद्भवेत् ॥ ४९ ॥
तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् ।
यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा ॥ ५० ॥

अत्र प्रतिविधत्ते **स्वत** इति । कारणमाह **न हीति** । यदि ज्ञानस्य स्वविषयतथात्वावधारणे स्वतः शक्तिर्न स्यात्तदा नान्येनापि शक्यते सम्पादयितुम् । अतो न कदाचित् कस्यचित् कश्चिदप्यर्थोऽवधार्येतेत्याऽऽन्ध्यमेवाऽशेषस्य जगतः प्रसज्येत । कुतश्चास्य परतः सिद्धिः ? गुणावधारणादिति चेत्, के पुनर्गुणा नाम ? न हि चक्षुरादिषु गुणा नाम केचिदुपलभ्यन्ते । वैमल्यं गुण इति चेत्, नन्वेवं दोषाभावो गुणः, तथा चेद्वेदस्याऽपि तत्सम्भवाद् गुणाधीनेऽपि प्रामाण्ये नास्माकं काचित्क्षतिः । कथं च गुणात् तत्सिद्धिः ? गुणनिमित्तं विज्ञानस्य यथार्थविषयत्वम् । अतः कारणभूतगुणावगमेन विषयस्यार्थस्य तथात्वमवगम्यते । विषयतथात्वमेव च ज्ञानस्य प्रामाण्यमतोऽस्य गुणावगम्यत्वमिति चेत्, स्यादेवं यदि गुणनिमित्तं यथार्थत्वं स्यान्न तु तदस्ति । यदि हि तन्निमित्तं स्यात्ततो गुणरहिताद्दोषयुक्ताच्च चक्षुरादेरुपजाते पीतशङ्खादिज्ञाने न किंचित्सत्यं गम्येत, गम्यते तु तत्राऽपि शङ्खरूपादिकं सत्यम् । अतः स्वकारणनिमित्तमेव ज्ञानस्य यथार्थत्वं तद्दोषनिमित्तं चाऽयथार्थत्वम् । तथा हि सति पीतशङ्खादिज्ञानस्य स्वकारणतः सत्यविषयत्वं तद्दोषतश्चाऽसत्यविषयत्वं युक्तं भविष्यति ॥ ४७ ॥

अभ्युपेत्यापि प्रमाणज्ञानस्य गुणवत्कारणजन्यत्वं विषयाऽवधारणस्य तदधीनत्वं नास्तीत्याह **आत्मेति** । सर्वे हि भावाः स्वात्मलाभायैव स्वकारणमपेक्षन्ते । घटो हि मृत्पिण्डादिकं स्वजन्मन्येवाऽपेक्षते नोदकाहरणेऽपि । तथा ज्ञानमपि स्वोत्पत्तौ गुणवदितरद्वा कारणमपेक्षतां नाम, स्वकार्ये तु विषयनिश्चयेऽनपेक्षमेवेति ॥ ४८ ॥

यदुक्तं 'न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते' इति तद् विवृणोति **जाऽतेपीति** त्रयेण । यद्युपजातमपि ज्ञानं स्वविषयाऽवधारणाय स्वकारणगतगुणावधारणमपेक्षते ततो गुणावधाराणाय प्रमाणान्तराज्ज्ञानोत्पादः प्रतीक्षितव्यः । न ह्यपरिच्छिन्नो गुणः प्रामाण्यं गमयति असत्समत्वात् । तदपि ज्ञानं

१. 'गृह्य'—क

तस्यापि कारणे शुद्धे तज्ज्ञाने स्यात्प्रमाणता ।
तस्याप्येवमितीच्छंश्च न 'क्वचिद्व्यवतिष्ठते' ॥ ५१ ॥

यदा स्वतः प्रमाणत्वं तदान्यन्नैव गृह्यते ।
निवर्त्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः ॥ ५२ ॥

तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ ५३ ॥

अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाऽज्ञानसंशयैः ।
वस्तुत्वाद् द्विविधस्यात्र सम्भवो दुष्टकारणात् ॥ ५४ ॥

अविज्ञाने तु दोषाणां व्यापारो नैव कल्प्यते ।
कारणाभावतस्त्वेव तत्सिद्धं नस्त्वदुक्तिवत् ॥ ५५ ॥

विषयज्ञानवदेव स्वविषयाऽवधारणाय स्वकारणगुणावधारकं ज्ञानान्तरमपेक्षते, तदपि तथेति जन्मसहस्रेणापि न कश्चिदर्थोऽवधार्येतेति प्रामाण्यमेव सर्वत्रोच्छिद्येत । अतः प्रामाण्यं चेदस्ति स्वत एवाङ्गीकर्त्तव्यमिति ॥ ४९ ॥ ५१ ॥

ननु स्वतः प्रामाण्येऽप्यपवादकदोषाऽभावग्रहणेऽस्त्येवाऽनवस्थाऽत आह यदेति । स्यादेवं यद्यपवादकाऽभावाय दोषाऽभावो ग्रहीतव्यः । न त्वेवम्, ज्ञायमाना हि दोषाः प्रामाण्यं विघ्नन्तीति तदज्ञानादेव तदपवादकं मिथ्यात्वं निवर्त्तते, तदज्ञानं चायत्नसिद्धमिति न काचिदनवस्थेति ॥ ५२ ॥

उपसंहरति तस्मादिति । प्राप्ता ऽवगता प्रमाणता विषयतथात्वम् अर्थाऽन्यथात्वकारणगतदोषज्ञानाभ्यामवगतेनाऽप्रामाण्येनापोद्यते "नैवमयमर्थ"इति ॥ ५३ ॥

नन्वप्रामाण्यमवस्तुत्वान्न दोषजन्यम् । अतज्जन्यं च कथं ततोऽवगम्यतेऽत आह अप्रामाण्यमिति । ततः किमित्याह वस्तुत्वादिति । संशयो नाम स्थाणुर्वा पुरुषो वेत्यनवधारणात्मकः प्रत्ययः, विपर्ययोऽप्यतथाभूतार्थे तथाभावनिश्चायकं ज्ञानमेव, अतस्तयोर्वस्तुत्वात्सम्भवति दोषजन्यत्वम् । दोषनिमित्तं हि ज्ञानस्यायथार्थत्वम्, दोषान्वयव्यतिरेकानुविधानात् । अतो दुष्टकारणजन्येन ज्ञानेनात्मनः प्रामाण्यं विषयस्यार्थस्याऽतथाभूतस्यापि तथात्वमवगतमप्यर्थान्यथात्वज्ञानेन दोषज्ञानेन वाऽपोद्यते ॥ ५४ ॥

यत्त्वज्ञानरूपमप्रामाण्यं तत्र दोषाणां व्यापारो नैवास्माकमपि विद्यते ज्ञानकारणाभावादेव तद्भवतामिवास्माकमपि सिद्धमित्याह अविज्ञाने इति ॥ ५५ ॥

---

१. 'कश्चित्'; 'कश्चिद्'—क, ग

दोषतश्चाऽप्रमाणत्वे स्वतःप्रामाण्यवादिनाम् ।
गुणज्ञानाऽनवस्थावन्न दोषेषु प्रसज्यते ॥ ५६ ॥
साक्षाद्विपर्ययज्ञानाल्लघ्व्येव त्वप्रमाणता ।
पूर्वाऽबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति ॥ ५७ ॥
दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे ।
अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥ ५८ ॥

ननु प्रामाण्यवदप्रामाण्येऽपि परायत्ते किमित्यनवस्था न भवत्यत आह दोषत इति । स्वतःप्रामाण्यवादिनामिति वाऽनवस्थाभावे हेतुः । न हि पराधीनत्वमात्रेणाऽनवस्था भवति । सजातीयापेक्षायां ह्यनवस्था भवति । तेन यदि प्रमाणान्तरायत्तप्रामाण्यवदप्रमाणान्तरायत्तमप्रामाण्यं स्यात्ततः स्यादनवस्था । तत्तु प्रमाणभूतार्थान्यथात्वदोषज्ञानाधीनम्, प्रामाण्यं च स्वत इति नाऽनवस्था । ॥ ५६ ॥

एतदेव विवृणोति साक्षादिति । यत्र तावत्साक्षादेकस्मिन्विषये विपर्ययज्ञानं विपरीतरूपज्ञानं नेदं रजतमिति, तत्र तेनैव स्वतःप्रमाणेनार्थाऽन्यत्वरूपा लघ्वी शीघ्रगम्यैवाऽप्रमाणतेति नानवस्थाशङ्केति । किमिति पुनस्तद्वशेन पूर्वस्याऽप्रामाण्यम्, विपरीतं कस्मान्न भवतीत्यत आह पूर्वेति । पूर्वं हि परमबाधित्वोत्पद्यते परस्य तदानीमनुत्पन्नत्वात् । उपजाते तु तस्मिन् उपजायमानेनैव तेन बाधितं पूर्वमसत्त्वात् न परस्य बाधकं भवति । परं तु पूर्वस्मिन्नुपजाते तद्विरुद्धार्थोपस्थापकमुपजायमानमेव तस्य बाधकं भवतीति । कथं वा लघ्वीत्याह पूर्वेति । ततश्च पूर्वाऽनाबाधेनोत्पत्तिमेवाऽनासादयतोत्तरेणोत्पत्त्यवस्थायामेवार्थाऽन्यथात्वरूपाऽप्रामाण्यबोधनाल्लाघवमिति ॥ ५७ ॥

भवत्वेवं समानविषयेणार्थान्यथात्वज्ञानेन पूर्वस्य बाधः, दोषज्ञानेन तु भिन्नविषयेण कथं पीतशङ्खज्ञानं बाध्यते ? पीतशङ्खज्ञानं हि शङ्खे पीतिमानमवगमयति, दोषज्ञानं तु नेत्रे पित्तदोषम्, अतो नात्र बाधः सम्भवत्यत आह दुष्टकारणेति । यद्यप्यत्र साक्षाद्विपर्ययज्ञानाभावान्न पूर्ववदप्रमाणता लघ्वी भवति, तथापि कारणदोषाऽवगमप्रणाड्याऽर्थात्तुल्यार्थतां प्राप्य कियता विलम्बेनास्त्येव बाधः, यथा गोदोहनेन पशुकामस्य प्रणयेदिति पुरुषार्थेनापि गोदोहनेन चमसस्य क्रत्वर्थस्याप्यार्थिकतुल्यविषयतया भवति बाधो, द्वयोरपि प्रणयनद्वारत्वात्तत्र गोदोहनेन प्रणयने साधिते चमसस्यार्थाभावान्निवृत्तिः, एवमत्राप्यस्त्येवार्थतस्तुल्यविषयत्वम् । पीतज्ञानं हि पित्तं गृह्णाति तच्च श्वेते पीतभ्रमस्य कारणतयाऽवगते चक्षुषि दृश्यमानं स्वकार्यस्य पीतज्ञानस्य भ्रान्तत्वमवगमयति, तद्भ्रान्तत्वेन चार्थान्यथात्वमिति बाधसिद्धिः ॥ ५८ ॥

तत्र दोषान्तरज्ञानं बाधधीर्वा परा न चेत् ।
तदुद्भूतौ द्वितीयस्य मिथ्यात्वादाद्यमानता ॥ ५९ ॥

स्वत एव हि तत्रापि [1]दोषाऽज्ञानात् प्रमाणता ।
दोषज्ञाने त्वनुत्पन्ने॰ [2]न शङ्क्या निष्प्रमाणता ॥ ६० ॥

एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः ।
प्रार्थ्यते [3]तावतैवैकं स्वतः प्रामाण्यमश्नुते ॥ ६१ ॥

किमेष एवोत्सर्गः यत्सर्वस्याद्यस्य द्वितीयेन बाध इति,नेत्याह तत्रेति । तत्र द्वितीये बाधकज्ञाने तृतीयं दोषान्तरज्ञानं बाधधीर्वा यदि नोद्भवति तदा तस्याद्यबाधकत्वम्, तदुद्भूतौ तु द्वितीयस्य मिथ्यात्वादाद्यस्य प्रामाण्यं भवतीति ॥ ५९ ॥

नन्वेवं तृतीयाधीनमाद्यस्य प्रामाण्यं परत एव स्यादत आह स्वतएवेति । तत्खलूत्पत्तित एवार्थं परिच्छिन्दत्स्वतएव प्रमाणम् । द्वितीयेन तु दोषज्ञानेन भ्रान्त्या प्रसक्तबाधनम्, तृतीयेन तु द्वितीये बाधिते सत्यज्ञातदोषत्वान्निरपवादं भवति ।

ननु यथाऽऽद्यस्य द्वितीयेन दोषोऽवगतस्तस्यापि तृतीयेन, तथा तृतीयस्याऽपि दोषाशङ्का भवत्येव, तथा सर्वत्रेति न क्वचिदाश्वासः स्यादत आह दोषज्ञाने इति । दिक्कालावस्थेन्द्रियविषयदोषा हि मिथ्यात्वहेतवो लोकप्रसिद्धा यत्र नैव सम्भवन्ति, यथा जागर्यामालोके स्वस्थेन्द्रियमनस्कस्य सन्निहितघटज्ञाने, तत्र नैव दोषाशङ्का तदभावाच्चाप्रामाण्यशङ्कापि नैव भवति । यथाविधेषु ह्यप्रामाण्यसम्भवस्तथाविधेष्वेव तदाशङ्का भवति । सम्भावितदोषेषु च तत्सम्भव इति कथमन्यत्र शङ्क्यते ? न हि ज्ञानत्वमात्रेण संशयो युक्तः, संशयस्य साधारणधर्मादिनिश्चयाधीनत्वात् । तदवश्यं कानि चिज्ज्ञानान्यसन्दिग्धप्रामाण्यान्येवोत्पद्यन्ते, तस्मान्न सर्वत्राशङ्का । यत्रापि दूरत्वादिदोषसम्भवादप्रामाण्यशङ्का, तत्रापि प्रत्यासत्तिगमनादिनाऽन्यतरपदार्थनिर्णयान्नातिदूरगमनमिति ॥ ६० ॥

एवं च तृतीयज्ञाने दोषो यदि न सम्भावितस्ततस्तदवधिरेव निर्णयः । अथ तु सम्भावितस्ततस्तन्निराकरणप्रयत्नेन चतुर्थज्ञानावसानो निर्णय इति नाधिकज्ञानाऽपेक्षा । तावतैव तृतीयेन चतुर्थेन वा द्वितीयस्य तृतीयस्य बाधे सति यस्यैवाद्यस्य द्वितीयस्य वा प्रामाण्यं समर्थ्यते तस्य स्वाभाविकं प्रामाण्यमनपोदितं भवति इतरच्चापवादादप्रमाणमिति नाऽनवस्था । तदिदमाह एवमिति ॥ ६१ ॥

१. 'दोषज्ञानादमानता'—क
२. 'नाशङ्का निःप्रमाणिका'—क
३. 'तावदेवैकं'—ग, क

शब्दे दोषोद्भवस्तावद् वक्त्रधीन इति स्थितिः[1] ।
तदभावः क्वचित् तावद् गुणवद्वक्तृकत्वतः ॥ ६२ ॥
तद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसम्भवात् ।
यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥ ६३ ॥
पौरुषेये द्वयं दृष्टं दोषाभावो गुणास्तथा ।
प्रामाण्यं तत्र गुणतो नैव स्यादित्युदाहृतम् ॥ ६४ ॥
तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः ।
अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः ॥ ६५ ॥
प्रत्ययोत्पत्तिहेतुत्वात् प्रामाण्यं नापनीयते ।
दोषाभावो गुणेभ्यश्चेन्ननु सैवाऽस्थितिर्भवेत् ॥ ६६ ॥

एवं सामान्येन स्वतः प्रामाण्यं परतश्चाऽप्रामाण्यमुपपाद्याऽधुना प्रकृतवेद-प्रामाण्यसिद्धये शब्दस्वभावमनुसन्धत्ते **शब्दे** इति । वक्तृदोषाधीने इत्यर्थः । तद-भावस्तर्हि कथमित्यत आह **तदभाव** इति । क्वचित् पौरुषेयवाक्ये ॥ ६२ ॥

कथमेतदित्याह **तद्गुणैरिति** । वेदे तु पुरुषाभावादेव निराश्रयत्वाद्दोषाणाम-भाव इत्याह **यद्वेति** । दोषाभावाच्च वेदस्यौत्सर्गिकं प्रामाण्यमनपोदितं भवति॥६३॥

ननु वक्तृगुणान्वयव्यतिरेकानुविधायित्वाच्छब्दस्य प्रामाण्यं तदधीनमेव युक्तम्, तदभावाच्च वेदस्याऽप्रामाण्यमेव युक्तमत आह **पौरुषेये इति** । सर्वत्र प्रमाणभूतपौरुषेयवचसि न केवलं गुणा एव, दोषाभावोऽपि दृष्टः । तत्र गुणनिबन्ध-नत्वं प्रामाण्यस्य प्रागेव निरस्तम्, अतो दोषाऽभावनिबन्धनमेव तदतो वेदस्यापि सिध्यतीति ॥ ६४ ॥

ननु दोषाभावनिबन्धनमपि परत एव स्यादितीमामाशङ्कामपनुदन्नुपसंहरति **तस्मादिति** । दोषाभावोऽपवादाभाव एवोपयुज्यते न साक्षात्प्रामाण्ये **अप्रामाण्य-द्वयाऽसत्वमिति** । यत्रापि साक्षाद्विपर्ययज्ञानादर्थान्यथात्वमवगम्यते यत्रापि दोषज्ञानेन, तत्रोभयत्रापि ज्ञानस्याऽयथार्थविषयत्वे दोषा एव कारणमतो दोषाभावे द्वयाऽसत्त्वादुत्सर्गस्याऽनपवाद इति ॥ ६५ ॥

असति चापवादे यत्प्रत्ययोत्पत्तिहेतुत्वात् प्रत्यक्षादिवत्पुरुषवाक्यस्यापि प्राप्तं प्रामाण्यं तन्नापनीयत इत्याह **प्रत्ययेति** । तेन लोकेऽपि शब्दस्य स्वत एव प्रामाण्याद् वेदस्यापि तत्सिद्धिरिति ।

अत्र गुणेभ्यो दोषाभावः पौरुषेयेष्वित्येतच्छ्रुत्वा कश्चिच्चोदयति **दोषा-भाव इति** । ॥ ६६ ॥

---

१. 'स्थितम्'—क

तदा न व्याप्रियन्ते हि ज्ञायमानतया गुणाः ।
दोषाभावे तु विज्ञेये सत्तामात्रोपकारिणः ॥ ६७ ॥

तत्राऽपवादनिर्मुक्तिर्वक्त्रभावाल्लघीयसी ।
वेदे तेनाऽप्रामाण्यं नाशङ्कामपि गच्छति ॥ ६८ ॥

अतो वक्त्रनधीनत्वात् प्रामाण्ये तदुपासनम् ।
न युक्तमप्रमाणत्वे कल्प्ये [1]तत्प्रार्थना भवेत् ॥ ६९ ॥

ततश्चाप्ताऽप्रणीतत्वं न दोषायात्र जायते ।
प्रयोगाणां तु सर्वेषां वक्ष्यामः प्रतिसाधनम् ॥ ७० ॥

पौरुषेये तु वचने प्रमाणान्तरमूलता ।
तदभावे [2]हि तद् दुष्येत् इतरन्न कदाचन ॥ ७१ ॥

परिहरति तदेति । प्रामाण्यावधारणे हि ज्ञायमानतया गुणाः कारणमिति स्यादनवस्था, दोषाऽभावे तु सत्तामात्रोपकारिणस्ते, तन्निराकृतास्तु दोषा नौत्सर्गिकं प्रामाण्यमपवदन्तीति ॥ ६७ ॥

स्यात्तात्रदेवं गुणनिराकृतदोषेष्वाप्तवाक्येष्वपवादनिर्मुक्तिः, वेदे तु गुणरहिते कथमत आह तत्रेति । ॥ ६८ ॥

एवं लोकेऽपि शब्दप्रामाण्यस्य वक्त्रपेक्षाऽभावाद्वेदस्य प्रामाण्यसिद्ध्यर्थं नैयायिकादिभिः कर्त्तुरुपासनमित्युपपादनं कृतं तदनर्थकमित्याह अतइति युक्तमन्तेन । यदि तु शाक्यादिवदप्रामाण्यमेव वेदस्य कल्पयितव्यं, ततोऽर्थवती कर्तृप्रार्थनेति सोपहासमाह अप्रमाणत्वे इति ॥ ६९ ॥

ततश्च यदुक्तं 'सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जना'दिति तदयुक्तमित्याह ततश्चेति । ये तु स्वर्गयागादिसम्बन्धविषया इत्यादयः प्रयोगास्ते सप्रतिसाधनत्वान्न वेदाऽप्रामाण्यमापादयन्तीत्याह प्रयोगाणामिति । 'चोदनाजनिता बुद्धि' रित्यादिना वक्ष्यतइति ॥ ७० ॥

ननु पौरुषेयमपि चेत्स्वतः प्रमाणं, किं तस्यापि मूलप्रमाणेनाऽत आह पौरुषेये इति । प्रमाणान्तरमूलताऽपेक्षणीयैवेति । कथमित्याह तदभाव इति । प्रमाणाभावे हि तदर्थादप्रमाणमूलतया दुष्टं भवति, दोषाच्च प्रामाण्यापवाद इत्यनपवादाय प्रमाणान्तरमपेक्षते, इतरत्तु वैदिकं तदभावेऽपि न दुष्यतीति नाऽप्रमाणं भवतीति ॥ ७१ ॥

---

१. 'नात्मार्थता'—क
२. 'तु'—घ

तेनेतरैः प्रमाणैर्या चोदनानामसङ्गतिः ।
तयैव स्यात् प्रमाणत्वमनुवादत्वमन्यथा ॥ ७२ ॥

अन्यस्यापि प्रमाणत्वे सङ्गतिर्नैव कारणम् ।
तुल्यार्थानां विकल्प्यत्वात् एकं तत्र हि बोधकम् ॥ ७३ ॥

यत्रापि स्यात् परिच्छेदः प्रमाणैरुत्तरैः पुनः ।
नूनं तत्रापि पूर्वेण सोऽर्थो नाऽवधृतस्तथा ॥ ७४ ॥

सङ्गत्या यदि चेष्येत पूर्वपूर्वप्रमाणता ।
प्रमाणान्तरमिच्छन्तो न व्यवस्थां लभेमहि ॥ ७५ ॥

कस्यचित्तु यदीष्येत स्वत एव प्रमाणता ।
प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धनः ॥ ७६ ॥

न केवलं दोषाभावः किन्तु गुण एव मूलप्रमाणाभावो वेदस्येत्याह **तेनेति** । तेन मूलप्रमाणाभावेनाऽऽयाता येयं प्रमाणान्तरासंगतिस्तयैव प्रामाण्यम्, अन्यथा ऽनुवादत्वापत्तेरिति ॥ ७२ ॥

ननु संवादनिबन्धनमेव सर्वेषां प्रत्यक्षादीनां पौरुषेयवाक्यानां च प्रामाण्यम् । न चासौ वेदस्यास्तीति कथं प्रामाण्यमत आह **अन्यस्यापीति** । पूर्वत्र गुणनिबन्धनत्वं निराकृतम् । अधुना संवादाधीनत्वमिति वेदितव्यम् ।

संगतिर्न कारणं किन्तु विरोधिन्येवेति कथमित्याह **तुल्यार्थानामिति** । यत्रैकस्मिन्विषयेऽनेकविज्ञानसन्निपातस्तत्र तेषामन्योन्यनिरपेक्षाऽर्थपरिच्छेदहेतुत्वेन तुल्यानामेव प्रामाण्यं न समुच्चितानाम् । अतो न संवादाधीनं प्रामाण्यमिति ॥७३॥

नन्वेकमेवार्थं दूराद् दृष्ट्वाऽपि पुनः प्रमित्सयैव प्रत्यासीदन्तो दृश्यन्ते । तत्पूर्वस्य नैरपेक्ष्ये नोपपद्यते । अतः संवादापेक्षमेव प्रामाण्यमत आह **यत्रापीति** । अप्रमितविशेषप्रमित्सया तत्र प्रत्यासत्तिर्न पुनः प्रमितस्य संवादायेति ॥ ७४ ॥

संगति निबन्धनं च प्रामाण्यं गुणनिबन्धनवदेव न क्वचिद् व्यवतिष्ठते इत्याह **सङ्गत्येति** ॥ ७५ ॥

ननु विषयज्ञानस्यार्थक्रियाज्ञानाधीनं प्रामाण्यं तच्च स्वतः प्रमाणमिति नाऽनवस्था । यथाऽऽह धर्मकीर्त्तिः "प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः । अविसंवादन"मिति । न्यायविदोऽप्याहुः "प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम्" इति । तदिदमाशङ्कते **कस्यचिदिति** । परिहरति **प्रथमस्येति** । न विषयज्ञानार्थक्रियाज्ञानयोः कश्चिद्विशेष इति दर्शितं न्यायरत्नमालायां शास्त्रदीपिकायां च ॥ ७६ ॥

श्रोत्रधीश्चाप्रमाणं स्यादितराभिरसङ्गतेः ।
स्याच्चेत् तज्जनितेनैव ज्ञानेनान्येन सङ्गतिः ॥ ७७ ॥

वेदेऽपि शतकृत्वः स्याद् बुद्धिरुच्चारणाऽनुगा ।
[1]साधनान्तरजन्या तु बुद्धिर्नास्ति द्वयोरपि ॥ ७८ ॥

यथा त्वेकेन्द्रियाधीनज्ञानान्तरनिबन्धना ।
सङ्गतिः कारणं [2]प्राप्य तथा वेदेऽपि कल्प्यताम् ॥ ७९ ॥

तस्माद् दृढं यदुत्पन्नं [3]नापि [4]संवादमृच्छति ।
ज्ञानान्तरेण विज्ञानं तत् प्रमाणं प्रतीयताम् ॥ ८० ॥

न चाऽनुमानतः साध्या शब्दादीनां प्रमाणता ।
सर्वस्यैव हि मा प्रापत् प्रमाणान्तरसाध्यता ॥ ८१ ॥

ननु प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते ।
न चेत्थमगृहीतेन व्यवहारोऽवकल्पते ॥ ८२ ॥

इतश्च न संवादाधीनं प्रामाण्यमित्याह श्रोत्रधीरिति । इतराभिर्नेत्रादिधीभिरित्यर्थः । शङ्कते स्याच्चेदिति ॥ ७७ ॥

परिहरति वेदेऽपीति । अथ वेदस्य विजातीयसंवादाभावादप्रामाण्यं तच्छ्रोत्रबुद्धेरपि स्यादित्याह साधनान्तरेति ॥ ७८ ॥

ततश्च संवादकारणत्वादिना सजातीयसंवादोऽपि कारणमिति वदितव्यम्, ततश्च सिद्ध्यति वेदस्याऽपि प्रामाण्यमित्याह यथेति ॥ ७९ ॥

यत एवं गुणसंवादार्थक्रियादीनामपेक्षा नास्ति, तस्मादीदृशं ज्ञानं प्रमाणमित्याह तस्मादिति ॥ ८० ॥

ननु न क्वचिदप्याप्ताऽप्रणीतस्य वाक्यस्य प्रामाण्यं दृष्टम्, तत्कथं वेदस्य स्यादत्राह न चेति । अनुमानसाध्ये हि प्रामाण्ये दृष्टान्यापेक्षा, न तु तत्तथेति । कस्मादित्याह सर्वस्येति । अनुमानापेक्षत्वे सत्यनुमानस्याऽप्यनुमानान्तराऽपेक्षत्वात्सैवाऽनवस्था स्यादिति ॥ ८१ ॥

चोदयति नन्विति । नान्यापेक्षं प्रामाण्यम्, किन्तु स्वतः सिद्धमित्युक्तम् । न च प्रत्यक्षादिज्ञानमुत्पद्यमानमेव प्रमाणमित्येवं गृह्यते, न हि तत् तदात्मानं गृह्णाति, कथं तद्धर्मत्वेन प्रामाण्यं गृह्णीयान्न चाऽगृहीतप्रामाण्येन व्यवहारसिद्धिरिति ॥ ८२ ॥

---

१. 'प्रमाणान्तर'—क
२. 'क्लृप्ता'—ग, क
३. 'न'—क
४. 'वि'—क

प्रमाणं ग्रहणात्पूर्वं स्वरूपेणैव संस्थितम् ।
निरपेक्षं स्वकार्येषु गृह्यते प्रत्ययान्तरैः ।। ८३ ।।

तेनास्य ज्ञायमानत्वं प्रामाण्ये नोपयुज्यते ।
विषयानुभवो ह्यत्र पूर्वस्मादेव लभ्यते ।। ८४ ।।

अप्रमाणं पुनः स्वार्थग्राहकं स्यात् स्वरूपतः ।
निवृत्तिस्तस्य मिथ्यात्वे नागृहीते परैर्भवेत् ।। ८५ ।।

न ह्यर्थस्याऽतथाभावः [1]पूर्वेणातस्तथात्ववत् ।
तत्राप्यर्थाऽन्यथाभावे धीर्यद्वा दुष्टकारणे ।। ८६ ।।

परिहरति **प्रमाणमिति** । विनैवात्मग्रहणेन प्रमाणं स्वसत्तामात्रेणैव संस्थितं कृतकार्यं भवति अर्थपरिच्छेदकरणात्परिच्छिन्ने चार्थे तन्मात्रनिबन्धनत्वात्कार्यस्य व्यवहारस्य तत्रापि नाऽन्यापेक्षा । एवं कृतकार्यं पश्चात् सञ्जातायां जिज्ञासायामानुमानिकैः प्रत्ययान्तरैर्गृह्यते । यथा वक्ष्यति ज्ञाते त्वनुमानादवगच्छाम इति ।। ८३ ।।

तेनाऽस्य ज्ञानस्य ज्ञायमानत्वमात्मीयप्रामाण्ये ग्रहीतव्ये नोपयोग्येवेत्याह **तेनेति** । कथं तदज्ञाने तत्प्रामाण्यग्रहणमित्याह **विषयानुभव इति** । न ज्ञानसम्बन्धित्वेन प्रामाण्यं गृह्यत इति ब्रूमः, किन्तु विषयतथात्वम् तद्विज्ञानस्य प्रामाण्यम्, तन्निवन्धनत्वाज्ज्ञाने प्रमाणबुद्धिशब्दयोः । तच्चाऽज्ञातादेव ज्ञानात्स्वत एव गृहीतमित्यनर्थकं प्रमाणान्तरमिति । अप्रमाणं तु न, स्वीयमप्रामाण्यं स्वतो गमयति तदपि हि स्वरूपेणैवार्थं गृह्णाति स्वानुरूपमिति यावत् । रजतज्ञानं हि शुक्तिकाशकलं रजतमित्येव गृह्णाति न पुनर्नेदं रजतमिति । तेनाऽप्रमाणज्ञानमपि स्वतः प्रामाण्यमेवात्मनोऽविद्यमानमपि गृह्णत् तन्निवन्धनं व्यवहारं प्रवर्त्तयति ।। ८४ ।।

तत्राऽप्रामाण्यग्रहणाय व्यवहारनिवृत्तये वाऽस्ति परापेक्षेत्याह **अप्रमाणमिति** ।। ८५ ।।

तदेव व्यनक्ति **नहीति** । अर्थान्यथात्वं हि ज्ञानस्याप्रामाण्यम् । न च तत्तथात्ववत्स्वतो गृहीतमिति युक्ता परापेक्षेति ।

यद्येवं वेदस्यापि परत एवाऽप्रामाण्यमिति ब्रूमः, अस्ति हि बाधः पूर्वोक्तादनुमानगणादित्यत आह **तत्रापीति** । तत्राप्यप्रामाण्येऽर्थान्यथात्वे वा दुष्टकारणे वाऽऽत्मनो या धीः सैव कारणं नाऽनुमानगण इति ।। ८६ ।।

---

१. 'पूर्वेणात्त'—क

तावतैव च मिथ्यात्वं गृह्यते नान्यहेतुकम् ।
उत्पत्त्यवस्थं[1] चैवेदं प्रमाणमिति गीयते[2] ॥ ८७ ॥
अतो यत्रापि मिथ्यात्वं परेभ्यः[3] प्रतिपाद्यते[4] ।
तत्राप्येतद् द्वयं वाच्यं न तु साधर्म्यमात्रकम् ॥ ८८ ॥
चोदनार्थाऽन्यथाभावं कुर्वतश्चाऽनुमानतः ।
तज्ज्ञानेनैव यो बाधः स कथं विनिवार्यते ॥ ८९ ॥
तन्मिथ्यात्वादबाधश्चेत् प्रासमन्योन्यसंश्रयम् ।
नानुमानादतोऽन्यद्धि बाधकं किंचिदस्ति ते ॥ ९० ॥
न चान्यैरग्रहेऽर्थस्य स्यादभावो रसादिवत् ।
तेषां जिह्वादिभिर्यस्मान्नियमो ग्रहणेऽस्ति हि ॥ ९१ ॥

किमियं राजाज्ञा ? नेत्याह तावतेति । तावतैव कारणद्वयेन लोके ज्ञानानामप्रामाण्यं गृह्यते नाऽन्यथेति सर्वजनस्वसंवेद्यमिति । ननु प्रमाणं सद् बाधकं पूर्वस्य मिथ्यात्वं करोति, तस्य तु कुतः प्रामाण्यमत आह उत्पत्तीति । स्वतस्तस्य प्रामाण्यमिति वर्णितमिति ॥ ८७ ॥

यत एवैवं कारणद्वयादेकमिथ्यात्वं स्वयमवगतमत एव परेभ्यो मिथ्यात्वं प्रतिपादयता एतदेव द्वयं वक्तव्यं न यत्किञ्चित्साधर्म्यमात्रं प्रत्यक्षाद्यवगतार्थत्वादिकमित्याह अत इति ॥ ८८ ॥

आगमविरुद्धं चाऽनुमानमित्याह चोदनेति ॥ ८९ ॥

शङ्कते तन्मिथ्यात्वादिति । परिहरति प्राप्तमिति । कथमित्याह नाऽनुमानादिति । तेनैवानुमानेन बाधान्मिथ्यात्वं, सिद्धे च मिथ्यात्वेऽनुमानमितीतरेतराश्रयत्वमिति ॥ ९० ॥

ननु यथा ऽनुमानादन्यद् बाधकं नास्ति, तथा साधकमप्यागमादन्यन्नास्ति, तेन सद्भावोऽपि वेदार्थस्य दुर्लभ एवात आह न चेति । न हि वयमनुमानसद्भावमङ्गीकृत्यैव बाधकान्तराऽभावान्मिथ्यात्वस्याऽसिद्धिं ब्रूमः, किंत्वनुमानमेव नोदेतीति, साधकस्त्वागमो विद्यत एवेति । नत्वेकेन गृहीतस्यार्थस्यान्यैरगृहीतस्याऽभावो भवति रसादीनामिव, अन्यथा तेषामपि जिह्वादिगृहीतानां नेत्राद्यगृहीतानामभावः स्यादिति ॥ ९१ ॥

---

१. 'उत्पत्त्यवस्थमेवेदं'—ग.
२. 'मीयते'—ग, क
३. 'परेण'—क
४. 'प्रतिपादयेत्'— क

तद्धियैवाऽर्थबोधश्चेत् तादृग् धर्मे भविष्यति।
ममाऽसिद्धमिदं[1] किं तु वेदाज्जातेऽवबोधने ॥ ६२ ॥
वक्तुं न द्वेषमात्रेण युज्यते [2]सत्यवादिना।
द्वेषादसंमतत्वाद् वा न च स्यादप्रमाणता ॥ ६३ ॥
न चात्मेच्छाऽभ्यनुज्ञाभ्यां प्रामाण्यमवकल्पते।
अग्निदाहादिदुःखस्य न ह्यप्रत्यक्षतेष्यते ॥ ६४ ॥
न [3]चाभिलापिकं ज्ञानं प्रामाण्येनावधार्यते।
तस्मादालोकवद् वेदे सर्वसाधारणे सति ॥ ६५ ॥
[4]नैवं विप्रतिपत्तव्यं बौद्धादेर्वद्यतेऽन्तरम्।
पुरुषाऽशक्तितस्तत्र सापवादत्वसम्भवः ॥ ६६ ॥

शङ्कते तद्धियेति। परिहरति तादृगिति। पूर्वं प्रमाणस्य प्रामाण्यं न प्रमाणान्तरापेक्षमित्युक्तम्। इदानीं तु प्रमेयोऽप्यर्थः एकेनैव सिध्यन्न स्वसिद्धये प्रमाणान्तरमपेक्षत इत्युच्यत इत्यपौनरुक्त्यम्।

नन्वसिद्धं नश्चोदनाप्रामाण्यं कथं तद्बाधोऽनुमानदूषणम्। अत्र तावदिदमेव वक्तव्यं, यद्यपि तवाऽसिद्धं तथाप्यस्माकं तावत्सिद्धमस्मत्प्रतिपादनार्थं च साधन-वचनम्, न च वयमागमबाधितमर्थमनुमानेन प्रतिपादयितुं शक्ताः। तेन भवत्ये-वागमबाधोऽनुमानस्य दूषणम्। न च तवाऽप्यसिद्धिः शक्यते वक्तुमित्याह ममेति। तवापि हि वेदादसंदिग्धाऽविपर्यस्ताऽर्थबुद्धिर्जायते। अतः सिद्धमेव प्रामाण्यम्। असिद्धाभिधानं तु द्वेषमात्रेणाऽसत्यमेवोच्यतइति। न च द्वेषाद-सम्प्रतिपत्तेर्वा भवत्यप्रामाण्यं नापीच्छानुज्ञाभ्यां प्रामाण्यमित्याह द्वेषादिति। अत्रैवोदाहरणमाह अग्नीति। उपसंहरति तस्मादिति पादत्रयेण।

नन्वेवं बौद्धादिवाक्यादपि ज्ञानोत्पत्तेस्तस्यापि वेदवत्प्रामाण्यं स्यादत आह बौद्धादेरिति। "अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनात्"(शा०भा०अ१पा१सू२) इत्यत्र वक्ष्यत इति। एतदेव दर्शयति पुरुषेति। न ह्यतीन्द्रियार्थे पुरुषस्य दर्शनशक्तिः सम्भवति प्रत्यक्षाद्यसम्भवात्।

तेन भ्रान्तिविप्रलम्भमूलतया तद्वाक्यस्य दुष्टत्वादौत्सर्गिकमपि प्रामाण्य-मपोद्यते ॥ ६२ ॥ ६६ ॥

---

१. 'तीदं'—ग, क
२. 'सत्यवादिनाम्'—क
३. 'चाभिलाषिकं'—क
४. 'नैव'—क

△ वेदस्याऽपौरुषेयत्वे सिद्धात्वेवं प्रमाणता ।
'कर्तृमत्त्वे तु वेदस्य सम्यङ्मिथ्यात्ववादिभिः ॥ ९७ ॥

∴ कर्ता गुणाश्च दोषाश्च महाजनपरिग्रहः ।
एवमादि विना युक्त्या कल्प्यं' मीमांसकैः पुनः ॥ ९८ ॥

वेदस्य त्वपौरुषेयत्वेन निर्दोषत्वादनपोदिता प्रमाणता सिद्धा भवतीत्याह **वेदस्येति** ।

किमिति पुनर्वेदस्य कर्ता नाङ्गीक्रियते, कल्पनागौरवात्तदाह **कर्तृमत्वे** इति कल्प्य मन्तेन । **महाजनपरिग्रह इति** । सम्यक्त्ववादिनो वेदानां महाजनपरिग्रहं प्रामाण्याय वर्णयन्ति इतरे स्वागमानाम्, तदिदं सर्वमप्रमाणकमिति । मीमांसकैस्तु न किञ्चिददृष्टं कल्पनीयमित्याह **मीमांसकैरिति** । ॥ ९८ ॥

---

△ बौद्धागमाद् वेदानामयं विशेषः अतीन्द्रियमर्थं द्रष्टुं पुरुषाणामशक्तत्त्वात् बौद्धागमेषु अप्रामाण्यं संभवति । तैः स्वयमेव स्वागमानां पौरुषेयत्वमुक्तम । वेदास्तु अपौरुषेयाः । ततश्च दोषाभावाद् एवं स्वतःप्रमाणता वेदस्य सिद्ध्यति । तेन पौरुषेयत्वमपौरुषेयत्वं च अन्तरं बौद्धगमानां वेदानां चावगन्तव्यम् । ये तु नैयायिकादयः प्रामाण्यसिद्धयर्थं कर्तृमत्वं वेदानां कल्पयन्ति, ये च मिथ्यात्ववादिनो मिथ्यात्वसिद्धयर्थमेव, तेषां न तावद् अस्मर्यमाणकर्तृकल्पना प्रमाणवती । अपि च अदृष्टकल्पनापि भूयसी विना युक्त्या सम्यग् प्राप्नोति । सम्यग् वादिभिस्तावद् ईश्वरः कर्ता, तस्य च अप्रतिघातज्ञानादयो गुणाः—

"ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम् ॥"

इति कल्पिताः न च तत्कल्पनायां काचन साधीयसी युक्तिः दृश्यते । एवं मिथ्यत्ववादिनामपि दोषवत्कर्तृकल्पना निष्प्रमाणिकैव ।

∴ तथा सति हि नाद्य यावद् वेदसम्प्रदायो ऽनुवर्तेत । महता खलु प्रयत्नेन शिष्याचार्यपरंपरया वेदान् धारयन्तो दृश्यन्ते, तदर्थञ्चानुतिष्ठन्तः । तदनाप्तसन्दृब्धानामनुपपन्नम् । तथा सति हि जातबाधैरचिरादेव हीयेरन् । अतोऽस्मात् महाजनपरिग्रहादवगच्छामः, न कर्तृमन्तो वेदाः इति नतरां दोषवत्कर्तृकाः । मींकांस कैस्तु न किञ्चिद् दृष्टादधिकमिष्यते अतो न कांचित् मीमांशकानामदृष्टकल्पनेतिकाशिकाकाराः ।

भा०—न च 'स्वर्गकामो यजेत' इत्यतो वचनात् सन्दिग्धमवगम्यते, भवति वा स्वर्गो, न वा भवतीति। न च निश्चितमवगम्यमानमिदं मिथ्या स्यात्। यो हि जनित्वा प्रध्वंसते; नैतदेवमिति, स मिथ्याप्रत्ययः। न चैष कालान्तरे पुरुषान्तरेऽवस्थान्तरे देशान्तरे वा विपर्येति, तस्मादवितथः। यत्तु लौकिकं वचनं तच्चेत्प्रत्ययितात् पुरुषात् इन्द्रियविषयं वा अवितथमेव तत्। अथ अप्रत्ययितात् अनिन्द्रियविषयं वा तावत् पुरुषबुद्धिप्रभवमप्रमाणम्। अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनात्। अपरस्मात् पौरुषेयाद् वचनात् तदवगतमिति चेत्, तदपि तेनैव तुल्यम्। नैवं जातीयकेष्वर्थेषु पुरुषवचनं प्रामाण्यमुपैति, जात्यन्धानामिव वचनं रूपविशेषेषु।

'इदानीमिव'[1] सर्वत्र दृष्टान्नाऽधिकमिष्यते।
❀ एवंभूतस्य वेदस्य ज्ञानोत्पत्तिं प्रकुर्वतः॥ ९९॥
स्वरूपविपरीतत्वसंशयौ भाष्यवारितौ।
[2]निवारयिष्यते चापि दुष्टकारणकल्पना॥ १००॥
□ पुरुषाभावतस्तेन तद्द्वारेणाऽप्यशङ्कितौ।
तथा सत्यतथाभावो बुद्ध्यनुत्पत्तिमाश्रितः॥ १०१॥

तदेवं नित्यनिर्दोषस्य ज्ञानं चोत्पादयतो यदि परसंशयविपर्ययनिमित्तमप्रामाण्यं स्यात्तद् द्वयमपि "न चाग्निहोत्रं जुहुयात्" इत्यादिना "न चैष देशान्तर" इत्यादिना च भाष्येण निराकृतमित्याह एवं भूतस्येति। एवंभूतशब्देन नित्यनिर्दोषत्वमुक्तम्। तद्दर्शयति निवारयिष्यते इति। दोषसंशयात्प्रामाण्यसंशयः, दोषनिश्चयाच्च तद्विपर्ययः, तदुभयं दोषनिवारणेन निवारितं भवति।॥ १००॥

संप्रत्याक्षिप्तं भाष्यं समाधत्ते तथा सतीति। यदा हि संशयविपर्ययौ निराकरिष्येते तदा ज्ञानाऽनुत्पत्तिविषयमेवाऽतथाभावचोद्यं भवतीति॥ १०१॥

---

१. 'इदानीमेव'—ग

२. 'निराकण्यते'—क

❀ नित्यस्य वेदस्य ज्ञानमुत्पादयतः स्वरूपविपरीतत्वं विपर्ययः संशयश्च भाष्यकारणैव व्यक्तं निराकृतौ। अतः त्रिविधस्य अप्रामाण्यस्य अभावात् चोदनाजनितज्ञानानाम्प्रामाण्यम्।

□ साक्षादनुपजातावपि संशयविपर्ययौ कारणदोषशङ्कयाऽपि वेदे न शङ्कितव्यौ। यत्तु 'ब्रवीती' त्यादि भाष्यमाक्षिप्तं, तस्याऽभिप्रायमाह 'तथेति'। भाष्यकारस्यायमभिप्रायः—अतथाभूतप्रतिज्ञया चोदनानामप्रामाण्यं प्रसाध्यते।

तत्र विप्रतिषिद्धत्वं ब्रवीतीत्येवमादिना ।
यथादृष्टार्थवादित्वं तच्चेत् प्रत्ययितादिति ॥ १०२ ॥

इन्द्रियेति तु मूलं चेदस्यास्तीत्येवमब्रवीत् ।
द्रष्टृत्वसत्यवादित्वे तच्चेत् प्रत्ययितादिति । १०३ ॥

दृश्यमानार्थवादित्वे स्यादनाप्तोक्तिसत्यता ।
एवं त्वेकाङ्गवैकल्यात् प्रत्युदाहरणस्थितिः ॥ १०४ ॥

तत्रेदमुत्तरम्, "विप्रतिषिद्धमिदमुच्यते ब्रवीति वितथं चेति ।" बोधयति न बोधयतीति विप्रतिषिद्धमित्यर्थः । "यत्तु लौकिकं वचनम्, तच्चेत्प्रत्ययितात्पुरुषादिन्द्रियविषयं वाऽवितथमेव तत् । अथाऽप्रत्ययितात्पुरुषादनिन्द्रियविषयं वा तत्पुरुषबुद्धिप्रभवमप्रमाणम् । अशक्यं हि तत्पुरुषेण ज्ञातुमृते वचनात्" ( शा०भा०अ१पा१सू२ ) इति भाष्यम्, तत्र प्रत्ययितशब्दस्यार्थमाह यथेति । तथाभूतमतथाभूतं वा यथादृष्टार्थं यो वदति स प्रत्ययित इति । इन्द्रियविषयमित्यपि तस्यैव विशेषणमित्याह इन्द्रियेति । इन्द्रियग्रहणमनुमानादीनामपि मूलप्रमाणान्तराणामुपलक्षणम् । तदयं भाष्यार्थः, सम्भवत्प्रमाणमूलं यत्प्रत्ययितवाक्यं तत्प्रमाणमेव । अतो यदि तदभिप्रायं यथा यत्किंचनेति दृष्टान्तवचनं ततः साध्यवैकल्यमिति । यत्त्वप्रत्ययितवचनं यच्चाऽसम्भवन्मूलप्रमाणं तत्पुरुषबुद्धिप्रभवं मूलदोषेण दुष्टत्वादप्रमाणम् । नैतद्दृष्टान्तेनाऽदुष्टस्यापि वेदवचसोऽप्रामाण्यमिति ।

केचित्तु यथावस्थितार्थदर्शित्वं यथादृष्टार्थवादित्वं च द्वयं प्रत्ययितशब्दार्थमाहुरित्याह द्रष्टृत्वेति । द्रष्टृत्वं यथावस्थितार्थदर्शित्वम् सत्यवादित्वं यथादृष्टार्थवादित्वमिति । इन्द्रियविषयं वेत्यनेन त्वनाप्तवाक्यमपि श्रोतुरिन्द्रियविषयभूतमवितथमित्युच्यते इत्याह दृश्यमानेति ।

एतद्व्याख्यानं दूषयति एवं त्विति । एकाङ्गविकलं हि प्रत्युदाहरणं न द्व्यङ्गविकलम् ।

---

तच्च त्रिविध मित्युक्तम् । तदिह तावत् संशयविपर्ययलक्षणमप्रामाण्यं नास्ति, पारिशेष्याद् बुद्ध्यनुत्पत्तिलक्षणमेव अप्रामाण्य माश्रित्य अतथाभावः प्रतिज्ञात इत्यापतति । तत्रेदमुत्तरं 'विप्रतिषिद्धमिदमभिधीयते' इति । यदर्थं ज्ञापयति तद् ब्रवीतीत्युच्यते । तद् यदि चोदना ब्रवीति, कथमसौ अज्ञानात्मकेन वैतथ्येनअभिभूयते एवञ्च व्याख्यायमाने न बुद्धवाक्यानां प्रमाण्यप्रसंगः । न हि उत्पत्तिमात्रेण ज्ञानस्य प्रामाण्यमाश्रितम् । येनोपालंभो भवेत् । तेभ्यो हि ज्ञानमुत्पन्नमपि पौरुषेयवाक्यजनितत्वेन कारणदोषाशंकया अप्रमाणं भवति न चेह तथा, वेदस्याऽपौरुषेयत्वादिति काशिकाकाराः ।

एकैकाभावमात्रे स्यादाप्तत्वैन्द्रियकत्वयोः ।
'अप्रत्ययितपक्षे स्यादैन्द्रियस्याप्यसत्यता ॥ १०५ ॥

अनिन्द्रियत्वपक्षे वा ऽसत्प्रत्ययितभाषितम् ।
व्याहतग्रन्थतैव स्यात् तस्मात् पूर्वेण सत्यता ॥ १०६ ॥

परेण मूलसद्भाव इन्द्रियेण तु दर्शितः ।
अप्रामाण्यनिवृत्त्यर्थं दोषाभावोपवर्णनम् ॥ १०७ ॥

गुणात् प्रामाण्यमित्येवं तत्पूर्वं सुनिराकृतम् ।
पूर्वत्र प्रतिषिद्धत्वान्नैतत्प्रामाण्यकारणम् ॥ १०८ ॥

अत्र त्वाप्तत्वैन्द्रियकत्वयोरेकैकमेव प्रामाण्यकारणमाश्रितम्, अनयोरेकैकस्याभावे प्रत्युदाहरणं स्यात् ।

ततः किं जातमत आह अप्रत्ययितेति सपादेन । प्रत्ययितप्रत्युदाहरणे हि अथाऽप्रत्ययितादित्युच्यमाने प्रत्ययिताऽभावमात्रेणाऽप्रामाण्यात् श्रोतुरिन्द्रियविषयं यदप्रत्ययितवाक्यं प्रमाणत्वेनोदाहृतं तदेवेदानीमप्रमाणत्वेन प्रत्युदाहरणं स्यात्, इन्द्रियविषयं वेत्यस्य प्रत्युदाहरणे त्वनिन्द्रियविषयं वेत्युच्यमाने यदाप्तवाक्यमपि श्रोतुरनिन्द्रियविषयं प्रमाणत्वेनाभ्युपगतं तदेवाऽप्रमाणत्वेन प्रत्युदाहरणं स्यादिति ग्रन्थव्याघातः स्यादिति । किं च यदीन्द्रियविषयमित्यनेनदृश्यमानार्थविषयमनाप्तवचनमुच्यते, ततोऽनिन्द्रियविषयमित्यनेनापि श्रोत्रा यन्नोपलभ्यते तद्वक्तव्यम्, ततश्च "अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनात्" इति भाष्यं नोपपद्येत । न हि यत् श्रोत्रा नोपलभ्यते तज्ज्ञातुमशक्यं भवति । तस्मादिन्द्रियविषयमित्यनेन सम्भवन्मूलप्रमाणमुच्यते । अनिन्द्रियविषयमित्यनेन चाऽसम्भवन्मूलप्रमाणम् । एवं च "अशक्यं हि तत्" इति भाष्यमुपपन्नं भवति । प्रत्ययितशब्दश्चायमितजन्तः, प्रत्ययोऽस्य संजात इत्येतावद्वदति । प्रत्ययश्चायथार्थोऽपि सम्भवतीति न यथार्थदर्शी प्रत्ययितः, किं तु यथादृष्टार्थवाद्येव । तस्मात्पूर्वव्याख्यैव ज्यायसीत्याह तस्मादिति । सत्यता यथादृष्टार्थवादिता पूर्वेण प्रत्ययितशब्देन दर्शिता, परेण त्विन्द्रियविषयमित्यनेन तस्यैव मूलसद्भावो विशेषणमुच्यते इति ।

नन्वेवं सम्यङ् मूलापेक्षं गुणत एव प्रामाण्यं स्यादत आह अप्रामाण्येति । अपवादभूताऽप्रामाण्यनिवृत्त्यर्थमेव दोषाऽभावोपवर्णनमिदं गुणद्वारेण, न तु गुणस्वरूपमेव प्रामाण्यायोच्यत इति ॥ १०२ ॥ १०७ ॥

किमित्येवं वर्ण्यत इत्याशङ्क्याह गुणादिति । निराकृतमिदं, निराकृतत्वाच्च नेदं प्रामाण्यकारणमिति ॥ १०८ ॥

समुच्चयार्थो वाशब्दः पूर्वस्मिन्नुत्तरत्र च ।
विकल्पेनोभयोराह प्रत्युदाहरणे पृथक् ॥ १०९ ॥
शक्येऽप्यसत्ये मिथ्यात्वं दृष्टं सत्येऽप्यशक्तिके ।
नानेन वचनेनेह सर्वज्ञत्वनिराक्रिया ॥ ११० ॥
वचनादृतइत्येवमपवादो हि संश्रितः ।
यदि षड्भिः प्रमाणैः स्यात् सर्वज्ञः केन वार्यते ॥ १११ ॥
एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ।
नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते ॥ ११२ ॥
यज्जातीयैः प्रमाणैस्तु यज्जातीयाऽर्थदर्शनम् ।
भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूत् ॥ ११३ ॥

यदि प्रत्ययितत्वमैन्द्रियकत्वं च समुच्चितं लक्षणं कथं वाशब्दोऽत आह समुच्चयार्थं इति स्मिन्नन्तेन । निपातानामनेकार्थत्वादित्यर्थः । प्रत्युदाहरणेतु विकल्पार्थं एव । द्वयोरपि सत्यपि प्रत्ययितत्वैन्द्रियकत्वयोः पृथक् पृथक् प्रत्युदाहरणार्थं इत्याह उत्तरत्रेति ॥ १०९ ॥

त एव प्रत्युदाहरणे दर्शयति शक्ये इति । असत्येऽनृतवादिनि पुरुषे सति शक्येऽप्यर्थे यद्यप्यर्थः प्रमातुं शक्यस्तथाप्यप्रामाण्यमनाश्वासाद् दृष्टम् । सत्ये प्रत्ययितेऽपि वक्तर्यशक्तिके यद्यस्योच्यमानमर्थं द्रष्टुं शक्तिर्नास्ति प्रत्यक्षाद्यसम्भवात्, अत्राप्यप्रामाण्यं मूलदोषात् । न ह्यतीन्द्रियार्थे वचनमन्तरेणावगतिः सम्भवति । तदिदमुक्तम् "अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनात्" इति । इदं तु भाष्यं केचित् सर्वज्ञनिराकरणपरं व्याचक्षते । तान्निराकरोति नानेनेति ॥ ११० ॥

कारणमाह वचनादिति । वचनादृते ज्ञातुमशक्यमिति वदन् वाचनिकेऽतीन्द्रिये ज्ञानशक्तिं निराकरोति, न सर्वज्ञं । प्रकृतत्वाच्चातीन्द्रियमेव तच्छब्देन परामृश्यते न सर्वमिति । किं चाऽनिराकरणीयत्वादपि सर्वज्ञस्य न तन्निराकरणपरं भाष्यमित्याह यदीति । यो हि षड्भिः प्रमाणैः सर्वं जानाति स धर्माऽधर्मावपि वेदेन जानन्न चोदनैवेत्यवधारणं विरुणद्धीति न निराकर्त्तव्य इति ॥ १११ ॥

यस्त्वेकेनैव सर्वं जानातीति कैश्चित्कल्पितः सोऽतितुच्छत्वादेव न निराकार्य इत्याह एकेनेति । यो ह्येवंविधं सर्वज्ञं कल्पयति स स्वयं तावच्चक्षुषा नूनं रसादीन् जानाति । इतरथा कथं स्वभावनियमं जानन्नविषये सर्वार्थे प्रत्यक्षस्यान्यस्य वा प्रवृत्तिमध्यवस्येदिति ॥ ११२ ॥

ननु यद्यप्यर्वाचीनानां प्रत्यक्षं न सर्वविषयं तथापि बुद्धप्रत्यक्षं दिव्यचक्षुर्जनितं सर्वविषयं भविष्यत्यत आह यज्जातीयैरिति । अद्यत्ववदेव कालान्तरेऽपि प्रमाणस्वभावो नान्यादृश इति ॥ ११३ ॥

यत्राप्यतिशयो दृष्टः स स्वार्थाऽनतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥ ११४ ॥

भविष्यति न दृष्टं च प्रत्यक्षस्य [1]मनागपि ।
सामर्थ्यं नानुमानादेर्लिङ्गादिरहितं[2] क्वचित् ॥ ११५ ॥

सर्वज्ञकल्पनान्यैस्तु[3] वेदे चाऽपौरुषेयता ।
तुल्यता[4] कल्पिता येन तेनेदं सम्प्रधार्यताम् ॥ ११६ ॥

नन्वद्यत्वेऽपि तावत्प्रमातृभेदेन सातिशयं प्रत्यक्षमुपलभ्यते, केचिदतिदूरमतिसूक्ष्मं च पश्यन्ति । तथा ज्ञानमपि सातिशयं लौकिके च शास्त्रार्थे च दृश्यते । तत्कस्यचित्पुरुषवर्यस्य ज्ञानमत्यन्तातिशयितं सर्वविषयं भविष्यत्यत आह यत्रापीति । सत्यमतिशयो दृष्टः, स स्वविषयएव दूरसूक्ष्मादिदर्शने, न तदतिक्रमेण । न ह्यतिशयितमपि श्रोत्रं रूपे प्रवर्त्तते, नेत्रादयो वा शब्दादिषु । अतो न सर्वविषयत्वमिति ॥ ११४ ॥

ननु प्रत्यक्षस्य न कश्चिद्विषयनियमोऽस्ति रूपवतामरूपवतां दूराणां सूक्ष्माणां च प्रत्यक्षावगमदर्शनात् । अतोऽस्य सम्भवत्येव सर्वविषयत्वमत आह भविष्यतीति सामर्थ्यमन्तेन । वर्तमानविषयमेव प्रत्यक्षमित्यस्ति नियमः । अतो न तस्य भविष्यति धर्म्मे सामर्थ्यम्, नतरां सर्वार्थेषु । ज्ञानस्याप्यस्ति विषयनियमो यत्रास्य कारणं सम्भवति तत्रैव प्रवर्त्तते नान्यत्र । षड्विधं च तत्कारणमिन्द्रियलिङ्गादि । तत्रेन्द्रियं तावद् वर्त्तमानविषयम् । अतस्तज्जनितं ज्ञानमपि तत्रैव प्रवर्त्तते, न धर्माऽधर्मयोर्नापि सर्वार्थेष्विति । नाप्यनुमानादिना धर्मस्य सर्वस्य वा ज्ञानं सम्भवतीत्याह नानुमानादेरिति । यथैव हि प्रत्यक्षस्य वर्त्तमानादिविषयत्वनियमस्तथाऽनुमानादेरपि यत्र लिङ्गादिसम्भवः स एव विषयः । न सर्वार्थेषु धर्मे वा लिङ्गादिसम्भवः, अतो नानुमानादेरपि सर्वत्र सामर्थ्यमस्तीति ॥ ११५ ॥

कश्चिदत्र लोकायतिकः प्राह । अन्यैः शाक्यैः सर्वज्ञकल्पना निष्प्रमाणिकाऽऽश्रिता, मीमांसकैस्तु वेदस्याऽपौरुषेयत्वकल्पना । तदुभयस्यापि कल्पना तुल्या न [कश्चि विशेष इति, तं प्रत्याह सर्वज्ञेति ॥ ११६ ॥

---

१. 'प्रमागवि'—ख
२. 'रहिते'—क, ग
३. 'द्यैस्तु'—ख
४. 'तुल्यवत् कल्पि'—क

सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
निराकरणवच्छक्या न [1]चासीदिति कल्पना ॥ ११७ ॥

न चागमेन [2]सर्वज्ञस्तदीयेऽन्योन्यसंश्रयात् ।
नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम् ॥ ११८ ॥

न चाप्येवंपरो नित्यः शक्यो लब्धुमिहागमः ।
नित्यश्चेदर्थवादत्वं तत्परे स्यादनित्यता ॥ ११९ ॥

आगमस्य च नित्यत्वे सिद्धे तत्कल्पना वृथा ।
[3]यतस्तं प्रतिपद्यन्ते धर्ममेव ततो नराः ॥ १२० ॥

एवंवादिना वक्ष्यमाणमनन्तरं सम्प्रधार्यते येन सर्वज्ञो निष्प्रमाणको नाऽपौरुषेयत्वमिति । तत्र सर्वज्ञकल्पनायास्तावदप्रमाणत्वं दर्शयति सर्वज्ञ इति । तेन प्रत्यक्षं तावन्नास्ति तत्सद्भावे प्रमाणमिति । नाप्यनुमानेनासावासीदिति शक्यते कल्पयितुं विपरीतस्यैवाऽनुमानादित्याह निराकरणवदिति । न हि सद्भावस्याऽनुमापकं लिङ्गमस्ति । निराकरणस्य त्वस्ति लिङ्गम्, अतीतः कालः सर्वज्ञशून्यः कालत्वादद्यत्ववदिति, बुद्धो वा न सर्वज्ञः पुरुषत्वादस्मदादिवदिति ॥ ११७ ॥

नाप्यागमगम्यत्वं सर्वज्ञस्येत्याह न चागमेनेति । कथमित्याह तदीये इति । सिद्धे हि सर्वज्ञे तदीयस्याऽऽगमस्य प्रामाण्यं तत्प्रामाण्ये च तत्सिद्धिरिति । नरान्तरप्रणीतस्य तु मूलान्तराऽसम्भवान्न सर्वज्ञसद्भावे प्रामाण्यं सम्भवतीत्याह नरान्तरेति ॥ ११८ ॥

नापि नित्यागमगम्यत्वं तदभावादित्याह न चेति । नन्वस्त्येव सर्वज्ञः सर्वविदित्यादिरत आह नित्यश्चेदिति । किमित्यर्थवादत्वमत आह तत्परे इति । अनित्यस्य विग्रहवतः पुरुषस्य सर्वज्ञत्वं प्रतिपादयन्नागमोऽप्यनित्यः स्यादिति ॥११९॥

किं चागमनित्यत्वेऽङ्गीकृते वृथैव सर्वज्ञकल्पनेत्याह आगमस्येति । कथमित्याह यतस्तमिति । येनैवागमेन सर्वज्ञत्वं प्रतिपाद्यं तेन धर्म एव प्रतिपाद्यतां किमन्तर्गडुना सर्वज्ञेनेति ॥ १२० ॥

---

१. 'चाविदित'—ख
२. 'सर्वज्ञस्तदीयोऽन्यो'—ख
३. 'यत्ततः प्रतिपत्स्यन्ते'—ख

योऽपीन्द्रियार्थसम्बन्धविषये सत्यवादिताम् ।
दृष्ट्वा तद्वचनत्वेन [1]श्रद्धेयेऽर्थेऽपि कल्पयेत् ॥ १२१ ॥
तेनापि पारतन्त्र्येण बाधिता[2] स्यात् प्रमाणता ।
प्रामाण्यं चेत् स्वयं तस्य काऽपेक्षाऽन्येन्द्रियादिषु ॥ १२२ ॥
यथैवात्रेन्द्रियादिभ्यः परिच्छेदात् प्रमाणता ।
श्रद्धेयेऽपि तथैव स्यान्न स्वातन्त्र्येण लभ्यते ॥ १२३ ॥
यथा च तेषां सत्यत्वं सिध्यत्येतेन हेतुना ।
तथाऽन्याऽनवबुद्धार्थप्रामाण्याऽभावसाधनम् ॥ १२४ ॥
अश्रद्धेयार्थसत्यत्वं श्रद्धेये [3]चाऽप्यसत्यता ।
पूर्वज्ञानानुवादित्वं दृष्टान्तवदिहेष्यताम् ॥ १२५ ॥

अत्र कश्चित् आह मा भूत्सर्वज्ञः धर्मज्ञस्तु भविष्यति, तदुक्तम्—

कीटसङ्ख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ।
दूरं पश्यतु मा वाऽसौ तत्त्वमिष्टं तु पश्यति ॥ इति ॥

धर्मज्ञत्वे चास्ति प्रमाणम् । अस्मदादिप्रमाणगोचरार्थं क्षणिकं सर्वसंस्कृतमित्यादिबुद्धवाक्यं सत्यं प्रमाणमूलं दृष्टम्, अतः श्रद्धेयेऽर्थे धर्म्मे यच्चैत्यवन्दनादिवाक्यं तदपि प्रमाणमूलं तद्वचनत्वात् अनुमीयते । तदुपन्यस्यति **योऽपीति** । इन्द्रियादिसम्बन्धविषये प्रत्यक्षादिविषये इत्यर्थः ॥ १२१ ॥

दूषयति **तेनापीति** । कथमित्याह **प्रामाण्यमिति** । यदि हि क्षणिकादिवाक्यस्याऽस्मदादिप्रमाणाऽनादरेण स्यातन्त्र्यं स्वादस्मदादीन्द्रियोपन्यासोऽनर्थकः स्यात् अतस्तद्वदेव श्रद्धेयार्थस्याऽप्यस्मदादिपरतन्त्रमेव प्रामाण्यं व्याप्तिबलेन हेतुः साधयेन्न स्वतन्त्रमिति ॥ १२२ ॥

तदेव विवृणोति **यथेति** । सोऽयं धर्मविशेषविपर्ययसाधनाद् विरुद्धो हेतुरिति ॥ १२३ ॥

विरुद्धाव्यभिचारी चायं हेतुरित्याह **यथा चेति** । सोऽयमेक एव हेतुः सत्यत्वमसत्यत्वं च मिथो विरुद्धमव्यभिचारात्साधयन्विरुद्धाऽव्यभिचारीति ॥१२४॥

विरोधान्तराणि दर्शयति **अश्रद्धेयेति** ॥ १२५ ॥

---

१. 'श्रद्धेयार्थेऽपि'—ग
२. 'साधिता'—ग, क
३. 'वार्थसत्यता'—ख

अपि चालौकिकार्थत्वे सति पुंवाक्यहेतुकम् ।
[1]मिथ्यात्वं वेदवाक्यानां स्यादन्योन्य[2]सपक्षता ॥ १२६ ॥

धर्माऽधर्मातिरिक्तार्थेऽ[3]प्रामाण्यञ्च प्रसज्यते ।
सांख्यादिषु च जीवत्सु दृष्टान्तोदु[4]र्लभोऽस्य च ॥ १२७ ॥

अलौकिकार्थ[5]वाचित्वं नृवाक्यत्वं[6] सतीति च ।
परस्परमपेक्ष्यैव [7]बौद्धादेः स्यान्मृषार्थता ॥ १२८ ॥

वदेदेवं च यो नाम वादी प्रथमसङ्गतः ।
तस्यापि हेतुः स्यादेष भवन्तं प्रत्यसंशयम् ॥ १२९ ॥

बुद्धादीनामसार्वज्ञ्यमिति सत्यं वचो मम ।
मदुक्तत्वाद्यथैवाग्निरुष्णो भास्वर इत्यपि ॥ १३० ॥

सप्रतिसाधनश्चायं हेतुरित्याह अपि चेति ॥ १२६ ॥

अविशेषितेनैव वा पुंवाक्यत्वेन धर्माऽधर्मातिरिक्तेऽप्रामाण्यमन्योन्यदृष्टान्तेनैव साधयितव्यमित्याह धर्मेति । दृष्टान्तोऽपि साध्यविकल इत्याह सांख्यादिष्विति । ॥ १२७ ॥

पूर्वोक्तमेव प्रतिसाधनं विशेषणविशेष्यभावव्यत्ययेन वाच्यमित्याह—अलौकिकार्थेति ॥ १२८ ॥

सप्रतिसाधनप्रसङ्गेनेदानीं सर्वज्ञदूषणमेवोपक्रम्य सर्वज्ञोऽस्मीति बुद्धेन यदुक्तं तत् सत्यं तदुक्तत्वाज्ज्योतिरुष्मण्यौष्ण्याद् द्रव इतिवदित्यस्य परोक्तस्य सर्वज्ञ-साधनस्य प्रतिसाधनं दर्शयति वदेदेवमिति । एवमिति चैष इति च वक्ष्यमाण-प्रतिसाधनपरामर्शनम् ॥ १२९ ॥

तदेव दर्शयति बुद्धादीनामिति ॥ १३० ॥

---

१. 'मिथ्यार्थं वेदबाह्यानां'—क
२. 'न्यं सपक्षतः'—ख
३. 'थैंप्रामा'—क,ख
४. 'दुर्लभस्त्वया'—क
५. 'वादित्वात्'—क
६. 'नृवाक्यत्वे' 'पुंवाक्यत्वे'—क,ख
७. 'बुद्धादेः'—ग

प्रत्यक्षं च मदुक्तत्वं त्वया साध्या तदुक्तता ।
तेन हेतुर्मदीयः स्यात्सन्दिग्धा[1]ऽसिद्धता तव ॥ १३१ ॥

प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च ।
सद्भाववारणे शक्तं को नु तं कल्पयिष्यति ॥ १३२ ॥

न चापि स्मृत्यविच्छेदात् सर्वज्ञः परिकल्प्यते ।
विगानाच्छिन्नमूलत्वात् कैश्चिदेव परिग्रहात् ॥ १३३ ॥

सर्वज्ञोऽसाविति ह्येव तत्काले तु[2] बुभुत्सुभिः ।
तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥ १३४ ॥

कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ।
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते ॥ १३५ ॥

इदमेव साधनं न त्वदीयमित्याह प्रत्यक्षमिति । असर्वज्ञत्ववचनस्य मदुक्तत्वं प्रत्यक्षसिद्धं सर्वज्ञोऽस्मीत्यस्य बुद्धोक्तत्वमसिद्धं न ह्यत्यन्ताऽनृतमुद्धतं च बुद्धो वदतीति सम्भावयामः । असिद्धश्च न हेतुर्भवतीति ॥ १३१ ॥

अतितुच्छश्चायं सर्वज्ञवादो यस्य सर्वसाधारणैरपि प्रमेयत्वादिभिः प्रमाणान्तराऽविरोधेनैव निराकरणं सम्भवतीत्याह प्रत्यक्षादीति ॥ १३२ ॥

ननु बुद्धः सर्वज्ञ इत्यस्ति लौकिकानामविच्छिन्ना स्मृतिः, अतोऽस्ति बुद्धस्य सर्वज्ञत्वं तदानीन्तनैश्च प्रमितमिति कल्पयामोऽत आह न चापीति । कारणमाह विगानादिति । विप्रलिप्सुना बुद्धेनागमः प्रणीत इत्यपि स्मृतिरस्तीति । असम्भवन्मूलं च सर्वज्ञत्वस्मरणमित्याह - छिन्नमूलत्वादिति । विगानं विवृणोति कैश्चिदिति ॥ १३३ ॥

छिन्नमूलतां विवृणोति सर्वज्ञ इति । तज्ज्ञानज्ञेयं यत्सर्वं तद्विषयज्ञानरहितैरेतैर्नरैः कथं सर्वज्ञो ज्ञायताम् ? अतो न सर्वज्ञे कस्यचित् किंचित्प्रमाणं सम्भवतीति निर्मूलैव स्मृतिरिति ॥ १३४ ॥

यदि त्वन्योऽपि कश्चित्सर्वज्ञ इष्यते बुद्धस्य सर्वज्ञत्वज्ञानार्थी ततस्तेनैव प्रकारेणाऽन्यस्याऽन्यस्य कल्पनायां बहुसर्वज्ञापत्तिरित्याह—कल्पनीया इति । कथमित्याह य एव स्यादिति ॥१३५॥

---

१. 'ग्धासिद्धता'—क

२. 'च'—क

सर्वज्ञोऽनवबुद्धश्च येनैव स्यान्न तं प्रति।
तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् ॥ १३६ ॥
रागादिरहिते चास्मिन् निर्व्यापारे व्यवस्थिते।
देशनाऽन्यप्रणीतैव स्यादृते प्रत्यवेक्षणात् ॥ १३७ ॥
सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव।
निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः १३८ ॥
एवमाद्युच्यमानन्तु श्रद्दधानस्य शोभते'।
'कुड्यादिनिस्सृतत्वाच्च नाश्वासोदेशनासु नः ॥ १३९ ॥
[1]किन्नु बुद्धप्रणीताः स्युः किमु कैश्चिद् दुरात्मभिः।
अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः' ॥ १४० ॥
एवं यैः केवल ज्ञानमिन्द्रियाद्यनपेक्षिणः।

एवं सर्वज्ञो न केन चित्प्रमातुं शक्यत इत्युक्तम्। एवं च सम्यङ् मूलत्वाऽज्ञानात्तदागमस्याऽपि रथ्यापुरुषवाक्यवन्न प्रामाण्यं सिध्यतीत्याह सर्वज्ञ इति ॥१३६॥

इतश्च तदागमस्याऽप्रामाण्यमित्याह—रागादीति। लाभपूजाख्यातिराग-निमित्तं हि आगमप्रणयनं स्वयूथ्यस्पर्द्धानिमित्तं वा प्रक्षीणरागादिदोषस्य बुद्धस्य न सम्भवति। निर्व्यापारश्चायं नासावर्थंप्रतिपादनाय शब्दं समुच्चारयितुं शक्नोति। कथम्, प्रत्यवेक्षणपर्यायस्य विकल्पस्याऽसम्भवादस्येदं साधनमनेन च शब्देनेदं प्रति-पादयितुं शक्यमिति यावन्न विकल्प्यते न तावद्वाक्यप्रणयनं सम्भवति। न चायं विकल्पो निर्विकल्पकेन प्रत्यक्षेणाऽखिलं जगदध्यक्षयतो बुद्धस्यास्ति, तस्मादन्येन केन चित्प्रणीतो देशनाधर्मोपदेश इत्यप्रामाण्यमिति ॥ १३७ ॥

तस्मिन्निर्व्यापारेऽपि तत्संन्निधिमात्रेणैव कुड्यादिभ्योऽपि देशनानिः सरन्तीति चेत्? श्रद्दधानस्योच्यमानमिदं शोभते नास्माकमित्याह सांनिध्येति सार्द्धेन। श्रद्दधानं प्रत्युच्यमानमित्यर्थः। कुड्यादिनिःसृतासुच बुद्धप्रभावकृतत्वं न निर्णेतुं शक्यमन्यथापि सम्भवादित्याह कुड्यादीति सार्द्धेन। ततश्च न प्रामाण्याऽध्यवसायः सम्भवतीति। एवं तावच्छाक्यसर्वज्ञो निराकृतः ॥ १३८ ॥ १४० ॥

अन्यन्मतं, स्वभावादेवायमिन्द्रियाद्यनपेक्ष्यैव पुरुषः सर्वं जानाति, देहावृतस्त्व-

---

१. 'किन्तु'—क

सूक्ष्माऽतीतादिविषयं जीवस्य परिकल्पितम् ॥ १४१ ॥

नर्ते तदागमात्सिध्येन्न च तेनागमो विना।
दृष्टान्तोऽपि न तस्यान्यो नृषु कश्चित् प्रवर्तते ॥ १४२ ॥

नित्यागमाववोधोऽपि प्रत्याख्येयोऽनया दिशा।
न हि तत्रापि विस्रम्भो [1]दृष्टोऽनेन कृतोऽथ वा ॥ १४३ ॥

सर्वदा चापि पुरुषाः प्रायेणाऽनृतवादिनः।
यथाऽद्यत्वे न विस्रम्भस्तथाऽतीतार्थकीर्तने ॥ १४४ ॥

स्वप्नादिज्ञानवच्चापि प्रत्ययोऽस्यागमार्थयोः।
भवेदिति सशङ्कानां प्रामाण्यं गम्यते कथम् ॥ १४५ ॥

न्द्रियादिद्वारेण किंचिदेव वेत्ति, निगलितदेहस्य तु स्वाभाविकं सर्वज्ञत्वमाविर्भवतीति, तदुपन्यस्यति एवमिति। केवलमिन्द्रियादिकारणाऽनपेक्षमेवेति ॥१४१॥

तद् दूषयति नेति। न हि मुक्तस्य सर्वज्ञत्वे तदागममन्तरेणाऽन्यत्प्रमाणमस्ति। अतः सर्वज्ञप्रणीतत्वे सिद्धे तदागमस्य प्रमाणत्वं तत्प्रामाण्ये च तत्सिद्धिरितीतरेतराश्रयम्। अशरीरस्य च ताल्वादिरहितस्यागमप्रणयनमपि कथमिति न विद्मः। शरीरयुक्तेन त्वसर्वज्ञेन प्रणीतस्य न प्रामाण्यं स्यादिति। यदि त्वद्यत्वेऽपि कश्चिन्मुक्तः सर्वज्ञो दृश्येत ततोऽर्हन्नपि मुक्तः सर्वज्ञ इति युज्यते न तु तदस्तीत्याह **दृष्टान्त इति** ॥१४२॥

यत्तु वेदवादिभिरेव कैश्चिदुक्तम्, नित्य एवाऽयं वेदः प्रजापतेः प्रथममार्षज्ञानेनाऽवबुद्धो भवतीति, तदपि सर्वज्ञवदेव निराकार्यमित्याह **नित्येति**। अनुच्चरितशब्दज्ञानमपि सर्वज्ञज्ञानवद्धर्माऽधर्मज्ञानवच्चाकारणकमेवेति। नन्वेतस्मिन् पक्षे वेदस्यैव धर्मे प्रामाण्याच्चोदनैवेत्यस्याऽविरोधात् किमिति तन्निराकरणमत आह **नहीति**। कृतकत्वाशङ्कया प्रामाण्योच्छेदनान्निराकार्योऽयं पक्ष इति ॥ १४३ ॥

न च तद्वचनाद्विस्रम्भसम्भवः। अद्यत्ववत्तदानीन्तनेऽपि काले पुरुषाणां प्रायेणाऽनृतवादित्वसम्भवादित्याह **सर्वदेति** ॥ १४४ ॥

किं चायमस्याऽऽगमप्रतिभासः स्वप्नादिवद्यादृच्छिको निर्निमित्तोऽप्रमाणं स्यादित्यपि शङ्कासम्भवान्न प्रामाण्यसिद्धिरित्याह **स्वप्नादीति**। अर्थग्रहणं तुल्यन्यायतया तस्यापि शङ्क्यमानत्वात्। तस्मान्निराकार्योऽयं पक्ष इति ॥ १४५ ॥

---

१. 'लोके दृष्टः श्रुतोऽथवा'—क

पुरुषातिशयश्चेष्टः सैव चाऽऽगमनित्यता।
कल्पितं स्मरणं [1]चास्य जन्मान्तरनिबन्धनम् ।। १४६ ।।

ग्राह्यत्वे चागमस्यैवं द्वेषोऽर्थग्रहणे वृथा।
यो ह्यनुच्चा[2]रितं शब्दं गृह्णात्यर्थेऽस्य का कथा ।। १४७ ।।

पुमांस्तावत्स्वतन्त्रः स्यादर्थग्रहणवादिनाम् ।
आगमप्रतिभाने तु पारतन्त्र्यं द्वयोरपि ।। १४८ ।।

अनेकपुरुषस्थत्वादेकत्रैव च जन्मनि।
ग्रहणस्मरणाद्वेदे न स्वातन्त्र्यं विहन्यते ।। १४९ ।।

निराकरणं चानया दिशेति सर्वज्ञनिराकरणमार्गेण दर्शितम्, तद्विवृणोति पुरुषेति। अद्यतनानामदृष्टोऽतिशयः प्रजापतेः कल्पितः, अनुच्चरितशब्दाऽङ्गीकाराद् तं च कल्पयित्वा पुनरागमनित्यता वृथैवाऽङ्गीकृतेति। यदि तु स्मृतिर्वेदस्य न ग्रहणं तत्राह कल्पितमिति। जन्मान्तराऽनुभवनिबन्धनं स्मरणं निमित्ताऽसम्भवादेव कल्पितम्। कथं हि द्विपरार्द्धसङ्ख्याकं प्रलयकालमतीत्यैतावान् ग्रन्थराशिर्मात्रयाऽप्यन्यूनाऽनतिरिक्तः स्मर्येतेति ।। १४६ ।।

पुनरपि ग्रहणपक्षमेव दूषयति ग्राह्यत्वे इति। ग्राह्यत्वमागमस्येच्छतां शाक्यादिसमाश्रिते धर्माऽधर्मग्रहणे वृथैव प्रद्वेष इति। नन्वैन्द्रियकः शब्दः, धर्मस्त्वतीन्द्रिय इति कथं तुल्यत्वमत आह यो हीति। शब्दोऽप्यनुच्चरितोऽतीन्द्रिय एवेति शाक्यादिपक्षादपि पापीयानयं पक्ष इत्याह पुमानिति। तन्मते हि पुरुषस्य स्वातन्त्र्यात् तत्प्रत्ययादर्थनिश्चयो युक्तः। अस्मिंस्तु पक्षे पुरुषोऽप्यर्थनिश्चये वेदपरतन्त्रः सोऽपि स्वरूपसिद्धये तत्तन्त्र इति न कस्य चित् स्वातन्त्र्यमिति ।। १४७ ।। १४८ ।।

ननु तवाऽपि पूर्वपूर्वपुरुषाऽधीनमुत्तरोत्तरेषां वेदस्य स्वरूपाऽवधारणमिति तुल्यं पारतन्त्र्यमत आह अनेकेति। एकपुरुषाधीनत्वे हि पारतन्त्र्यं भवति। तत्र हि कृतकत्वाशङ्कया दृष्टत्वेऽपि यथावद् दृष्टो विप्लवो वा जात इति संशयान्न स्वातन्त्र्येण प्रामाण्यं सिध्यति। अनेकपुरुषस्थे तु वेदे नैष दोषो भवति। किं च जन्मान्तरानुभूतमतिदीर्घकालव्यवहितं स्मर्त्तुमशक्यं मन्यमाना नूनमयं कृत्वैव वेदं श्रद्धार्थं स्मृतमुपदिशतीति शङ्कमाना न विश्वस्युः। एकस्मिन्नेव तु जन्मनि बहुशोऽनुभूय स्मर्यमाणेऽयमपि दोषो न भवतीति न स्वातन्त्र्यहानिरिति ।।१४९।।

---

१. 'चान्य'—क

२. 'चरि'—क,ख

अन्यथाकरणे चास्य बहुभ्यः[1] स्यान्निवारणम् ।
एकस्य प्रतिभानं तु कृतकान्न विशिष्यते ॥ १५० ॥

अतश्च संप्रदाये [2]च नैकः पुरुष इष्यते ।
बहवः परतन्त्राः स्युः सर्वे ह्यद्यत्ववन्नराः ॥ १५१ ॥

एवं च कल्पयन्त्यन्ये यावदागमसिद्धये ।
तावन्न कल्पयत्येतत् समत्वं जैमिनेः परैः ॥ १५२ ॥

न हि दृष्टाधिकं किञ्चित् प्रामाण्ये तेन कल्प्यते ।
अप्रामाण्यनिमित्तेषु[3] [4]परस्याऽदृष्टकल्पना ॥ १५३ ॥

[5]दृष्टप्रामाण्यबाधश्च नास्तिकस्य प्रसज्यते ।
उत्पन्ने सति विज्ञाने बलाद्बाधप्रकल्पना ॥ १५४ ॥

अनेकपुरुषस्थत्वे को गुणोऽत आह अन्यथेति । एकेन विनाशितस्याऽन्यैर्बहुभिर्निवारणात्तत्पारतन्त्र्यं निवर्त्तत इति । एकस्य तु प्रतिभानं कृतकादविशिष्टमिति स्यादेव पारतन्त्र्यमित्याह एकस्येति ॥ १५० ॥

उपसंहरति अतश्चेति । पूर्वस्मिन् काले यथैकः कर्त्ता वेदानां नास्ति तथा संप्रदायप्रवर्त्तकोऽपि नैकः । किं त्वद्यत्ववदेव बहवः परतन्त्रा एवेति ॥१५१॥

एवं तावत्सर्वज्ञकल्पना निष्प्रामाणिका प्रमाणविरुद्धा चेत्युक्तम् । एवं च यल्लोकायतिकैस्तेषामस्माकं च कल्पनातुल्यत्वमुक्तं तदनेककल्पनीयहानोपादानाभ्यामुक्तमिति सोपहासमाह एवमिति ॥ १५२ ॥

ननु जैमिनेरपि निष्प्रामाणिका प्रमाणविरुद्धा वाऽपौरुषेयत्वकल्पनाऽस्त्येवेति कथमतुल्यताऽत आह न हीति । दृष्टा ह्यद्यत्वे सर्वे पुरुषाः पूर्वपूर्वेभ्यो वेदमवधारयन्तः न तु कर्त्तारः । अतः कालान्तरेऽपीदृगेवेत्यङ्गीकुर्वता न किंचिददृष्टं विरुद्धं वा कल्पितमिति । परेषां च स्वागमप्रामाण्यवद्वेदाऽप्रामाण्यार्थमप्यस्त्येवाऽदृष्टकल्पना दृष्टहानिश्च कर्त्तुस्तद्दोषाणां च कल्पनादवगतप्रामाण्यबाधाच्चेत्याह अप्रामाण्येति । नन्वस्त्येवाऽत्र पूर्वोक्तेनाऽनुमानगणेन बाध इति तदाश्रयणमदोषोऽत आह उत्पन्ने इति । प्रामाण्यं तावदौत्सर्गिकप्राप्तम् । अनुमानं तु तद्विरोधात्सप्रतिसाधनत्वाच्च न समर्थं तद् बाधितुम् । अतो विनैव प्रमाणेन स्वाच्छन्द्येन बाधः कल्प्यत इति ॥ १५३ ॥ १५४ ॥

---

१. 'भिः'—क २. 'ऽपि'—क
३. 'च'—क ४. 'प्रामाण्याद्द'—ख, 'परस्याऽनन्तकल्पना'—ग
५. 'बुद्धप्रामाण्यदृष्टेश्च'—ग

ननु अविदुषामुपदेशो नावकल्पते। उपदिष्टवन्तश्च मन्वादयः। तस्मात् पुरुषाः सन्तो विदितवन्तश्च। यथा चक्षुषा रूपमुपलभ्यत इति दर्शना-देवाऽवगतम्।

उच्यते—उपदेशा हि व्यामोहादपि भवन्ति। असति व्यामोहे वेदादपि भवन्ति। अपिच, पौरुषेयाद्, वचनाद्एवमयं पुरुषो वेद इति भवति प्रत्ययः, न—एवमयमर्थं इति।

साधिते पुरुषाभावे निर्दोषज्ञानजन्मनः।
प्रत्यक्षान्नास्तिकैर्वाच्यो विशेषश्चोदनाधियः॥ १५५॥

उपदेशोऽन्यथा न स्यादतीन्द्रियनिबन्धनः।
तस्य [1]कर्त्ता न चेद् दृष्टः सोऽर्थ इत्यर्थकल्पना॥ १५६॥

'यद्वाऽनुमानमेवेदमुपदेशित्वमुच्यते।
[2]दृष्टार्थपूर्वताव्याप्तं' व्यतिरेकोऽस्य नन्विति॥ १५७॥

अन्यथाऽप्युपपन्नत्वं व्यामोहादिति कथ्यते।
लिङ्गस्य व्यभिचारो वा बालवा[3]क्ये निदर्शनात्॥ १५८॥

यत्तूक्तं 'प्रमाणान्तरदृष्टं हि शब्द' इति नात्मीयादन्यदीयाद्वेति च तत्राह साधिते इति। प्रमाणान्तरैरविशेषादस्य न तत्तन्त्रत्वमिति॥ १५५॥

'नन्वविदुषामुपदेशो नावकल्पते" इति भाष्यं तस्यार्थमाह उपदेश इति। अर्थकल्पनार्थापत्तिः। इदं धर्मज्ञत्वे मनुबुद्धादीनां प्रमाणमुपन्यस्तमिति॥ १५६॥

अनुमानं चेदमित्याह यद्वेति पादत्रयेण। अनुमीयते अनेनेत्यनुमानं लिङ्गमु-पदेशित्वम्। तद्धि वैद्योपदेशादौ दृष्टार्थपूर्वतया व्याप्तमिति। नन्वविदुषामुपदेशाऽनु-पपत्तिस्तत्रोक्ता, नोपदेशस्य विद्वत्तया व्याप्तिः, अतः कथमिदमनुमानमत आह व्यतिरेक इति। व्यतिरेकमुखेनेदमनुमानमुपन्यस्तमिति॥ १५७॥

"उपदेशा हि व्यामोहादपि भवन्ती" ति परिहारभाष्यं तस्यार्थमाह अन्य-थेति। अर्थापत्तिपक्षे अन्यथाऽप्युपपत्तिः,अनुमाने त्वनैकान्तिकत्वं हेतोर्दूषणमुच्यते। बालोन्मत्तादीनामनवगतार्थेऽप्युपदेशदर्शनादिति॥ १५८॥

---

१. 'कर्ता'—क
२. 'अदृष्टार्थवता'—ख
३. 'वाक्येऽपि'—ख, 'वाक्यनि'—ग

* वेदाज्ज्ञात्वोपदिष्टं चेदित्येवं सिद्धसाधनम्।
वेदादपीत्यनेनोक्तं[1] मन्वादेश्चैतदिष्यते ॥ १५९ ॥

अन्यथा संविदानोऽपि विवक्षत्यन्यथा यतः।
तस्मादेकान्ततो नास्ति पुंवाक्यात्तद्धियां गतिः ॥ १६० ॥

भ्रान्तस्याऽन्यविवक्षायामन्यद्वाक्यं च दृश्यते।
यथाविवक्षमप्येतत्तस्मान्नैव प्रवर्तते ॥ १६१ ॥

"असति व्यामोहे वेदादपि भवन्ति" इति भाष्यं, तस्यार्थमाह वेदादिति पादत्रयेण। यदेतदुपदेशान्मूलं कल्पितं तत्तावत्प्रत्यक्षादिकं न सम्भवतीत्युक्तम्। यदि तु वेदाज्ज्ञात्वोपदिष्टमिति कल्प्यते ततः सिद्धसाधनम्। न ह्येवं चोदनैवेत्यस्य-विरोध इति। किमिदानीं बुद्धाद्यागमानामपि वेदमूलत्वमङ्गीक्रियते, नेत्याह मन्वादेरिति। उपदिष्टवन्तश्च मन्वादय इति बौद्धवादिनोक्तं ततस्तदभिप्रायमिदं सिद्धसाधनमिति ॥ १५९ ॥

एवं तावत्पुरुषवचनादर्थे निश्चयो जातः, प्रतिष्ठितश्च प्रत्यक्षादिनिश्चयवत्पश्चान्मूलदोषावगमेन वाध्यतइत्येवं बुद्धादिवचसामप्रामाण्यमुक्तम्। इदानीं मूलावधारणद्वारैव निश्चयप्रतिष्ठेति मूलाऽसम्भवे झटिति जातोऽपि निश्चयोद्रागेव विलीनोऽनुत्पन्नसमो भवति। अतो बुद्धादिवचसामसम्भवन्मूलानां प्रामाण्यसम्भावनाऽपि नव भवति। वेदस्य तु मूलाऽनपेक्षित्वात्प्रतिष्ठितं प्रामाण्यमित्येतदुपपादयितुं भाष्यम्—"अपि च पौरुषेयाद्वचनादेवमयं पुरुषो वेदेति भवति प्रत्ययो नैवमयमर्थ" इति। प्रत्ययोऽर्थे न प्रतितिष्ठतीति यावत्। तदिह पुरुषवचनाद्यन्मूलज्ञानावधारणमुक्तं तदाक्षिपति अन्यथेति। अनैकान्तिकत्वान्न वाक्येन तद्विषयज्ञानावधारणं युक्तमिति ॥ १६० ॥

किं च ज्ञानादपि वाक्यरचनस्य प्रत्यासन्ना विवक्षा। न च तन्मात्रमपि वाक्यात्कल्पयितुं शक्यत किमुत ज्ञानमित्याह भ्रान्तस्येति ॥ १६१ ॥

---

१. 'हिं'—ख

* या इयं प्रत्ययान्तरसापेक्षिता, सा तदधीननिश्चयानां पुंवाक्यानाम्, अप्रमाणता च वक्तृप्रमाणतन्त्रत्वादर्थनिश्चयस्य तदोषादस्तु नाम, वेदवाक्येभ्यस्तु स्वतन्त्रपदार्थसामर्थ्यप्रभाविता वाक्यार्थबुद्धिर्न ज्ञानान्तरमपेक्षते, नचाऽ प्रमाणमिति।

विप्लप्वते हि खल्वपि कश्चित् पुरुषकृताद् वचनात् प्रत्ययः। न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति।

△ वक्तृधीराप्तवाक्येषु[1] गम्यतेऽन्यत्र विप्लुतिः।
तेनोत्सर्गापवादाभ्यां वचसः शक्तिरुच्यते॥ १६२॥

☐ पदार्थरचनाऽयत्तो वाक्यार्थप्रत्ययोद्भवः।
विवक्षापूर्वविज्ञानवशाच्च रचनाकृतिः॥ १६३॥

∴ विवक्षान्तरयुक्ता हि कुर्वाणा रचनान्तरम्।
आवापोद्वापभेदेन[2] [3]दृश्यन्तेऽर्थेषु मानवाः॥ १६४॥

तेनाऽर्थप्रत्ययोत्पादे श्रोतुर्जातेऽपि वाक्यतः।
ज्ञातो नूनमनेनेति वक्तुर्ज्ञाने मतिर्भवेत्॥ १६५॥

समाधत्ते **वक्तृधीरिति**। सामान्येनोक्तमप्येतद्वक्तृज्ञानावधारणमाप्तवाक्यविषयमेवेति। विप्लवते हि खल्वपीत्यादि त्वनाप्तवाक्यविषयमित्याह **अन्यत्रेति**। विप्लुतिर्भ्रान्तिः संशयो वा। एवमाक्षेपं समाधाय भाष्यतात्पर्यं दर्शयति **तेनेति**। सामान्येन मूलज्ञानावधारणशक्तिमनाप्तवाक्ये चापवादं वदता पुरुषवचसां द्वेधा शक्तिर्दर्शिता ज्ञानद्वारेणाऽर्थे प्रामाण्यमप्रामाण्यं वेति १६२॥

कथं पुनरवाचकादेव वाक्याज्ज्ञानमवगम्यतेऽत आह **पदार्थेति**। नेदं शाब्दं ज्ञानावधारणं किं त्वानुमानिकम्। वाक्यार्थप्रत्ययो हि पदपदार्थरचनाधीनः, रचना च विवक्षाधीना,। सा च ज्ञानाधिनेति॥ १६३॥

कथं पुनरवगम्यते विवक्षाधीना रचनेति,अन्वयव्यतिरेकाभ्यामित्याह **विवक्षान्तरेति**। विवक्षान्तरयुक्ता हि रचनान्तरं कुर्वन्तो दृश्यन्ते, अतो विवक्षाधीना रचनेति। एवं परम्परया मूलज्ञानकार्यभूतं वाक्यरचनमिति॥ १६४॥

ततस्तस्मिन्नानुमानिकी मतिर्युक्तेत्याह **तेनेति**॥ १६५॥

---

△ पूर्वमाक्षिप्तस्य भाष्यस्य वक्तृधीरित्यनेन समाधानं क्रियते।

☐ प्रतिबन्धबलेन आप्तवाक्यात् पूर्वविज्ञानमवगम्यते।

∴ वक्तृप्रमाणपूर्वत्वाद् रचनायाः न स्वतंत्रः अर्थज्ञानमात्रान्निश्चयः।

१. 'न'—ख

२. 'योगेन'—ख, ग

३. 'दृश्यते'—क

[1]आप्तोक्तकारिणं कं चिदनुयुङ्क्ते नरं यदा।
तदा च निर्दिशत्याप्तं स जानात्येतदित्यसौ ॥ १६६ ॥

तज्ज्ञानान्तरितत्वाच्च शब्दास्तावदुदासते।
प्रामाण्यस्थापनं [2]तु स्याद्वक्तृधीहेतुसम्भवात् ॥ १६७ ॥

अर्थे पूर्वप्रतीतेऽपि निश्चयो हि तदाश्रयः।
तेनार्थज्ञानगम्यादि प्रामाण्ये सैव पूर्वभाक् ॥ १६८ ॥

कथं पुनरवगम्यते वक्तृज्ञानमुखेनार्थनिश्चयो न साक्षादित्यत आह **आप्तोक्तेति**। यदा ह्याप्तोक्तमनुतिष्ठन् कश्चित्केन चिदनुयुज्यते किमत्र ते प्रमाणमिति, तदाऽसावाप्तमेव निर्दिशति स तज्जानाति नाहमिति। तेनाऽवगच्छामो नूनमस्य तज्ज्ञानद्वारार्थनिश्चय इति। नन्वेवमर्थमनवबोधयतः शब्दस्य वाचकत्वमेव न स्यात्, न चानवगतवाचकत्वानां लोके वेदेऽपि बोधकत्वं सम्भवतीति दूरापास्तं वेदप्रामाण्यं स्यात् १६६ ॥

कथं चानवगतेऽर्थे तद्विषयज्ञानानुमानमत आह **तज्ज्ञानेति** ॥ १६७ ॥

स्यादेवं यदि शब्दा नाऽर्थं प्रत्याययेयुः, ते तु श्रुतमात्रा एवार्थे प्रतीतिमाधाऽयापि तत्प्रतिष्ठाया वक्तृज्ञानान्तरितत्वाद्यावद्वक्तृज्ञानं नावगतं तावदुपजातस्याऽपि निश्चयस्याऽसत्समत्वादुदासीना इव भवन्ति। यदा तु वक्तृधीहेतुः सम्भावितो नीश्चतश्च भवति तदा पूर्वसंजातमप्यर्थे प्रामाण्यं पुनः प्रतिष्ठाप्यते, तस्माददोषः। किं पुनः कारणमुपजातेऽप्यर्थनिश्चये वक्तृज्ञानप्रणाडी समाश्रीयतेऽत आह **अर्थेइति**। प्रथममुपजातेऽपि वाक्यार्थप्रत्यये तस्य वाक्यस्य पुरुषबुद्धिप्रभवत्वात्तद्दोषेण दोषसम्भवात्पुनर्विचिकित्सा जायते, मूलज्ञानस्य तु सम्यक्त्वे विचिकित्सानिवृत्तौ निश्चयः प्रतिष्ठितो भवतीति युक्तं निश्चयस्य वक्तृज्ञानाश्रयत्वम्। एवं च यदुक्तमनवगतेऽर्थे कथं तद्विषयज्ञनानुमानमिति, तदपि परिहृतं भवतीति दर्शयति **तेनेति**। विशिष्टाऽर्थविषया वक्तृधीर्यद्यप्यर्थज्ञानगम्याऽर्थमवगम्यैवावगन्तव्येत्यर्थ एव पूर्वं गम्यते, तथापि प्रामाण्यनिश्चये सैव पूर्वभाक्, अर्थनिश्चयः पश्चादेव प्रतितिष्ठतीति ॥ १६८ ॥

तेन पुरुषवाक्येषु निमित्तपुरुषबुद्ध्यधीनं प्रामाण्यमिति। तदसम्भवाद् बुद्धादिवचसां मृषात्वमुपपन्नमित्याह **अत इति**।

---

१. 'आप्तोक्तित'—क, ख
२. 'तस्माद्'—क

अतोऽत्र पुंनिमित्तत्वादुपपन्ना मृषार्थता ।
न तु स्यात्तत्स्वभावत्वं वेदे वक्तुरभावतः ॥ १६९ ॥

तद्बुद्ध्यन्तरयो[1]नास्तीत्यर्थोऽर्थैश्च प्रतीयते ।
अतो न ज्ञानपूर्वत्वमपेक्ष्यं [2]नोऽयथार्थता ॥ १७० ॥

अप्रमाणत्वसिद्धौ वा दृष्टान्तो य उदाहृतः ।
बुद्धादिवचनं तस्य [3]साध्येनासङ्गतोच्यते ॥ १७१ ॥

तेषामपि हि यत्कार्यं पूर्वत्र प्रतिपादितम् ।
तत्र सम्यक्त्वमर्थे तु व्यापारो नैव विद्यते ॥ १७२ ॥

स्वव्यापारातिरिक्तेऽर्थे वेदस्याऽपि मृषार्थता ।
पूर्वपक्षार्थवत्त्वेन प्रसक्ता सिद्धसाध्यता ॥ १७३ ॥

वेदस्य तु वक्तुरभावान्नायं स्वभाव इत्याह न त्विति ॥ १६९ ॥

कस्तर्हि तस्य स्वभाव इत्याह तद्बुद्धीति । वक्तृबुद्ध्यन्तरायाऽभावात्पदार्थैरेव साक्षाद्वाक्यार्थः प्रतीयतइति । प्रकरणार्थमुपसंहरति अत इति । न वक्तृज्ञानपूर्वकत्वापेक्षं वेदप्रामाण्यं तदनपेक्षत्वादेव च न तदभावादयथार्थता । तदेवं "ननु अतथाभूतम्" इत्यत्र यत्पुंवचनसाधर्म्यादप्रामाण्यमुक्तं तदेवंपर्यन्तेन परिहृतमिति यथार्थत्वमिति । तदिदं "न तु वेदवचनस्ये" त्यनेन भाष्येणोक्तमिति ॥ १७० ॥

अन्यथा भाष्यार्थमाह अप्रमाणत्वेति । ये वक्तृज्ञान एव वाक्यस्य प्रामाण्यं नार्थे इति मन्यन्ते, तन्मतेनेदं भाष्यमप्रमाणत्वसिद्धौ दृष्टान्तस्य बुद्धादिवाक्यस्य साध्यवैकल्यं प्रतिपादयति ॥ १७१ ॥

साध्यवैकल्यमेव दर्शयति तेषामिति । पदार्थरचनायत्त इत्यादिना यत् पुंवचसां कार्यमनुमेयं वक्तृज्ञानं प्रतिपादितं, तत्र बुद्धादिवचनानामपि प्रामाण्यमस्त्येवेति, साध्यवैकल्यम्, अर्थे तु तेषां नास्त्येव व्यापार इति ॥ १७२ ॥

यदि तु यत्र व्यापारो नास्ति तत्रैवाऽप्रामाण्यं वेदस्यापि साध्यते, तेन न भविष्यति साध्यवैकल्यमिति, ततः सिद्धसाधनमित्याह स्वव्यापारेति ॥ १७३ ॥

---

१. 'योर्ना'—क
२. 'नायथार्थता'—क ख
३. 'साध्यानासङ्गितो'—क
" 'साध्यानासङ्गतो'—ख

ननु सामान्यतो दृष्टं पौरुषेयं वचनं वितथमुपलभ्य वचनसाम्यादिदमपि वितथमवगम्यते ।

'अज्ञात्वैवमभिप्रायं कृतकाऽकृतकत्वयोः ।
सत्यमिथ्यात्वहेतूक्तिमात्रज्ञानात्परोऽब्रवीत् ॥ १७४ ॥
ननु सामान्यतोदृष्टं नान्यत्वादित्यदूषणम् ।
एतस्मादेव दृष्टान्तो न हि पक्षे सपक्षता ॥ १७५ ॥
तस्मादयमभिप्रायो भाष्यकारस्य वर्ण्यते ।
'अभ्युपेतार्थविषयं वाक्यव्यापारमुच्यते ॥ १७६ ॥
यदि स्याद् व्यवधानेऽपि वाक्यार्थापेक्षयाऽनृतम् ।
दृष्टान्तो नृवचोऽत्रापि हेतुः साधारणो भवेत् ॥ १७७ ॥
सत्येष्वपि हि दृष्टैव पौरुषेयेषु वाक्यता ।
अतीन्द्रियेऽपि किञ्चिद्धि सत्यं दृष्टं यदृच्छया ॥ १७८ ॥

ननु "सामान्यतोदृष्ट" मित्यादिभाष्यमयुक्तं तत्पुरुषबुद्धिप्रभवमप्रमाणमिति वदता दोषनिमित्तं लौकिकस्याप्रामाण्यं न वाक्यत्वप्रयुक्तं दर्शितमत आह **अज्ञात्वेति** सपादेन । पुरुषदोषो मिथ्यात्वे तदभावश्च सम्यक्त्वे हेतुरनेनोक्त इत्येतावन्मात्रं ज्ञात्वा वाक्यत्वस्याऽप्रयोजकत्वाभिप्रायमजानन् भवतु तावद् येन केन चिद्धेतुना लौकिकस्याप्रामाण्यं तावताऽपि तत्प्रतिबद्धं वाक्यत्वं वेदस्यापि मिथ्यात्वमनुमापयतीति चोदयति । इतिशब्दश्चात्र द्रष्टव्यः सामान्यतो दृष्टमित्यत्राऽब्रवीदिति । कृतकाकृतकत्वयोरिति स्वार्थे भावप्रत्यय इति । "नाऽन्यत्वात्" ( शा० भा० १–१–२ ) इति परिहारभाष्यमाक्षिपति **नाऽन्यत्वादिति** पादत्रयेण । गुण एव हि पक्षसपक्षयोरन्यत्वं न दोष इति ॥ १७४ ॥ १७५ ॥

यस्मादेवं यथाश्रुतं भाष्यमनुपपन्नं तस्मादयं वक्ष्यमाणो भाष्याभिप्राय इत्याह **तस्मादिति** । तमेव दर्शयति **अभ्युपेत्येति** द्वयेन । ज्ञाने एव पुंवचसां प्रामाण्यं नार्थे तेषां व्यापारः, अतः साध्यविकलो दृष्टान्त इति तावदुक्तम् । अभ्युपेत्याप्यर्थविषयं व्यापारं दूषणान्तरमुच्यते । यदि ज्ञानव्यवधाने सत्यर्थापेक्षयैव दृष्टान्तस्तथापि हेतोर्वाक्यत्वस्य सत्येष्वपि वैद्योपदेशेषु दृष्टत्वादनैकान्तिकत्वमिति । यदि त्वतीन्द्रियविषयत्वे सति वाक्यत्वादित्युच्यते, तथाप्यनैकान्तिकत्वमित्याह **अतीन्द्रिय इति** । केन चिदतीन्द्रियविषयमेव वाक्यमिन्द्रोऽस्तीति प्रयुक्तम्, अपरेण नास्तीति, तयोरन्यतरदवश्यमस्ति सत्यमिति । एतच्च सत्यत्वमात्राभिप्रायेणोक्तं न तु प्रामाण्याभिप्रायेण, द्वयोरपि मूलाभावेनानिऽर्णयिकत्वात् । अप्रामाण्ये साध्ये नास्त्यनैकान्तिकत्वम्, तत्र तु वक्ष्यमाणान्येवाऽप्रयोजकत्वसप्रतिसाधनत्वागमविरुद्धत्वान्येव दूषणानीति ॥ १७६-१७८ ॥

न। अन्यत्वात्। न हि अन्यस्य वितथभावेऽन्यस्य वैतथ्यं भवितुमर्हति, अन्यत्वादेव।

नहि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति।

'नान्यत्वादिति चानेन परोक्तादन्यतोच्यते।
अन्यो ह्येष तदाभासो विपक्षं वान्यमब्रवीत्॥ १७९॥

यद्वाऽन्यस्माद्विसंवादान्मिथ्यात्वं तत्र न त्विह।
विषयस्यापि चान्यत्वा[1]त्साधनासङ्गतैव सा॥ १८०॥

न ह्यन्यस्येति नैकस्मिन्मृषार्थेऽन्यमृषार्थता।
विवक्षाया मृषार्थत्वे न च वाक्ये मृषार्थता॥ १८१॥

वर्णितेऽभिप्राये भाष्यं योजयति नान्यत्वादिति पादत्रयेण। परेण हि सामान्यतो दृष्टं वक्तव्यत्वेन प्रतिज्ञातं ततोऽन्यदिदं तदाभासमनैकान्तिकहेतुत्वादिति। अस्मिन्नेव दूषणे भाष्यमन्यथा योजयति विपक्षमिति। सामान्यतोदृष्टस्य हि विपक्षो हेतुशून्यो भवति, अस्य विपक्षः सत्यवाक्यं हेतुयुक्तोऽन्य इति। अस्मिंश्च व्याख्याने न ह्यन्यस्येत्यादिभाष्यं सुगमम्। न ह्यनाप्तवाक्यस्यवैतथ्ये सत्याप्तवाक्यस्याऽपि वैतथ्यम्। अतोऽनैकान्तिकत्वमिति योजना॥ १७९॥

व्याख्यान्तरमाह यद्वेति। अन्यदेव लौकिकस्य मिथ्यात्वे प्रयोजकं दुष्टत्वम्, वाक्यत्वं त्वप्रयोजकमिति। न ह्यन्यस्य दुष्टस्य मिथ्यात्वे सत्यदुष्टस्यापि मिथ्यात्वम्, न हि श्यामत्वहेतुयुक्तस्य देवदत्तस्य श्यामत्वेन तद्रहितस्य यज्ञदत्तस्याऽपि तद् भवति। व्याख्यान्तरमाह विषयस्येति। लौकिकस्य हि वक्तृज्ञानं विषयो नार्थः। तत्र च प्रमाणमेव तदिति तदेव साध्यवैकल्यं दृष्टान्तस्येति॥ १८०॥

'न ह्यन्यस्ये' ति भाष्यमनुभाष्याऽस्मिन् पक्षे योजयति न ह्यन्यस्येति। एतदेव विवृणोति विवक्षाया इति। एकं वाक्यलिङ्गकं विवक्षाविषयं ज्ञानविषयं वाऽनुमानम्, द्वितीयं तु विवक्षालिङ्गकमर्थविषयम्। तत्र द्वितीयस्य मिथ्यात्वेऽन्यस्य प्रथमस्यापि न मिथ्यात्वसिद्धिरिति 'न हि देवदत्तस्ये' ति सुगमम्॥ १८१॥

---

१. 'साध्यानासङ्गितैव'—क, ख,
'साध्यानां सङ्गतैव'—ग

श्यामत्वे पुंस्त्ववच्चैतत्साधारण्ये निदर्शनम् ।
परोक्तेर्वापि दुष्टत्वाद्विकल्पसममुच्यते ॥ १८२ ॥

यद्वा प्रमाणमेवेदं सम्यक्त्वेऽन्यत्वमुच्यते ।
विरुद्धाऽव्यभिचारित्वं बाधो वाऽप्यनुमानतः ॥ १८३ ॥

चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः ।
कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्त्यक्षबुद्धिवत् ॥ १८४ ॥

[1]तथाऽनाप्तप्रणीतोक्तिजन्यत्वाद् बाधवर्जनात् ।
[2]देशकालादिभेदेन चाप्तोक्तिप्रत्ययो यथा ॥ १८५ ॥

अनैकान्तिकपक्षे देवदत्तनिदर्शनस्यार्थमाह **श्यामत्वे इति**। न हि देवदत्तस्य श्यामत्वे पुंस्त्वेऽनैकान्तिकत्वेन यज्ञदत्तस्यापि तद्भवतीति। नान्यत्वादित्यस्य व्याख्यानान्तरमाह **परोक्तेरिति**। परोक्तं साधनमतिस्थूलदोषं न सम्यगुत्तरार्हमिति मत्वा विकल्पसमं जात्युत्तरमाह। साधनधर्मयुक्ते धर्मिणि धर्मान्तरविकल्पात्साध्यधर्मविकल्पापादनं विकल्पसमम्, वाक्यत्वे सत्यपि यथा किंचिल्लौकिकं किंचिच्च ततोऽन्यद्वैदिकमित्येवं लौकिकवैदिकत्वे विकल्पेनावतिष्ठेते तथा किं चित्प्रमाणं किं चिच्चाऽप्रमाणं भविष्यति, न वाक्यत्वमनुसंहितमित्येतावता धर्मान्तराणामप्यनुसन्धानं भवतीति। न ह्यन्यस्येत्यादि चास्मिन्पक्षे सुगमम् ॥ १८२ ॥

व्याख्यानान्तरमाह **यद्वेति**। सम्यक्त्वे प्रामाण्ये प्रमाणं लिङ्गमन्यत्वमुच्यते। तच्च यदि परोक्तेन साधनेन तुल्यबलं ततोऽस्य हेतोर्विरुद्धाऽव्यभिचारित्वम्। अथ प्रबलं ततोऽनुमानविरोधः प्रतिज्ञाया इति ॥ १८३ ॥

तदेव प्रमाणं प्रयोगेण दर्शयति **चोदनेति**। प्रत्येकं लिङ्गादिभिर्बुद्धिशब्दः सम्बध्यते ॥ १८४ ॥

अस्मिन्नेव साध्येऽन्ये द्वे प्रमाणे दर्शयति **तथेति**। देशान्तरादौ बाधवर्जनादित्यन्वयः। भाष्यस्य चायमर्थः। न वितथं वैदिकं किं तु तथ्यमेव। कस्मात्? दोषयुक्तं बाधयुक्तं च यज्ज्ञानकारणं ततोऽन्यत्वात्। प्रत्यक्षादिवत्। अनाप्तवाक्याद्वाक्यान्तरत्वात्, आप्तवाक्यवदिति। न ह्यन्यस्य ज्ञानकारणस्य बाधितस्य दोषयुक्तस्य च वितथभावेऽन्यस्य तद्रहितस्य वैतथ्यं भवति, अन्यत्वादेवेति ॥१८५॥

---

१. 'तथानाप्तप्रणी'—क ख
२. 'देशकालादिभेदादौ'—क

अपि च पुरुषवचनसाधर्म्याद् वेदवचनं वितथमित्यनुमानं व्यपदेशादवगम्यते। प्रत्यक्षस्तु वेदवचनेन प्रत्ययः। न चानुमानं प्रत्यक्षविरोधि प्रमाणं भवति।

[1]अकर्तृकत्वसिद्ध्यर्थं च हेतुत्वं साधयिष्यते।
एवमाद्यवबुध्यायं नान्यत्वादित्यवोचत ॥ १८६ ॥

प्रत्यक्षस्त्विति दार्ढ्यं वा प्राथम्यं वापि लक्षयेत्।
स्वरूपतः प्रमाणत्वं मिथ्यात्वं पररूपतः ॥ १८७ ॥

ज्ञानाभावश्च मिथ्यात्वं द्वयस्याऽसम्भवाद्यदि।
प्रत्यक्षं तत्परेषां च सिद्धमस्याऽनुमानतः ॥ १८८ ॥

[2]यथा च तव मिथ्यात्वं साधनं साधयेदिदम्।

नन्वसिद्धमेवाऽनाप्तप्रणीतत्वं दोषवर्जनं च वेदस्याऽनाप्तप्रणीतत्वादित्यत आह अकर्तृकत्वेति। भाष्यार्थमुपसंहरति एवमिति। आदिशब्दश्चान्यस्यापि दोषस्योपसंग्रहार्थः। "अपि च पुरुषवचनसाधर्म्याद् वेदवचनं मिथ्येत्यनुमानम्, प्रत्यक्षस्तु वेदवचनेन प्रत्ययः। न चानुमानं प्रत्यक्षविरोधि प्रमाणं भवति" इति भाष्यं ( शा०भा०१-१-२ ) तदयुक्तम्, प्रत्यक्षशब्दो ह्यैन्द्रियकप्रत्ययवचनः। न च शाब्दस्यैन्द्रियकत्वमस्ति। यदि तु वचनविषयो यः श्रौत्रः प्रत्ययः तस्य प्रत्यक्षत्वमुच्यते। न च तद्वैतथ्यस्य बाधकम्, वन्ध्यासुतवचनस्यापि श्रौत्रत्वात् ॥ १८६ ॥

अथ वाचनिकमेव ज्ञानं प्रत्यक्षगम्यत्वाभिप्रायेण प्रत्यक्षमुच्यते घटः प्रत्यक्ष इतिवत्, तदप्ययुक्तम्। ज्ञानस्यानुमेयादित्यत आह प्रत्यक्ष इति। ऐन्द्रियकज्ञानवचन एवायं प्रत्यक्षशब्दो वाचनिके ज्ञाने गुणवृत्त्या प्रयुक्तः। अस्ति हि तस्य दार्ढ्यमनुमानाच्च प्राथम्यं स्वतश्च प्रामाण्यं परतश्चाप्रामाण्यमिति प्रत्यक्षसादृश्यम्। तदनेनागमविरोध एव पूर्वोक्तः प्रतिज्ञायाः कथ्यत इति ॥ १८७ ॥

मुख्य एव वा प्रत्यक्षशब्द इत्याह ज्ञानाभाव इति। परेण ह्यप्रामाण्यमुक्तम् तच्च संशयविपर्ययात्मकं द्वयमपि नास्तीति प्रागेव स्थितम्। तद्यदि ज्ञानाभावरूपमुच्यते ततो भवतां प्रत्यक्षविरुद्धा प्रतिज्ञा भवति। भवन्मते ज्ञानस्य प्रत्यक्षत्वात्। अस्यैव हि केवलं मीमांसकस्य तदनुमेयं परेषां तु प्रत्यक्षमेवेति ॥ १८८ ॥

विशेषविरुद्धत्वं वा हेतोरनेन भाष्येणोच्यत इत्याह यथा चेति। बाधका-

1. 'अकृत्रिमत्व'—ग  2. 'यथैवतव'—क

तस्माच्चोदनालक्षणोऽर्थः श्रेयस्करः। एवं तर्हि श्रेयस्करो जिज्ञासितव्यः, किं धर्मजिज्ञासया।

उच्यते—य एव श्रेयस्करः स एव धर्मशब्देनोच्यते। कथमवगम्यताम्। यो हि यागमनुतिष्ठति, तं धार्मिक इति समाचक्षते। यश्च यस्य कर्ता स तेन व्यपदिश्यते। यथा पाचको लावक इति। तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते।

तथा च बाधकाधीनं मिथ्यात्वमपि साधयेत् ॥ १८९ ॥
²धर्म इत्युपसंहार्ये यच्छ्रेयस्करभाषणम्।
तद्धर्मपदवाच्यार्थनिरूपणविवक्षया ॥ १९० ॥
श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता ॥ १९१ ॥
अन्यत् साध्यमदृष्ट्वैव यागादीननुतिष्ठतः।
धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते ॥ १९२ ॥

धीनेन हि मिथ्यात्वेन व्याप्तं वाक्यत्वं तादृशमेव साधयेत्। न च तद्वेदे शक्यं साधयितुम्। प्रत्यक्षो हि वेदोत्थापितः प्रत्ययः तद्वदेव न कदाचिद् बाध्यत इति। अस्मिन्पक्षे गौण एव प्रत्यक्ष शब्द इति ॥ १८९ ॥

'तस्माच्चोदनालक्षणोऽर्थः श्रेयस्कर' इति भाष्ये शब्दान्तरेणोपसंहारस्याभिप्रायमाह धर्म इति। श्रेयस्करवाचित्वं धर्मशब्दस्य निरूपयितुमेवमुपसंहृतमिति ॥ १९० ॥

"य एव श्रेयस्करः स एव धर्मशब्देनोच्यते" इति भाष्यं, तदनेन कस्य धर्मत्वमुक्तं तद्दर्शयति श्रेय इति। द्रव्यादीनां धर्मत्वमुक्तमनेनेति ॥ १९१ ॥

कथं पुनर्यागादीनामेव धर्मशब्दवाच्यत्वमित्याशङ्क्य लोकप्रयोगं प्रमाणमुपदर्शयता भाष्यकारेणोक्तं, 'यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते' इति, तदयुक्तम्। यागानुष्ठाय्येव ह्यपूर्वान्तःकरणवृत्त्यादिकमप्यनुतिष्ठति, अतो यागयोगादेवात्र किं धार्मिकशब्दो नापूर्वादियोगादिति कथं विविच्यतेऽत आह अन्यदिति। लौकिका हि नापूर्वादिस्वरूपं जानन्ति, कथं तन्निमित्तं धार्मिकशब्दं प्रयुञ्जीरन्? यागादीनामेव श्रेयःसाधनत्वं मत्वा तदभिप्रायेणैव तदनुष्ठायिनि धार्मिकशब्दं प्रयुञ्जते। अतो यागादीनामेव श्रेयःसाधनात्मनां धर्मशब्दाभिधेयत्वमिति निर्णीयते। न च शूद्रकृतस्य धर्मत्वप्रसङ्गः, श्रेयःसाधनत्वाऽभावादिति ॥ १९२ ॥

न केवलं लोके, वेदेऽपि 'यज्ञेन यज्ञमयजन्त देवाः, तानि धर्माणि प्रथमान्यासन्' इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति।

'पश्वादीनि च धर्मस्य फलानीति व्यवस्थितम्।
चित्रागोदोहनादीनां तान्युक्तानि फलानि च ॥ १९३ ॥

तस्मात्तेष्वेव[1] धर्मत्वं' धर्माणीति च दर्शनात्।
लिङ्गसंख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम् ॥ १९४ ॥

'अन्तःकरणवृत्तौ वा वासनायां च चेतसः।
पुद्गलेषु[2] च पुण्येषु [3]नृगुणेऽपूर्वजन्मनि ॥ १९५ ॥

प्रयोगो धर्मशब्दस्य न दृष्टो' 'न च साधनम्।
पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः' ॥ १९६ ॥

प्रसिद्ध्यन्तरमपि दर्शयति पश्वादीति सपादेन। पश्वादीनि हि धर्मफलत्वेन प्रसिद्धानि तेन येषां तानि फलानि ते धर्मा इति गम्यते। तानि च चित्रादीनां फलत्वेन चोदनातोऽवगतानीति चित्रादीनामेव धर्मत्वमिति। वैदिकादपि सामानाधिकरण्याद्यागादेरेव धर्मत्वमिति वदता भाष्यकारेणोदाहृतं 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्' इति, तद्दर्शयति धर्माणीति। कथं तर्हि पुंल्लिङ्गैकवचनान्तेन यज्ञशब्देन नपुंसकबहुवचनान्तस्य धर्मशब्दस्य सामानाधिकरण्यमत आह लिङ्गेति। तानीत्यत्र प्रातिपदिकं तावद्यज्ञवाच्येव। अन्यस्याऽप्रकृतत्वात्। तत्समानाधिकरणश्च धर्मशब्दः। ततः सोऽपि यज्ञविषय एव। लिङ्गसंख्ययोस्तु छान्दसत्वादसौ व्यत्यय इति ॥ १९३ १९४ ॥

एवं स्वमतेन धर्मपदस्यार्थमुक्त्वा मतान्तराणीदानीं दूषयति अन्तःकरणेति दृष्टान्तेन। सांख्या ह्यन्तःकरणस्य मनसो वृत्तिविशेषं यागाद्यनुष्ठानजन्यं धर्ममाहुः। शाक्यास्तु चेतसो ज्ञानस्य ज्ञानान्तरजन्यां वासनाम्। आर्हतास्तु कायारम्भकान् परमाणून् पुद्गलाख्यान्। वैशेषिकास्तु आत्मनो विशेषगुणम्। एकदेशिनस्त्वपूर्वम्। सर्वेषु च तेषु लोके धर्मशब्दप्रयोगो न दृष्ट इति न तेषां धर्मत्वमिति। यागाद्यनुष्ठानात्पूर्वं जन्म यस्य नास्ति तदपूर्वजन्मेति। किं च श्रेयःसाधनवचनो धर्मशब्दो लोके प्रसिद्धः, न चान्तःकरणवृत्त्यादीनां तत्साधनत्वं चोदनादिभिरवगम्यते। अतो न तेषां धर्मत्वमित्याह न चेति भिरन्तेन। आदिशब्देन बाह्यागमादीनां ग्रहणम्। तेष्वपि चैत्यवन्दनादीनामेव श्रेयःसाधनताऽवगम्यते, न वासनादीनामिति ॥ १९५ ॥ १९६ ॥

१. 'तस्मादेतेषु'—ग २. 'पुष्कलेषु' – ग ३. 'नृगुणैःपूर्वं'—घ

न च : वस्त्वन्तरं शक्यमपूर्वं स्वर्गयागयोः ।
ज्ञातुं साधनभूतं वा साध्यं वा नाप्यतोऽन्यथा ॥ १९७ ॥

श्रुतसाधनसाध्यत्वत्यागेनाऽश्रुतकल्पना ।
प्रसज्येतास्य ताद्रूप्ये व्यतिरेके स्वरूपता ॥ १९८ ॥

तस्मात्फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् ।
उत्पत्तौ वापि पश्वादेरपूर्वं न ततः पृथक् ॥ १९९ ॥

शक्तयः सर्वभावानां भावशब्दैर्विशेषतः[1] ।
नोपाख्यायन्त इत्येवं नापूर्वं धर्मशब्दता ॥ २०० ॥

मा नामाऽन्तःकरणवृत्त्यादीनां श्रेयःसाधनत्वं विज्ञायि, अपूर्वस्य तु ज्ञायते, तेनाऽपूर्वं कृत्वा नान्यथेति वक्ष्यति । तस्मात्तस्य धर्मत्वं युक्तमत आह न चेति । नाऽपूर्वं नाम स्वतन्त्रं वस्त्वन्तरं स्वर्गयागयोः क्रमेण साधनभूतं साध्यभूतमन्यादृशं वा ज्ञायते ॥ १९७ ॥

कथमित्याह श्रुतेति । अस्याऽपूर्वस्य ताद्रूप्ये साध्यसाधनरूपत्वे श्रुतस्य स्वर्गसाध्यत्वस्य यागसाधनत्वस्य च हानिः, अश्रुतस्य चाऽपूर्वसाध्यसाधनभावस्य कल्पनम् । अताद्रूप्ये तु स्वरूपमेवाऽपूर्वस्य न स्यान्निष्प्रमाणकत्वादिति ॥ १९८ ॥

किमिदानीं नास्त्येवाऽपूर्वमत आह तस्मादिति । फलं साधयितुमभिप्रवृत्तस्य यागादेः शक्तिमात्रमुत्पत्तौ वा प्रवृत्तस्य पश्वादेः फलस्य सूक्ष्मावस्था शक्तिरङ्कुरस्थानीयाऽपूर्वं न ततः पृथग्भूतं वस्त्वन्तरम् । एतच्चापूर्वाधिकरणे स्पष्टं वक्ष्यति ॥ १९९ ॥

तथापि किं धर्मशब्दवाच्यं न भवत्यत आह शक्तय इति । उक्तं तावल्लोकप्रयोगाभावान्न तस्य धर्मशब्दवाच्यत्वमिति । किं च सर्वपदार्थानामेव शक्तयः साधारणैरेव शक्तिसामर्थ्यादिपदैरभिधीयन्ते । न च धर्मशब्दः शक्तिमात्रवचनः अग्न्यादिशक्तावप्रयोगात् । अतो यागादेः श्रेयः साधनस्य या शक्तिः सा तद्विशिष्टाभिधेया स्यात् । न च शक्तीनां भावविशिष्टानामभिधानं क्वचिद् दृष्टम् । विशेषत इति विशेषण कृत्वेति ल्यब्लोपे पञ्चमी । भावशब्दैर्विशेषिता इति क्वचित्पाठः । न चाऽनभिधाय श्रेयःसाधनं तद्विशिष्टा शक्तिरभिधातुं शक्यते । तदभिधाने च न शक्ति यावदभिधा गन्तुमर्हति । तस्माद्यागादिरेव धर्मो नाऽपूर्वमिति ॥ २०० ॥

---

१. 'विशेषिता'—क

उभयमिह चोदनया लक्ष्यते, अर्थोऽनर्थश्चेति । कोऽर्थः ? यो निःश्रेयसाय ज्योतिष्टोमादिः । कोऽनर्थः ? यः–प्रत्यवायाय श्येनो वज्र इषुरित्येवमादिः । तत्र अनर्थो धर्म उक्तो मा भूदित्यर्थग्रहणम् ।

पुरस्ताच्चोदनाशब्दो विधावेव व्यवस्थितः ।
न च तल्लक्षणा हिंसा प्रत्युदाहरणं कथम् ॥ २०१ ॥

चोदनालक्षणो यश्च श्येनादिरिह गम्यते ।
निषेधाभावतस्तस्य कथंब्रूयादनर्थताम् ॥ २०२ ॥

यद्यपि स्याद्विधिस्पृष्टे निषेधो नैव तादृशः ।
विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत् ॥ २०३ ॥

"उभयमिह चोदनया लक्ष्यत" इत्यादिभाष्यमर्थशब्दप्रयोजनकथनार्थं, तदाक्षिपति पुरस्तादिति । क्रियायाः प्रवर्तकं वचनं चोदनेति वदता क्रियाविधावेव चोदनाशब्दो व्यवस्थापितः । तेन नाऽनर्थस्य हिंसासुरापानादेश्चोदनालक्षणत्वम् । निषेधेषु हि यदि तावन्निवारणं नाम विधेरर्थान्तरं वाक्यार्थः, यदि वा नञर्थ-विधिरुभयथाऽपि क्रियाविधित्वाभावान्न निषेधलक्षणस्याऽनर्थस्य चोदनालक्षणत्वम् । अतल्लक्षणस्य च द्व्यङ्गविकलत्वाच्चोदनालक्षणशब्देनैव तद्व्यावृत्तिसिद्धेर्नार्थग्रहण-प्रत्युदाहरणत्वम् । तस्मादुभयं चोदनालक्षणमित्येतत्तावदयुक्तम् ॥ २०१ ॥

यदपि "कोऽनर्थ" इति पृष्ट्वाऽनर्थोदाहरणत्वेन श्येनादिकमुपन्यस्तं तदाक्षि-पति चोदनेति । विधेयत्वेन श्येनादेर्निषेधाभावान्नानर्थत्वमिति । एवं वा श्लोक-द्वयमिदं व्याख्येयम् । अनर्थः श्येनादिः चोदनालक्षण इत्यत्र विकल्प्य दूषणमुच्यते । श्येनग्रहणं यदि लक्षणया फलपरं ततस्तत्फलं हिंसा चोदनालक्षणत्वाभावादुभयाङ्ग-विकलं न प्रत्युदाहरणम् । अथ श्येनस्वरूपपरं तदप्यनर्थत्वाभावादुभयाङ्गयुक्तं न प्रत्युदाहरणमिति ॥ २०२ ॥

ननु विधेयस्यापि श्येनादेः षोडशिग्रहणादिवत्सम्भवत्येव निषेधोऽत आह यद्यपीति । अनन्यगोचरो हि निषेधो विधिविषयमास्कन्दति; सामान्यविषयो हिंसानिषेधो विशेषविहिते श्येनादौ न प्रवर्तत एव । अथापि प्रवर्तेत तथापि विहितनिषिद्धस्य षोडशिवदेव नाऽनर्थत्वमिति ॥ २०३ ॥

कथं पुनरसौ अनर्थः ? हिंसा हि सा, हिंसा च प्रतिषिद्धेति। कथं पुनरनर्थः कर्तव्यतया उपदिश्यते ? उच्यते—नैव श्येनादयः कर्तव्या विज्ञायन्ते। यो हि हिंसितुमिच्छेत्, तस्यायमभ्युपाय इति हि तेषामुपदेशः। 'श्येनेनाभिचरन् यजेत' इति हि समामनन्ति, न 'अभिचरितव्यम्' इति।

[1]चोदनालक्षणत्वोक्त्या निषिद्धत्वं विरुध्यते।
श्येनादावुपदिष्टे च हिंसा हीति न युज्यते ॥ २०४ ॥

हिंसा हि फलमेतेषां भिन्ना तेभ्यः स्वरूपतः।
सा हि प्राणवियोगात्मा श्येनस्तत्रा[2]ऽसिवत्पृथक् ॥ २०५ ॥

उपदेशाभिधानं च [3]नाऽविधेयेऽवकल्पते।
श्येनादेरविधाने च कस्यान्यस्य विधेयता ॥ २०६ ॥

यदपि "कथं पुनरसावनर्थं" इति पृष्ट्वा "हिंसा च प्रतिषिद्धा" इत्युक्तं तदप्याक्षिपति चोदनेति ॥ २०४ ॥

किमिति न युज्यते श्येन एव हि हिंसाऽत आह हिंसेति। कथं भिन्नेत्यत आह सा हीति। प्राणवियोगः प्राणानां वियोजनं प्राणवियोगभावनेति यावत्। तस्यां चासिवदेव श्येनयागो धात्वर्थः करणम्, तस्य तु फलं प्राणवियोगभावना हिंसा श्येनादेर्भिन्नैवेति ॥ २०५ ॥

यदपि "कथं पुनरनर्थः कर्त्तव्यतयोपदिश्यत" इति पृष्ट्वा "नैव श्येनादयः कर्त्तव्यतया विज्ञायन्त" इति तेषामविधेयत्वमुक्त्वा पुन "यो हि हिंसितुमिच्छेत्तस्याऽयमभ्युपाय इति हि तेषामुपदेशः श्येनेनाभिचरन्यजेत" इति कर्मवाचिन्या षष्ठ्या तेषामुपदेश्यत्वं विधेयत्वमुक्तं, तदपि व्याहतमित्याह उपदेशेति। "नैव श्येनादय" इत्येतदपि विधेयत्वनिराकरणमयुक्तमित्याह श्येनादेरिति। फलं तावत्सर्वत्राऽविधेयं तद्यदि फलसाधनस्याऽपि श्येनादेरविधेयत्वं तदा न किंचिद्विधेयमवशिष्येत। इतिकर्त्तव्यतांशो विधीयतइति चेत्, न। अविशेषात्। यथैव हि साधनं साधनत्वेनोपदिश्यमानमप्यविधेयं तथैवेतिकर्त्तव्यता करणोपकारकत्वेनोपदिश्यमानाऽप्यविधेया स्यात्। यथा च साधने फलरागात्प्रवृत्तिः तथेतिकर्त्तव्यतायामपि। तदभावे फलाऽनुत्पत्तेरित्यलम् ॥ २०६ ॥

---

१. 'चोदनालक्षणं चोक्त्वा निषिद्धत्वाद्' – ख, ग
२. 'त्रापिसा'—ख
३. 'नाभिधेये'—ख

'सर्वत्राव[1]स्थितो' न्यायो भावनांशद्वये विधिः।
स [2]'बाध्येतेह' ये चामी ज्योतिष्टोमादयो मताः ॥ २०७ ॥

धर्मत्वेन न तेऽपि स्युर्हिंसासाधनका हि ते।
न चाविधीयमानस्य [3]फलतत्साधनाङ्गता ॥ २०८ ॥

[4]साधनत्वेन विहितं न चाऽविहितमुच्यते।
[5]साध्यत्वेन विधानन्तु नैवेष्टं लोकवेदयोः ॥ २०९ ॥

तेनैवमर्थशब्दस्य प्रयोजनमिहोच्यते।
प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः ॥ २१० ॥

सा चोदनेति सामान्यं लक्षणं हृदये स्थितम्।
[6]प्रवर्तकगृहीतेस्तु स्यादुदाहरणार्थता ॥ २११ ॥

स्थितसिद्धान्तहानिश्च श्येनादीनामविधेयत्वे स्यादित्याह सर्वत्रेति तान्तेन। किं चैवं सति "कोऽर्थो यो निःश्रेयसाय ज्योतिष्टोमादि" रिति भाष्ये ये धर्मत्वेन संमतास्ते ऽपि न धर्माः स्युः, अधर्मत्वमेव तेषामपि स्यात्। तेऽपि हि साधनत्वेनोपदिश्यमानत्वादविधेयाः। अग्नीषोमीयादिहिंसाङ्गत्वाच्च तेनांशेन निषेधावताराद-धर्मत्वं स्यादित्याह इहेति। किं च विध्यभावे श्येनादीनां तदङ्गानां च फलाङ्गत्वं तत्साधनाङ्गत्वं च न स्यात् समानपदोपात्तधात्वर्थाऽवरुद्धाया भावनायाः समीहित-साध्यापेक्षत्वाभावादित्याह न चेति ॥ २०७ ॥ २०८ ॥

स्यादेतत्। नैव "श्येनादयः कर्त्तव्यतया विज्ञायन्त" इति कृत्यप्रत्यययोगात्सा-ध्यतया विधानं वार्यते, साधनतया तु विधानमनुज्ञायत एवाऽतो न विरोधो न च समीहितसाधनत्वहानिरिति, तत्राह साधनत्वेनेति। एवमपि तावद्विहितमेव विहितं चेन्निषेधाऽगोचरत्वान्नानर्थत्वेन प्रत्युदाहर्त्तुं युक्तमिति। किं च साध-नत्वेनैव सर्वं विधेयं विधीयते। साध्यांशस्य क्वचिदपि विधानाऽभावादित्याह साध्यत्वेनेति ॥ २०९ ॥

एवमाक्षिप्तं भाष्यं समाधत्ते तेनेति। यस्मादेवं यथाश्रुतं भाष्यमनुपपन्नं तस्मादेवं वक्ष्यमाणप्रकारेणाऽर्थशब्दस्य प्रयोजनमिह भाष्ये कथितं न यथाश्रुतेनेति। तमेव प्रकारं दर्शयितुमुपक्रमते प्रवृत्ताविति। प्रवर्त्तकं निवर्तकं च वाक्यं चोदना, न केवलं प्रवर्तकमेव धीग्रहणं ज्ञानस्याऽपि चोदनात्वसम्भवात्। तच्च प्रागेवाऽस्माभिर्दर्शितमिति भवत्युभयं चोदना। कथं तर्हि प्रवर्त्तकं चोदनेति भाष्यमत आह प्रवर्त्तकेति ॥ २१० ॥ २११ ॥

---

१. 'वस्थितो'—ग २. 'बाध्यते ह'—क ३. 'फलवत्'—ख
४. 'साधकत्वेन'—ग ५. 'साधकत्वेन'—ग ६. 'प्रवर्तकगृहीतैस्तु'—ग

तात्पर्ये ह्यर्थशब्दस्य नेयं व्याख्योपपद्यते ।
अर्थग्रहणलभ्यं वा तत्प्रवर्तकभाषणम् ॥ २१२ ॥

धर्मे प्रमाणभूतायास्तद्वा लक्षणमुक्तवान् ।
एवं सति विधिभ्यः स्याद्विधेयार्थावधारणम् ॥ २१३ ॥

निषेधेभ्यो निषेध्यानामनर्थत्वेन निर्णयः ।
तेनार्थग्रहणेनोक्ता विधेयस्येह धर्मता ॥ २१४ ॥

निषेध्यानामनर्थत्वमर्थसिद्धं न सूत्रितम् ।
तस्मादुभयमित्यत्र विधेयप्रतिषेध[9]योः ॥ २१५ ॥

यागादिब्रह्महत्यादिवर्गयोः स्यान्निदर्शनम् ।
श्येनादीनां विधेयत्वादिष्टस्यापि च साधनात् ॥ २१६ ॥

उपचारादनर्थत्वं फलद्वारेण वर्ण्यते ।
प्रतिषिद्धा हि सेत्यत्र स्फुटमेतत्क[10]रिष्यते ॥ ११७ ॥

किमित्येवं भवतीत्याह तात्पर्ये हीति । प्रवर्त्तकैकपरत्वे सति येयमर्थशब्दस्यानर्थनिवृत्तिपरत्वव्याख्या सा न युज्येतेति । अर्थशब्दसहितस्य वा चोदनाशब्दस्य तत्प्रवर्त्तकवचनत्वमुक्तमित्याह अर्थेति ॥ २१२ ॥

व्याख्यानान्तरमाह धर्म इति । यदा चोभयमपि चोदना तदा तयैव विधिरूपया विधेयानामर्थत्वं निषेधरूपया च निषेध्यानामनर्थत्वं लक्ष्यते, ततो युक्तमर्थानर्थयोः चोदनालक्षणत्वमित्याह एवं सतीति ॥ २ : ३ ॥

सति चोभयोस्तल्लक्षणत्वे निषेध्यस्याऽनर्थस्य धर्मत्वव्यावर्त्तनेन विधेयस्यैवार्थस्य धर्मत्वं वक्तुमर्थवदेवार्थग्रहणमित्याह तेनेति ॥ २१४ ॥

नन्वधर्मोऽपि हानाय जिज्ञासितव्यः, अतस्तत्स्वरूपमपि वक्तव्यमत आह निषेध्यानामिति । धर्मविपरीतो ह्यधर्मः । ततोऽर्थस्य धर्मत्वे सूत्रिते तद्विपरीतस्याऽनर्थस्य निषेध्यस्याऽधर्मत्वमर्थसिद्धत्वान्न सूत्रितमिति । एवं चोभयं चोदनालक्षणमिति भाष्यं विधेयनिषेध्याभिप्रायमित्याह तस्मादिति । यत्तु श्येनोदाहरणमयुक्तं विहितत्वेनानर्थत्वाऽभावादित्युक्तं तत्राह श्येनादीनामिति । विहितत्वादभिलषिततमस्य च शत्रुवधस्य साध्यमानत्वान्न स्वरूपेणानर्थत्वं श्येनादीनां सम्भवतीति फलगतमनर्थत्वं श्येनादावुपचर्यते, श्येनशब्देन वा फलं लक्षयित्वा मुख्यवध एवानर्थत्वमुच्यत इति ।

भाष्यकारेणैव श्येनफलाभिप्रायमेवेदमनर्थत्वं न श्येनस्वरूपाभिप्रायमिति विस्पष्टीकृतमित्याह प्रतिषिद्धा हीति ॥ २१५ ॥ २१७ ॥

९. 'ध्ययोः'—क, ख        १०. 'करिष्यति'—ख

हिंसा ह्येति च यच्चापि ब्रूते नाभिचरेदिति ।
श्येनादीनां स्वरूपे तु नोत्तरग्रन्थसङ्गतिः ॥ २१८ ॥
विहितत्वान्निषेधस्य प्रवृत्तिस्तेषु दुर्लभा ।
यदा तु चोदनाशब्दो विधावेव व्यवस्थितः ॥ ११६ ॥
तदोभयादिको ग्रन्थः साध्यसाधनसंश्रितः ।
'साध्यसाधनसम्बन्धे विधिना प्रतिपादिते ॥ २२० ॥
लक्ष्यमाणत्वमुभयो' र्द्विविधं च फलं क्रतोः ।
'स्व[1]र्गादि प्राप्यते तत्र प्रतिषेधाऽनतिक्रमात् ॥ २२१ ॥
अतिक्रमेण हिंसादि' शास्त्रान्तर[2]निरीक्षया ।
फलांशे भावनायाश्च प्रत्ययो न विधायकः ॥ २२२ ॥
वक्ष्यते जैमिनिश्चाह 'तस्य लिप्सार्थलक्षणा' ।
तेन सामान्यतः प्राप्तो विधिना[3]न निवारितः ॥ २२३ ॥

कथमेभिर्भाष्यैरिदं विस्पष्टीकृतमित्याह श्येनादीनामिति ॥ २१८ ॥

कथमुत्तरेषां "हिंसाहि" इत्यादिग्रन्थानामसंगतिरित्याह विहितत्वादिति । निषेधग्रहणमुपलक्षणं विहिते श्येनादिस्वरूपेऽनर्थत्वेन प्रतिज्ञाते निषिद्धत्वाऽनुपपत्तिः, यागस्वरूपे हिंसात्वानुपपत्तिः । नाभिचरितव्यमिति वाऽभिचारस्य श्येनफलस्याऽविधेयत्वेन निषेधविषयत्वं समर्थयता फलमेव पूर्वमनर्थत्वेनोदाहृतमिति दर्शयति । श्येनादिस्वरूपे तदपि न संगच्छेतेति ।

तदेवं निषेधस्यापि विधिवच्चोदनात्वादुभयं चोदनालक्षणमिति भाष्यं विधेयनिषेध्याभिप्रायं व्याख्यातम् । अस्तु वा विधिरेव चोदना तथापि शक्यमेव कथं चिद्भाष्यं नेतुमित्याह यदेति । ननु साध्यस्याऽविधेयत्वात्कथं चोदनालक्षणत्वमत आह साध्येति पादत्रयेण । यथैव हि साधनसाधनं साधनरूपेण चोदनालक्षणं तथैव फलमपि स्वार्गादि साध्यरूपेण चोदनालक्षणमेवेति । अर्थोऽनर्थ इत्येतत्तु फलद्वैविध्याभिप्रायमित्याह द्विविधमिति । कथं द्विविधमित्याह स्वर्गादीति पादत्रयेण । स्वर्गादिरनिषिद्धत्वादर्थो हिंसादिस्तु निषिद्धत्वादनर्थं इति । कथं निषेधोऽत आह शास्त्रान्तरेति । न हिंस्यादिति शास्त्रान्तरेण निषिद्धत्वादिति । ननु चाऽभिचारविधिना विहिता हिंसा कथं निषिध्येताऽत आह फलांशे इति । वक्ष्यति हि फलस्याऽविधेयत्व 'मुद्देशाच्च फलत्वेने' त्यत्र श्लोके । तथा भाष्यकारोऽपि जानात्येवासौ मयैतत्कर्त्तव्यम् उपायं तु न वेदे' ति । जैमिनिश्च 'तस्य लिप्सार्थलक्षणे' ति । यत एवाविधेयं फलमत एव सामान्यतः प्राप्तो निषेधः फलांशेऽभिचारविधिना न वार्यत इत्याह तेनेति ॥ २१९-२२३ ॥

---

१. 'स्वर्गोहि' —ग २. 'विवक्षया'—ग ३. 'च निवारितः'—ख

फलांशोपनिपातिन्या हिंसायाः प्रतिषेधकः ।
अनर्थप्रतिहेतुत्वं बोध्यते तत्र, यद्यपि ॥ २२४ ॥

श्येनस्वरूपं नाऽनर्थस्तत्फलस्य त्वनर्थता ।
परस्तूभयमित्यादेः फलस्यापि विधेयताम् ॥ २२५ ॥

[1]भावनान्तर्गतत्वाद्वा मत्वाऽनर्थत्वमाक्षिपत्[2] ।
नैवेत्येतावता चास्य विधेयत्वनिराक्रिया ॥ २२६ ॥

किं विधेयमिदानीं स्यादाह श्येनादयस्त्विति ।
'प्रश्नापाकरणे चात्र तव्यो विधिविवक्षया ॥ २२७ ॥

प्रयुक्तो न तु साध्येऽर्थे' द्वयेऽप्यनुपयोगतः ।

एवमभिचारविधिगोचरे प्रविशन्नपि निषेधो न श्येनस्वरूपस्याऽनर्थत्वं बोधयति, किं तु तत्फलस्यैवेत्याह अनर्थेति । भाष्यं चैवं योजनीयम्, उभयं चोदनया लक्ष्यते साध्यं साधनं च । साध्यमपि द्विविधमर्थोऽनर्थश्च । कोऽर्थ इत्यत्राऽर्थशब्दः साधनलक्षणार्थः । अर्थात्मकस्य फलस्य साधकमित्यर्थः । यो ज्योतिष्टोमादिः । कोऽनर्थ इति फलस्वरूपाभिप्रायमेव । यः श्येनादिः फलमित्यर्थः । तत्राऽनर्थस्य हिंसादेर्धर्मत्वव्यावर्त्तनेन ज्योतिष्टोमादेर्धर्मत्वं वक्तुमर्थग्रहणमिति । एवं चार्थात्मक-फलसाधनस्य धर्मत्वमनर्थस्य च हिंसादेरधर्मत्वमुक्तम् । अनर्थात्मकफलसाधनस्य श्येनादेरुभयं नोक्तम् । अतोऽसौ न धर्मो नापि स्वरूपेणाऽधर्म इति सिद्धं भवति । तथा च वक्ष्यति 'अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मता' इति । 'कथं पुनरनर्थः कर्तव्यतयोपदिश्यत' इति चोद्यमयुक्तं फलं ह्यनर्थत्वेनोदाहृतं तच्चाऽविधेयत्वान्नैव कर्त्तव्यतयोपदिश्यतेऽत आह पर इति । फलस्याऽविधेयत्वमजानन्नुभयमित्यादिना फलस्यापि चोदनालक्षत्वाभिधानात् भावनांशत्वाद्वा तद्विधाने इतरांशवत्फलस्यापि विधेयत्वानर्थत्वत्वमाक्षिपदिति ।

'नैव श्येनादयः कर्त्तव्या' इति परिहारभाष्यमनुपपन्नम्, फलस्य विधेयत्वे चोदिते श्येनस्य निवारणमसंगतमयुक्तं च श्येनस्य विधेयत्वाभिधानात्, अतो भित्वा व्याचष्टे नैवेति । अस्याऽनर्थस्य विधेयत्वनिराक्रिया, नैवानर्थः कर्त्तव्य-तयोपदिश्यत इति भाष्यार्थः ॥ २२४–२२६ ॥

किं तर्हि विधेयमित्यत उत्तरं श्येनादय इति भाष्यमित्याह किमिति । यश्चायं तव्यप्रत्ययः प्रश्नग्रन्थे पठितः परिहारग्रन्थे चाऽनुषक्तः स विधेयत्वाभिप्रायो न साध्यत्वाभिप्राय इत्याह प्रश्नेति पादत्रयेण । प्रश्नश्चापाकरणं च प्रश्नापा-करणं समाहारद्वन्द्व इति । कथं न साध्यार्थ इत्यत आह द्वयेऽपीति । अनर्थत्वाक्षेपो

१. 'भावनान्तं मतत्वाद्वा'—ख २. 'माक्षिपेत्'—ख

अनर्थस्यापि साध्यत्वमविधेयस्य हीष्यते ॥ २२८ ॥

साध्यत्वरहिते चेष्टा विधेये नित्यमर्थता ।
शतुश्च लक्षणार्थत्वं तेषां चाप्युपदेशनम् ॥ २२९ ॥

ब्रुवन् स्फुटीकरोतीष्टमुपदेशो हि नान्यथा ।
विधित्वमादिशब्दात्स्यादितिकर्तव्यतास्वपि ॥ २३० ॥

तस्मात्फलांशे या हिंसा वैदिकी सा निषिध्यते ।
[1]अंशद्वये तु या नाम तन्निषेधाभिधायिनाम् ॥ २३१ ॥

अविशेषेण यच्छास्त्रं शिरोवदिति चोत्तरम् ।
निषेधेनाऽनवष्टब्धे विषये न ह्यनर्थता ॥ २३२ ॥

प्रत्यक्षादेरशक्यत्वात्कल्प्यते निष्प्रमाणिका[2] ।

हि चोद्यम्, तत्समर्थनं च परिहारः। न चोभयत्रापि यथाक्रमं साध्यत्वं तन्निराकरणं चोपयुज्यत इति। कथं नोपयुज्यतेऽत आह **अनर्थस्यापीति**। सुरापानादेरनर्थस्यापि साध्यत्वदर्शनान्न साध्यत्वमनर्थत्वाक्षेपायोपयुज्यते चोद्यवादिनो, विधेयत्वमेव त्वनर्थविरोधित्वादुपयुज्यते। एवमसाध्यस्यापि गोदोहनादेर्विधेयस्याऽर्थत्वदर्शनाद्विधेयत्वनिराकरणमेवाऽनर्थत्वं समर्थयमानस्य परिहारवादिन उपयुज्यते न साध्यत्वनिराकरणमिति ॥ २२७–२२८ ॥

यच्चेदं नैवेत्येतावताऽनर्थस्य विधानं निराक्रियत इत्युक्तं तद् भाष्यकारेणैव स्फुटीकृतमित्याह **शतुरिति**। 'श्येनेनाऽभिचरन्यजेतेति हि समामनन्ति' इति लक्षणे शतुर्वृत्तिं दर्शयंल्लक्षणस्य प्रसिद्धत्वादविधेयत्वमभिचारस्य दर्शयति। तथा 'तेषामुपदेश इति श्येनादीनामुपदेश्यत्वं दर्शयति। तेन फलस्यैव पूर्वग्रन्थे विधेयत्वं निराकर्तुमिष्टं न श्येनादीनामिति स्फुटयति। न ह्यविधेयानामुपदेशोपपत्तिः, विध्युपदेशशब्दयोः पर्यायत्वादिति। श्येनादय त्यादिशब्दार्थमाह **विधित्वमिति**। विधिशक्तिरित्यर्थः। तेनांशद्वयगतैव हिंसा निषेधस्याऽविषयः ॥ २२९–२३० ॥

फलांशस्य त्वविधेयत्वान्निषेधगोचरोऽनर्थ एवेत्युपपन्नं प्रत्युदाहरणमित्युपसंहरति **तस्मादिति**। केचित्तु साधनेतिकर्त्तव्यतांशस्थाऽपि हिंसा निषिध्यतेऽतोऽनर्थ इति मन्यन्ते तान्निराकरोति **अंशद्वये इति**। 'अविशेषेण यच्छास्त्र' मित्यत्र 'वचनाद्वा' शिरोवत्' इत्यत्र च सामान्यस्याहवनीयविधेः शवस्पर्शनिषेधस्य च

---

1. 'अंशद्वयेऽपि या हिंसा'—ख
2. 'निष्प्रमाणता'—ग

न हि हिंसाद्यनुष्ठाने तदानीं दोषदर्शनम् ॥ २३३ ॥

बाह्येऽपि विचिकित्सा तु शास्त्रादेवोपजायते ।
'हिंस्यमानस्य [1]दुःखित्वं दृश्यते यत्र तावता ॥ २३४ ॥
कर्तुर्दुःखानुमानं स्या' त्तदानीं [2]तद्विपर्ययः ।
[3]विषयेऽस्याः फलं यादृक् प्रेत्य कर्तुस्तथाविधम् ॥ २३५ ॥
हिंसा क्रियाविशेषत्वात्सूते शास्त्रोक्तदानवत् ।
य एवमाह तस्यापि गुरुस्त्रीगमनादिभिः ॥ २३६ ॥
सुरापानादिभिश्चापि विपक्षैर्व्यभिचारिता ।
विरुद्धता च यादृग्घि दानैस्तादृक् फलं भवेत् ॥ २३७ ॥

विशेषेण वर्त्महोमविधिना पुरुषशीर्षोपधानविधिना च बाधा वक्ष्यते, तद्बुद्धिसानिषेधोऽपि सामान्यरूपत्वादग्नीषोमीयादिक्रत्वर्थहिंसाविधिना श्येनेनाऽभिचरन्यजेतेति पुरुषार्थहिंसाविधिना च बाध्यते । अथाऽसत्यपि निषेधे किमित्यनर्थोऽग्नीषोमीयहिंसा न भवतीत्यत आह निषेधेनेति । निषेध एव ह्यनर्थत्वे प्रमाणं प्रत्यक्षादीनामशक्तत्वादतोऽप्रतिषिद्धे निष्प्रामाणिकाऽनर्थता कल्प्येतेति । प्रत्यक्षाद्यशक्तिं तावद्दर्शयति न हीति ॥ २३१-२३३ ॥

नन्वसत्यपि दोषदर्शने बाह्यहिंसावद्विचिकित्सा जायतेऽत आह बाह्येऽपीति । तच्च शास्त्रमिह नास्तीति न तन्निबन्धना विचिकित्सेति । अथाऽनुमानेन कर्त्तुर्दुःखं भविष्यतीत्यनुमीयते हिंस्यमानस्य तदात्वे दुःखदर्शनादत आह हिंस्यमानेति पादत्रयेण । व्याप्त्यभावादित्यर्थः । प्रत्युत कर्त्तुस्तदात्वे सुखदर्शनात्कालान्तरे तदेवाऽनुमीयतइत्याह तदानीमिति ।

पूर्वशङ्कितमनुमानं दर्शयति विषय इति । हिंसेति धर्मिनिर्देशः । अस्या हिंसाया विषये हिंस्यमाने यादृक् फलं दुःखं तादृगेव कालान्तरे कर्त्तुः प्रसूत इति प्रतिज्ञा क्रियाविशेषत्वाच्छास्त्रोक्तदानवत् । तद्धि स्वविषये सम्प्रदाने यादृक् फलं सुखं तादृगेव कर्त्तुः प्रसूत इति । तद् दूषयति य एवमिति । दूषणान्तरमाह विरुद्धतेति । कथमित्याह यादृगिति । ॥ २३४-२३७ ॥

---

१. 'दुःखत्वं'—ग
२. 'तु विपर्ययात्'—ख
३. 'विषयोऽस्याः'—ग

विधिगम्यफलावाप्तिरदुःखात्मकता तथा ।
न च या सम्प्रदानस्य प्रीतिस्तादृक् फलं श्रुतम् ॥ २३८ ॥
[1]दातुस्तेन हि दृष्टान्तः साध्यहीनः प्रतीयते ।
'सम्प्रदानं च दाने ते विषयः कर्म हिंसने ॥ २३९ ॥
वैषम्यं' सम्प्रदाने तु [2]पक्षस्त्वेतद्विरुद्धता ।
प्रीयते सम्प्रदानं हि देवतेति [3]मतं तव ॥ २४० ॥
दृष्टान्ते कर्म [4]दानं चेत्, तस्य कीदृक् फलं भवेत् ।
जपहोमादिदृष्टान्तात्परपीडादिवर्जनात् ॥ २४१ ॥
चोदितत्वस्य हेतुत्वाद्विरुद्धाऽव्यभिचारिता ।
विहितप्रतिषिद्धत्वे [5]मुक्त्वाऽन्यन्न[6] च कारणम् ॥ २४२ ॥

तादृक्त्वमेव दर्शयति विधिगम्येति । तथापि कथं विरोध इत्याह अदुःखेति । तथा सति विधिगम्यफलत्वे सत्यदुःखात्मकता फलस्य स्यात्, ततश्च दुःखविपरीत-सुखसाधनत्वाद्विरुद्धतेति । दृष्टान्तश्च साध्यविकल इत्याह न चेति । सम्प्रदानस्य स्वल्पं सुखं कर्त्तुस्तु महत्, समद्विगुणसहस्रानन्तानि फलानीति स्मृतेरिति । किं च सपक्षे येनैव हेतोर्व्याप्तिस्तदेव पक्षे ऽपि साधयितव्यम्, इह च सम्प्रदानतुल्यफलत्वं सपक्षे कर्मकारकतुल्यफलत्वं तु पक्षे विषयशब्दमात्रं त्वेकमर्थस्तु विषय एवेति नानु-मानोपपत्तिरित्याह सम्प्रदानमिति वैषम्यमन्तेन । यदि तु सपक्षवत्पक्षे ऽपि सम्प्रदानतुल्यफलत्वमेव साध्यते ततो विरुद्धता हेतोरित्याह सम्प्रदान इति । कथमित्याह प्रीयते इति ॥ २३८-२४० ॥

ततश्च दुःखफलत्वसाधनाय प्रयुक्तो हेतुः सुखफलत्वसाधनाद्विरुद्धः स्यादिति शङ्कते दृष्टान्ते इति । उभयत्र कर्मवचनत्वान्न वैषम्यमिति । दूषयति तस्येति । न हि हिरण्यादेर्देयस्य किंचिदपि फलमस्तीति । दूषणान्तरमाह जपेति । अग्नी-षोमीयहिंसा सुखकरी चोदितत्वाज्जपादिवत् ।

किं चायमेकविषययोर्धर्माधर्मयोरनुमानोपन्यासो न युक्त इत्याह विहितेति । किं च विषयानुरूपफलदायिवादिना परस्यात्मनो वा पीडाऽनुग्रहनिबन्धनं धर्माऽधर्म-त्वमाश्रितम्, ततश्च जपे सुरापाने च परोपकाराऽपकाराऽभावाद्धर्माऽधर्मत्वे न स्यातामित्याह अनुग्रहादिति ।

---

१. 'दावस्तुतेनेहदृष्टौ'—ग २. 'पक्षस्थे'—ख
३. 'स्थितं'—ख ४. 'दाने'—ख
५. 'त्यक्त्वा'—ख ६. 'नैव'—ख

धर्माऽधर्मावबोधस्य तेनायुक्ताऽनुमानगीः ।
अनुग्रहाच्च[1] धर्मत्वं पीडातश्चाप्यधर्मता[2] ॥ २४३ ॥

वदतो [3]जपसीध्वादिपानादौ नोभयं भवेत् ।
क्रोशता हृदयेनापि गुरुदाराभिगामिनाम् ॥ २४४ ॥

[4]भूयान् धर्मः प्रसज्येत भूयसी ह्युपकारिता ।
अनुमानप्रधानस्य प्रतिषेधाऽनपेक्षिणः ॥ २४५ ॥

गुरुदाराऽभिगमश्च धर्मः स्यादित्याह **क्रोशतेति** । यद्यपि गुरुदाराऽभिगामी हृदयक्रोशमल्पमात्मनोऽपकारं करोति तथाऽप्युपकारभूयस्त्वाद्धर्म एव भूयान् स्यात् । किं चाऽनुमानप्रधानस्य भवतो मते हृदयक्रोशनमपि निर्निबन्धनमेव दृष्टपीडाऽभावा-त्तन्निबन्धनत्वाच्च क्रोशनस्येत्याह **अनुमानेति** । यदि हृदयक्रोशरूपात्मपीडावशा-देवाऽधर्मत्वमधर्मत्वाच्च हृदयक्रोशोपपत्तिरित्युच्यते, तत इतरेतराश्रयमित्याह **पीडात इति** । म्लेच्छादीनां च हृदयक्रोशाऽभावान्नाऽधर्मयोगः स्यादित्याह **एवमादाविति** उपसंहरति **तस्मादिति** ।

केचित्तु निषेधप्रामाण्यादेव विहितानामपि हिंसानामधर्मत्वमिच्छन्ति तन्मतमुपन्यस्यति **क्वचिदिति** त्रयेण । एकैव हिंसा तस्याश्च क्वचिद् ब्राह्मणादि-विषये प्रत्यवायनिमित्तत्वशक्तिर्निषेधेन बोधिता सा पुनर्विधानादपि नापगच्छति । न हि शास्त्रं शक्तीनामावापोद्वापौ करोति विद्यमानशक्तिकथनमात्रे व्यापारात्, अतः शास्त्रानुसारादेवाऽग्नीषोमीयहिंसाया अधर्मत्वं नानुमानत इति । आदिग्रहण-मुपधानान्तरमित्याद्यभिप्रायम् । तदिदमतिप्रसङ्गापादनेन दूषयति **एवमिति** द्वयेन ।

उपसंहरति **तस्मादिति** । यादृशस्य यद्विशेषणविशिष्टस्य यत्फलं तादृशस्यैव तत्फलं न स्वरूपैक्यात्फलसङ्कर इति ।

---

१. 'च्चा'—ख

२. 'धर्मताम्'—ख

३. 'जपशी'—ख

४. 'भूयोऽर्थत्वम्'—ख

हृदयक्रोशनं कस्माद् दृष्टां पीडामपश्यतः।
पीडातश्चाप्यधर्मत्वं तथा पीडामधर्मतः ॥ २४६ ।
अन्योन्याश्रयमाप्नोति विना शास्त्रेण साधयन्।
एवमादावशास्त्रज्ञो म्लेच्छो नोद्विजते क्वचित् ॥ २४७ ॥
तस्य नाऽधर्मयोगः स्यात्पूर्वोक्ता यदि कल्पना।
तस्मादनुग्रहं पीडां तदभावमपास्य च ॥ २४८ ॥
धर्माऽधर्मार्थिभिर्नित्यं मृग्यौ विधिनिषेधकौ।
'क्वचिदस्या निषिद्धत्वाच्छक्तिः शास्त्रेण बोधिता ॥ २४९ ॥
प्रत्यवायनिमित्तत्वे[1] विधिना[2] नापगच्छति।
शास्त्रेण न हि शक्तीनामावापोद्वापनक्रियाः ॥ २५० ॥
विद्यमाना हि कथ्यन्ते शक्तयो द्रव्यकर्मणाम्।
तदेव चेदं कर्मेति शास्त्रमेवाऽनुधावता ॥ २५१ ॥
हिंसादीनामधर्मत्वं [3]कथ्यते नाऽनुमानतः'।
'एवं ये निपुणं प्राहुस्तैरप्येतत्परीक्ष्यताम् ॥ २५२ ॥
सुरापानादिभिः शूद्रः किं याति नरकं कृतैः।
वैश्यस्तोमेन वा किं स्याद्विप्रराजन्ययोः फलम् ॥ २५३ ॥
पञ्चम्यामिष्टकरणान्मध्यान्हे चाऽग्निहोत्रतः'।
तस्माद्यद्यादृशं कर्म यत्फलोत्पत्तिशक्तिकम् ॥ २५४ ॥
शास्त्रेण गम्यते तस्य तादृशस्यैव तत् फलम्।
'हिंसा चांशद्वयादन्या या तस्याः प्रतिषेधजम् ॥ २५५ ॥

ननु वैश्यस्तोमादेर्वैश्यादिविशिष्टस्य फलसाधनत्वावगमादन्यादृशस्य मा भूत्फलम्, न हिंस्यादिति तु हिंसामात्रस्याऽनर्थफलत्वं ज्ञातं न हिंसाविशेषस्य, तत्स्वरूपं चाऽग्नीषोमीयादावप्यस्तीत्यत आह हिंसेति पादत्रयेण। कथमित्यत आह विधिनेति। अन्यत्रांशद्वये विधिना वार्यते तेन तत उत्कालितो न हिंस्यादिति सामान्यनिषेधो हिंसान्तराण्यवलम्बत इति तेषामेवानर्थत्वमवगतं न हिंसामात्रस्येति। यत्तु ज्ञापकं शास्त्रं न कारकमित्युक्तं तदनुज्ञायत एव। तदेतद्व्यवस्थितविषयं नैकविधमित्याह ज्ञानमेवेति। दृष्टा च लोकेऽप्यभिन्नरूपस्यैव कर्मणः शक्तिभेदेन व्यवस्थेत्याह व्यवस्था इति। अथ तत्र भोजनस्यैकत्वेऽपि उपाधिकृतभेदादेव शक्तिव्यवस्था तथा हिंसाया अपि अङ्गाऽनङ्गत्वकृतभेदाश्रयणात्तुल्येत्याह रूपाऽभेदे इति ॥ २४१–२५८ ॥

---

१. 'निमित्तत्वं'—ख २. 'विधानाज्ञा'—ख ३. 'कल्प्यते'—ख

प्रत्यवायार्थताज्ञानं[1] विधिनाऽन्यत्र वार्यते ।
ज्ञानमेव[2] च शक्तीनां नावापोद्वापनक्रियाः ॥ २५६ ॥

[3]ज्ञायन्ते शास्त्रतस्तास्तु [4]क्रियाभेदव्यवस्थिताः ।
व्यवस्थाः शक्तिभेदानां दृष्टार्थेष्वपि कर्मसु ॥ २५७ ॥

अभिन्नत्वेऽपि दृश्यन्ते भुजेः स्वस्थातुरे[5]ष्वपि ।
रूपाऽभेदेऽपि हिंसादेर्भेदोऽङ्गाऽनङ्ग[6]कारितः ॥ २५८ ॥

तथाप्येकफलत्वं चेत् क्रियात्वात्सर्वसंकरः ।
यजित्वाद्यविशेषाच्च चित्रादिफलतुल्यता ॥ २५९ ॥

भेदात्तत्र व्यवस्था चेदिहाप्येवं भविष्यति ।
विधीनां [7]वापि सर्वेषां साक्षाद् व्यवहितोऽपिवा ॥ २६० ॥

पुरुषार्थः फलं तेन [8]नाऽनर्थोऽतः प्रतीयते ।
न चैषु श्रूयते ऽनर्थो [9]निषेधान्न च कल्प्यते ॥ २६१ ॥

तथा सत्यपि चेदेकफलत्वं हिंसायाः ततः क्रियात्वेनैकत्वात्सर्वासामश्वमेध-ब्रह्महत्यादिक्रियाणां फलसंकरः स्यादित्याह **तथापीति**। यदि तु न क्रियात्वे-नैकत्वं किन्त्ववान्तररूपैकत्वमेवैकफलत्वे हेतुरित्युच्यते, तथापि यजित्वाऽविशेषा-च्चित्रासौर्यादीनां तुल्यफलत्वं स्यादित्याह **यजित्वेति** ॥ २५९ ॥

अथ तत्र यागव्यक्तिभेदाद्व्यवस्था हिंसायामपि तुल्येत्याह **भेदादिति**। ननु विहिताऽपि हिंसा किं नाऽनर्थो भवत्यत आह **विधीनामिति**। दर्शादीनां साक्षात्प्रयाजादीनां व्यवहितः, तेन विधिरेनाऽनर्थत्वपरिपन्थीति। प्रमाणाभावादपि नानर्थत्वमित्याह **न चैष्विति**। न च निषेधवशादपि कल्पयितुं शक्यते तदभावस्य दर्शितत्वादित्याह **निषेधादिति** ॥ २६०–२६१ ॥

---

१. 'बाध्यते'—ग
२. 'तु'—ख
३. 'क्रियन्ते'—ख
४. 'क्रियाभेदे'—ख
५. 'ष्विव'—ख
६. 'हेतुकः'—ख
७. 'चापि'—ख
८. 'नानर्थोऽपि'—ख
९. निषेध्यान्न'—ग

न च प्रकरणस्थत्वात्पुरुषार्थः फलं भवेत् ।
कर्मोपकारः [1]कल्प्यस्तु दृष्टो[2]ऽदृष्टोऽथ वा पुनः ॥ २६२ ॥

कल्पनावसरस्तत्र [3]नाऽनर्थस्याऽनपेक्षणात् ।
क्रत्वर्थश्चापि संस्कारः पशोर्नाऽऽराद्युपक्रिया ॥ २६३ ॥

दृष्टैव त्ववदानानां निष्पत्तिः क्रत्वपेक्षिता ।
अभिचारेऽप्युपायस्था हिंसा नाऽधर्म [4]उच्यते ॥ २६४ ॥

तस्मादनङ्गभूतायां हिंसायामेतदुच्यते ।
उद्देशाच्च फलत्वेन श्येनादौ न विधीयते ॥ २६५ ॥

किं च पुरुषार्थपरत्वे सत्यनर्थोऽपि कल्प्यत इति शङ्क्येत, न च तदस्ति प्रकरणस्थत्वादित्याह न चेति । किं नाम तर्हि प्रकरणस्य फलमत आह कर्मोपकार इति ॥ २६२ ॥

क्रतावेवोपकारकल्पनाऽवसरोऽनर्थस्य त्वनपेक्षितस्याऽवसर एव नास्तीत्याह कल्पनेति । क्रत्वर्थोऽप्यसौ संस्कारो नाऽऽराद्युपकारक इत्याह क्रत्वर्थ इति ॥ २६३ ॥

संस्कारोऽपि हृदयाद्यवदाननिष्पत्त्या दृष्टार्थो न प्रोक्षणादिवददृष्टार्थ इत्याह दृष्टेति । तदेवं निषेध्यत्वमङ्गीकुर्वताऽर्थफलस्याऽनर्थफलत्वं, क्रत्वर्थस्य पुरुषार्थत्वं, संस्कारस्याऽर्थकर्मत्वं, दृष्टार्थस्याऽदृष्टार्थत्वमिति चतुष्टयं प्रमाणविपरीतं कल्पितमिति । एवं चाऽभिचारार्थे श्येनादावप्यङ्गभूता हिंसा नाऽधर्मः, किं त्वनङ्गभूतायां फलांशस्थायामेवाऽधर्मत्वमिति तल्लक्षणार्थमेव श्येनादिग्रहणं नाऽङ्गहिंसालक्षणार्थमित्याह अभिचार इति ।

यत्तु फलांशस्यापि चोदनालक्षणत्वाद्भावनान्तर्गतत्वाद्वा विधेयैवेत्युक्तं तत्राह उद्देशादिति । श्येनादौ हि विधीयमाने फलत्वेनोद्दिश्यते हिंसा, न तु सैव विधीयते, तावदेव च तस्याश्चोदनालक्षणत्वम् तया हिंसा श्येनसाध्यतया लक्ष्यते । न चैतावता विधेयत्वम् । न हि यद्विधिप्रमेयं तद्विधेयमिति विधेयलक्षणम्, किं तर्हि यत्राऽप्रवृत्तः पुरुषो विधिवशात्प्रवर्तते तद्विधेयम् । न च फलस्य तदस्ति, विधितः

---

१. 'कर्मोपकारकल्प्यस्तु'—ग
२. 'ऽदृष्टोऽपि'—ख
३. 'नामार्थस्या'—ग
४. 'इष्यते'—ख

ननु अशक्तमिदं सूत्रम् इमौ अर्थौ अभिवदितुम्, । 'चदनालक्षणो धर्मो; नेन्द्रियादिलक्षण:',' अर्थश्च धर्मो नाऽनर्थ' इति । एकं हीदं वाक्यम्, तदेवं सति भिद्यत । उच्यते—यत्र वाक्यादर्थोऽवगम्यते तत्रैवम् । तत्तु वैदिकेषु, न सूत्रेषु ।

भावनाविधिरप्येव[1] फलांशाद्विनिवर्तते ।
अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मता ॥ २६६ ॥

फलाऽनर्थानुबन्धित्वात्तद्द्वारेणोपचर्यते ।
निराकाङ्क्षस्य चैकेन श्येनस्य न फलद्वयम् ॥ २६७ ॥

तस्मात् क्रियान्तरादेर्वा[2] हिंसातोऽनर्थ[3] उच्यते ।
फलतोऽपि च यत्कर्म नाऽनर्थेनाऽनुबध्यते ॥ २६८ ॥

केवलप्रीतिहेतुत्वात्तद्धर्मत्वेन [4]हीष्यते ।
ननु चेष्टाभ्युपायत्वात् श्येनादेर्धर्मता भवेत् ॥ २६९ ॥

प्रागेव तत्र रागतः प्रवृत्तेरित्यविधेयत्वम् । तथा भावनाविधिरप्यर्थाद्विषयेष्ववतरन्नन्यतः प्राप्तात्फलांशाद्विनिवृत्तः साधनेतिकर्त्तव्यतांशयोरेवाऽवतरतीति तयोरेव विधेयत्वं न फलस्येति । यत एवं फलस्याऽनर्थत्वमतस्तद्द्वारेणाऽनर्थत्वात् श्येनस्य न धर्मत्वं नाप्यधर्मत्वं स्वरूपेणाऽनर्थत्वाभावात् फलस्याऽनर्थानुबन्धित्वात्तद्द्वारेण श्येनोऽप्यधर्म इत्युपचर्यतइत्याह अत इति । नन्वनर्थानुबन्धित्वं चेच्छ्येनस्योच्यते साक्षादेव तदुच्यतां किमुपचाराश्रयणेनाऽत आह निराकाङ्क्षस्येति । विहितस्य तावन्न प्रत्यवायफलत्वं युक्तम्, अभिचारेणैव श्रुतेन निराकाङ्क्षत्वादपि नानर्थकल्पनम्, तस्माच्छ्येनसाध्याद्धिंसाख्यात् क्रियान्तरादेवाऽनर्थो न श्येनस्वरूपादिति । मा भूदधर्मत्वं, धर्मस्तर्हि किं न भवत्यत आह फलत इति । तादृश्येव धर्मत्वप्रसिद्धेरिति चोदयति नन्विति ॥ २६४-२६९ ॥

---

१. 'रप्येष'– ख
२. 'देवं'—ख
३ 'ऽधर्मं'—ख
४. 'गीयते'–ख

फलं तावदधर्मोऽस्य श्येनादेः सम्प्रधार्यते।
'यदि येनेष्टसिद्धिः [1]स्यादनुष्ठानाऽनुबन्धिनी ॥ २७० ॥

तस्य धर्मत्वमुच्येत ततः श्येनादिवर्जनम्।
यदा तु चोदनागम्यः कार्याऽकार्याऽनपेक्षया ॥ २७१ ॥

धर्मः प्रीतिनिमित्तं स्यात्तदा श्येनेऽपि धर्मता।
यदि त्वप्रीतिहेतुर्यः साक्षाद् व्यवहितोऽपि वा ॥ २७२ ॥

[2]सोऽधर्मश्चोदनार्थः स्यात्तदा श्येनेऽप्यधर्मता'।
[3]यस्तु हिंसात्वसाधर्म्याद् बाध्यव[4]च्चोदनास्वपि ॥ २७३ ॥

[5]वदेदनर्थहेतुत्वं [6]तस्याप्यागमबाधनम्।
तमनादृत्य यो ब्रूया[7]द्यागादेरप्यसौ वदेत् ॥ २७४ ॥

स्वर्गादिसाधनाशक्तिं क्रियात्वाद् भोजनादिवत्।
गीतामन्त्रार्थवादैर्या कल्प्यतेऽनर्थहेतुता ॥ २७५ ॥

परिहरति फलमिति। श्येनः समीहितस्य शत्रुवधस्य साधनं, सोऽपि प्रत्यवायस्येत्येषा तावदर्थस्थितिः। धर्मशब्दार्थत्वं तु श्येनादेः कीदृशमिति लोकाऽनुसारेण सम्प्रधार्यं निर्णेतव्यं नात्राभिनिवेश इति। सम्प्रधारणमेव दर्शयति यदीति त्रयेण। कार्याऽकार्येति। यत्केवलाऽभ्युदयनिमित्तं तत्कार्यमितरच्चाऽकार्यमिति।

पुनरपि चोदितहिंसामेवोपक्रम्याऽधर्मत्वेऽनुमानमुपन्यस्य दूषयति यस्त्विति। आगमाऽनादरे चातिप्रसङ्ग इत्याह तमिति।

ननु विहिताऽपि हिंसाऽनर्थहेतुरिति मन्त्रार्थवादेतिहासपुराणेभ्योऽवगम्यते। तथा हि भगवद्गीतासु—

श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप।
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः॥

इति हिंसायोगादेव विधियज्ञस्य निन्दा। तथा मन्त्रवर्णोऽपि 'यत्पशुर्मायुमकृतोरो वा पद्भिराहते, अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस' इति सञ्ज्ञपनादेनो दर्शयति। तथाऽन्यान्यपि वचनानि, अत आह गीतेति। प्रत्यक्षया श्रुत्या हिंसाया विहितत्वात्तद्विरुद्धत्वादेषामर्थवादमात्रत्वमिति ॥ २७५ ॥

---

१. 'स्यादनिष्टाननु'—ख २. तस्याधर्मत्वमुच्येत'—ख ३. 'ये तु'—ख
४. 'च्चोदिता'—ख ५. 'वदन्त्य'—ख
६. 'तेषामागम'—ख ७. 'द्यागादाव'—ख

नन्वशक्तमिदं सूत्रमिमावर्थावभिधातुम्, चोदनालक्षणो धर्मो नेन्द्रियादि लक्षण:, अर्थश्च धर्मोनाऽनर्थं इति। एकं हीदं वाक्यम्, तदेव सति भिद्यते। उच्यते—यत्र वाक्यादर्थोऽवगम्यते तत्रैवम्। तत्तु वैदिकेषु न सूत्रेषु।

प्रत्यक्षश्रुतिबाध्यत्वात्साऽन्यार्थत्वेन [1]नीयते।
शिष्यान्प्रत्यविशिष्टत्वात्सूत्रवैदिकवाक्ययोः ॥ २७६ ॥
अशक्तेश्चोभयोः साम्यान्न सूत्रेष्वित्यनुत्तरम्।
प्रागुक्तपरिसंख्यायाः फलमेतत्प्रकाश्यते ॥ २७७ ॥
सूत्रेषु ह्यनया युक्त्या गतिरेषापि युज्यते।
तस्मादावर्तते सूत्रं तन्त्रं वा शक्तिभेदतः ॥ २७८ ॥

अत्र भाष्यकारेण "नन्वशक्तमिदं सूत्र" मित्यर्थद्वयविधौ वाक्यभेदादशक्तिमाशङ्क्य "तत्तु वैदिकेषु न सूत्रेष्विति" परिहृतं, तदाक्षिपति शिष्यानिति। एकस्य वाक्यस्याऽनेकार्थविधावशक्तिस्तावद्वेदसूत्रयोस्तुल्या। यदि परं सूत्राणां प्रमाणान्तरावगतार्थत्वात्तद्वशेन वाक्यभेदादिनापि व्याख्यानं न दुष्यतीत्युच्यते तदपि न युक्तम्, सूत्राणामपि शिष्यान्प्रत्यनवगतार्थत्वादिति। समाधत्ते प्रागिति। सत्यम्, शिष्यान्प्रत्यविशेष: व्याख्यातृभिस्त्ववगतार्थैरनया युक्त्या प्रमाणान्तरावगतार्थतया वाक्यभेदगतिरपि कथं चिद्युज्यते कर्त्तुम्, दर्शिता हि परिसंख्या सति सम्भवे वाक्यभेदादिदोषाणां वर्जनं नास्तीति तत्फलं प्रकाशितमिति। यत एवमत: सकलमेव सूत्रमर्थद्वयप्रतिपादनाय द्विरावर्त्तनीयमित्याह तस्मादिति। अत्रैकं सूत्रं चोदनालक्षणो धर्म इत्येवम्परम्, इतरदर्थो धर्म इत्येवम्परम्। पूर्वत्राऽर्थग्रहणमुत्तरसूत्रसिद्धत्वादनुवाद:। उत्तरत्र चोदनालक्षणशब्द: पूर्वसिद्धत्वादनुवाद:। प्रकारान्तरमाह तन्त्रमिति। धर्मपदं तन्त्रोच्चरितमितराभ्यां प्रत्येकमभिसम्बध्यते, विध्यनुवादाश्रयणात्। एवं ह्यावृत्तिदोषो नातीव भविष्यति, सत्यप्यर्थद्वयनिमित्तवाक्यभेदे। तदयं सूत्रार्थ:—यश्चोदनालक्षण इत्यनूद्य स धर्म इति विधीयते' ततो योऽयं धर्म: सोऽर्थ एव नाऽनर्थ इति ॥ २७६ — २७८ ॥

अन्यतोऽवगतेऽर्थे सूत्रमेवमर्थमिदमित्यवगम्यते। तेन च एकदेश: सूत्र्यत इति सूत्रम्। तत्र भिन्नयोरेव वाक्ययोरिमावेकदेशावित्यवगन्तव्यम्। अथवा अर्थस्य सतश्चोदनालक्षणस्य धर्मत्वमुच्यते, इत्येकार्थमेवेति।

एकदेशाऽनुमानाद्वा द्वे सूत्रे परिकल्पिते।

भाष्यकारेण "भिन्नयोरेव वाक्ययोरिमावेकदेशा" विति वदता सूत्रद्वयमेव कल्पितं, तद्दर्शयति एकदेशेति। अर्थो धर्म इत्येकं सूत्रम्, अपरं चोदनालक्षण

1. 'वारिता'—ख

इतरेतरसामीप्यादेतावेव • परस्परम् ॥ २७६ ॥
कल्प्येते वाक्य[1]दोषाय नाऽन्याऽवयवकल्पना ।
विशिष्टार्थाऽनुवादित्वादथ वेत्यपि भाषिते ॥ २८० ॥
वाक्यभेदः स • एवेति संज्ञातन्त्रत्वमुत्तरम् ।
अर्थं वा प्रत्युपादानं[2] संज्ञालक्षणशब्दयोः ॥ २८१ ॥
[3]तन्त्रं लक्षणशब्दो वा वाच्यो धर्माऽर्थशब्दयोः ।
* धर्मे सामान्यतः सिद्धे प्रमाणं कथ्यते यदा ॥ २८२ ॥

इति । अस्य साकाङ्क्षत्वादनन्तरसूत्रागतो धर्मशब्दोऽनुषङ्गेण तदेकदेशतयाऽनुमीयते, चोदनालक्षणो धर्म इति । नन्वेवमर्थो धर्म इत्यत्राऽचोदनालक्षणस्यापि धर्मत्वं चोदनालक्षणो धर्म इत्यत्राऽनर्थस्यापि स्यादत आह इतरेतरेति ॥ २७९ ॥

अर्थो धर्म इत्यतो धर्मशब्दो ऽनुषज्यमानोऽन्तर्णीतार्थ एवं चोदनालक्षणसूत्रेऽनुषज्यते, न तदनादरेण स्वतन्त्रं धर्मपदमवयवत्वेन कल्प्यते, तादृशस्याऽसन्निहितत्वात्, तेनार्थत्वविशिष्ट एव चोदनालक्षणो धर्मोऽर्थोऽपि चोदनालक्षणत्वविशिष्ट एव धर्मो न त्वविशिष्ट इति न कश्चिद्दोषः ।

"अथ वा ऽर्थस्य सतश्चोदनालक्षणस्य धर्मत्वमुच्यते इति एकार्थमेव" इति भाष्यं तदाक्षिपति विशिष्टेति । विशिष्टानुवादेऽपि हि वाक्यभेदो ऽस्त्येवेति । तस्मात्पूर्वोक्तमेव धर्मपदतन्त्रत्वं वाक्यभेदस्योत्तरमित्याह इतीति । संज्ञाशब्देन धर्मपदमुच्यते । अर्थचोदनालक्षणशब्दयोर्वेतराभ्यां तन्त्रसम्बन्धो वाच्य इत्याह अर्थमिति । अर्थम् प्रत्युपादानमित्यर्थपदेनोभयोः सम्बन्ध इत्यर्थः । सूत्रार्थश्च धर्मपदतन्त्रत्ववद्दर्शयितव्य इति । चोदयति धर्मे इति । चोदनालक्षणाऽनुवादेन धर्मत्वविधावनर्थस्यापि चोदनालक्षणस्य सद्भावात्तद्व्यावृत्तयेऽर्थवदर्थग्रहणम्, धर्माऽनुवादे तु चोदनालक्षणत्वविधौ धर्मस्याऽर्थाऽव्यभिचारादविशेषणमर्थग्रहणमनर्थकमिति ॥ २८२ ॥

---

अयमाशयः *—द्विविधे खलु अत्र वचनव्यक्ती । चोदनालक्षणानुवादेन धर्मविधानं विपरीतं वा । तत्राद्ये तावत् पक्षे चोदनालक्षणत्वस्य अर्थत्वव्यभिचाराद् युक्तमेव विशेषणम् । यदा तु सामान्यतः सिद्धधर्मानुवादेन प्रमाणमनेन कथ्यते, तदा अर्थत्वं प्राप्तमेव, अर्थस्यैव श्रेयस्साधनस्य धर्मत्वप्रसिद्धेः । एवं च अर्थाऽव्यभिचारादर्थविशेषणमनर्थकम् ।

१. 'शेषाय'—ख २. 'दानं'—ख
३. 'तन्त्रे'—घ

[1]वृत्तमेव तदाऽ[2]र्थत्वं किमर्थं पुनरुच्यते ।
चोदनालक्षणत्वस्य धर्मं प्रति विधेयता ॥ २८३ ॥

लभ्यतेऽर्थानुवादेन संशयो ह्यन्यथा भवेत् ।
तथा च येऽप्यनर्थस्य साधनत्वेन [3]कल्पिताः ॥ २८४ ॥

निषेधैस्तेऽपि धर्माः स्युश्चोदनालक्षणत्वतः ।
तस्मादर्थाऽपरित्यागादेकार्थग्रहणं [4]यथा ॥ २८५ ॥

लभ्यते वचनव्यक्त्या सा स्यादर्थानुवादतः ।

परिहरति चोदनेति । सत्यमस्यां वचनव्यक्तावविशेषणमर्थपदं नित्याऽनुवादोऽस्तु तथापि नाऽनर्थकम् । अर्थाऽनुवादवलेनैव हि धर्माऽनुवादेनैव चोदनालक्षणत्वविधिरितीयं वचनव्यक्तिर्लभ्यते, अन्यस्यां पूर्वोक्तवाक्यभेदप्रसङ्गान्नित्यप्राप्त्यभावाद्विध्यनुवादाऽनुपपत्तेः, तदभावे तु चोदनालक्षणो धर्म इत्येतावति सूत्रे द्वयोरपि सम्भवात्संशयः स्यात् । ततः को दोषोऽत आह तथा चेति । द्वयसम्भवे हि चोदनालक्षणानुवादेन धर्मत्वविधिरपि परिगृह्येत, तथा च सत्यसति चार्थपदेऽनर्थस्यापि धर्मत्वं स्यादिति । तस्माद्वचनव्यक्चन्तरपरिग्रहेणाऽनर्थस्य धर्मत्वं परिहर्तुमर्थग्रहणमित्याह तस्मादिति । अर्थानुवादेन हि सा वचनव्यक्तिः सिध्यति । यथार्थशब्दाऽपरित्यागेनैकार्थं वाक्यं भवति, सा च धर्मानुवादेन लक्षणविधिरिति नियमे एवाऽन्यस्यां वाक्यभेदापत्तेः । तस्मात्तत्सिद्धचर्थमर्थशब्दोऽनुवादभूतः प्रयुज्यत इति ॥ २८५ ॥

यद्येषैवात्र वचनव्यक्तिः कथं तर्हि भाष्यकारो "ऽनर्थो धर्म उक्तो मा भूदित्येवमर्थग्रहण" मिति विशेषणत्वमर्थशब्दस्य दर्शयत्यत आह विशेषणादिति । नेदं विशेषणत्वकथनं विनैव विशेषणादर्थशब्दसामर्थ्यकारितमिदं हिंसादिवर्जनं फलं भाष्यकारेण कथ्यते तद्वलेनैव हि वचनव्यक्त्यंतरपरिग्रहाद्धिंसादीनां धर्मत्वेन वर्जनं लभ्यते, तदभावे तु चोदनालक्षणाऽनुवादेन धर्मविधेरपि सम्भवाद्धिंसादीनामपि धर्मत्वं स्यादिति ।

---

१. 'प्राप्त'—ख
२. 'र्थत्वं'—ख
३. 'लक्षिताः'—ख
४. 'यया'—ख

विशेषणाद्विना चैतदर्थसामर्थ्यकारितम् * ॥ २८६ ॥
कथ्यते भाष्यकारेण फलं हिंसादिवर्जनम् ।

इत श्रीकुमारिलभट्टपादविरचिते
श्लोकवार्तिके द्वितीयं चोदनासूत्रम् ॥

अथवेत्यादि भाष्यं यदाक्षिप्तं तत्समाधानं वा इदं विशेषणाद्विनेति। अयमर्थः। नैवायं विशिष्टानुवाद उच्यते, किं तर्हि विनैव विशेषणादर्थपदसामर्थ्य-कारितं यत्फलं वचनव्यक्तिविशेषपरिग्रहद्वारेण हिंसादिवर्जनं तदेवेदमुच्यते। वचनव्यक्त्यन्तरपरिग्रहार्थमथवेत्यादिभाष्यमिति यावत् । अयं च भाष्यार्थः— अर्थस्य सतो यद्धर्मत्वं तच्चोदनालक्षणस्येत्युच्यत इति । अर्थस्य सत इति नित्याऽनुवादतामर्थशब्दस्य दर्शयतीति ॥ २८५–२८६½ ॥

इति श्रीपार्थसारथिमिश्रविरचिते
न्यायरत्नाकरे द्वितीयं चोदनासूत्रम् ।

---

* अयमभिप्रायः—धर्मानुवादेन प्रमाणविधानादेव अनर्थानां हिंसादीनामधर्मत्वेन वर्जनं भवति, प्रमाणानुवादेन च धर्मविधौ तेषामपि धर्मता आपद्येत, तदिह अनर्थो धर्म उक्तो मा भूदित्येत्रमर्थमर्थग्रहणमिति वदता वचनव्यक्ति-विशेषणपरिग्रहार्थोऽर्थशब्द इति दर्शितम् ।

## * तस्य निमित्तपरीष्टिः ।। ३ ।।

उक्तमस्माभिश्चोदनानिमित्तं धर्मस्य ज्ञानमिति, तत् प्रतिज्ञामात्रेणोक्तम्। इदानीं तस्य निमित्तं परीक्षिष्यामहे—किं चोदनैवेति, अन्यदपीति। तस्मान्न तावन्निश्चीयते 'चोदनालक्षणोऽर्थो धर्म' इति ।। ३ ।।

'प्रतिज्ञाव्यतिरेकेण भाष्यकारेण यद्यपि ।
वक्ष्यमाणा स्वपक्षस्य युक्तिः [१]पूर्वं निदर्शिता ।। १ ।।
प्रतिज्ञामात्रमित्येतज्जैमिनेर्मतमुच्यते' ।
वृत्तिकारोऽधिकं वाऽपि भूतादि द्वारमब्रवीत् ।। २ ।।

## इति श्रीकुमारिलभट्टपादविरचिते श्लोकवार्त्तिके निमित्तसूत्रं तृतीयम् ।।

"उक्तमिदमस्माभिश्चोदनानिमित्तं धर्मस्य ज्ञानमिति तत्प्रतिज्ञामात्रेणोक्तम्"। (शा०भा०१.१.३.) इति भाष्यं तदयुक्तम्। "चोदना हि भूत" मित्यादिना युक्तेरपि दर्शितत्वादत आह प्रतिज्ञेति सार्द्धेन। परिहारान्तरमाह वृत्तीति। प्रतिज्ञाताऽर्थसाधनाय युक्तिरुपरिष्टादेव वक्ष्यते, पूर्वं तु भूतादौ सामर्थ्यकथनद्वारेण प्रतिज्ञातार्थस्य सम्भावनामात्रमधिकमुक्तं न साधनम्, अतः स्वाभिप्रायेणाऽप्युपपन्नं प्रतिज्ञामात्राऽभिधानमिति ।। १ ।। २ ।।

## इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे तृतीयं निमित्तसूत्रम् ।

---

* अयमभिप्रायः—इह अध्याये धर्मप्रमाणं परीक्षिष्यामहे। यद्यपि चोदनासूत्रेणाऽपि समस्ततन्त्रार्थसंक्षेपे क्रियमाणे प्रमाणलक्षणार्थोऽपि चोदनैव प्रमाणमेवेति प्रतिज्ञातः, तथापि संकीर्णे प्रतिज्ञाते पुनरनेन निष्कृष्य आद्याध्यायार्थः प्रतिज्ञायते। अनिष्कृष्यमाणे हि प्रतिज्ञासंस्कारेण न ज्ञायते कस्य प्रतिज्ञाभागस्य सदौत्पत्तिकसूत्राभ्यां हेतुरभिधीयत इति। बह्वेव हि तत्र प्रतिज्ञातं धर्मस्वरूपादि। अतस्तत्रापि हेत्वभिधानमिदमिति कश्चिद् भ्राम्येत। तन्निवारणार्थं स्वयमेव निर्धारयति—योऽयं तन्त्रार्थः संक्षिप्य अस्माभिः प्रतिज्ञातः तस्मिन् व्याख्यास्यमाने निमित्तपरीक्षैव तावत् इहाध्याये वर्तिष्यते प्रमाणपुरःसरत्वात् प्रमेयसिद्धेः। तदिह तावत् नियमविकल्पसमुच्चयोभयालापैश्चतुर्विधा परीक्षा वर्तिष्यते। किं चोदनैव उत अन्यदेवेति नियमः, चोदना वान्यद् वेति विकल्पः, उभयं वेति समुच्चयः, नचोभयमित्युभयालापः।

१. 'पूर्वंनि'—क

* सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥

तदुच्यते

वर्ण्यते सूत्रभेदेन येन प्रत्यक्षलक्षणम् ।
तेन सूत्रस्य सम्बन्धो वाच्यः पूर्वप्रतिज्ञया ॥ १ ॥

□ लक्षणस्याऽभिधानं [1]तु केनांशेनोपयुज्यते ।
'किमर्थं चाऽनुमानादेर्लक्षणं नात्र कथ्यते ॥ २ ॥

△ न तावदप्रमाणत्वं तेषां नाप्यक्षबुद्धिषु ।
शक्यतेऽन्तर्गतिर्वक्तुं नच लक्षणतुल्यता' ॥ ३ ॥

भवदासेनैतत्सूत्रं द्विधा कृत्वा 'सत्संप्रयोग' इत्येवमादि 'तत्प्रत्यक्ष' मित्येवमन्तं प्रत्यक्षलक्षणपरम्, 'अनिमित्त' मित्यादि च तस्य धर्मं प्रत्यनिमित्तत्वपरं व्याख्यातम्, तदुपन्यस्य दूषयति । वर्ण्यत इति ॥ १ ॥

न केवलमसङ्गतिरनुपयोगोऽपीत्याह लक्षणस्येति । द्व्यंशा हि पूर्वप्रतिज्ञा चोदनैव, प्रमाणमेवेति च । तत्र कस्मिन्नंशे लक्षणोपयोगः शास्त्रे वाऽस्मिन् क्वोपयोग इति । लक्षणं च कथयन् किमित्यनुमानादेर्लक्षणं न कथयति, न हि तेषामप्रामाण्यं, नापि प्रत्यक्षान्तर्भावः । तदनन्तर्भावादेव च न लक्षणमप्येकम्, अतस्तेषामपि पृथग्वक्तव्यं लक्षणमित्याह किमर्थमिति सार्द्धेन ॥ २ ॥ ३ ॥

---

* केचित् सूत्रमिदं द्विधा कृत्वा "सत्संप्रयोगे" इत्यादि "तत्प्रत्यक्षम्" इत्येवमन्तं प्रत्यक्षलक्षणपरत्वेन व्याचक्षते, "अनिमित्तं विद्यमानोपलंभनत्वात्" इतीदं, तस्य धर्मं प्रति अनिमित्तत्वपरत्वेन । भाष्यकारेण तु सकलमेवेदं सूत्रमनिमित्तत्वपरत्वेन व्याख्यातम् ।

□ लोकप्रसिद्धप्रमाणव्यवहारिणो हि मीमांसकस्य किं तल्लक्षणकरणेन । यदि तु नैयायिकादिप्रस्थानमनुविदधता प्रत्यक्षस्य लक्षणं प्रणीयते, तद्वदेव हि 'तत्पूर्वकं त्रिविधमनुमान' मित्यादिवत् अनुमानादेरपि लक्षणप्रणयनेन भाव्यम् ।

△ यदि एव मुच्येत अप्रमाणमेव अनुमानादि प्रत्यक्षादन्यत्वात् तदाभासवत् इति तल्लक्षणानभिधानमिति, तदनुचितमित्याह ।

१. 'च'—ख

न चापि सिद्धि[1]रेषां स्यादर्थात्प्रत्यक्ष[2]लक्षणात् ।
न हि तत्पूर्वकं सर्वं प्रमाणमिति निश्चितम् ॥ ४ ॥

प्रत्यक्ष[3]लक्षणोक्तिश्च नाऽनुमानादिलक्षणात् ।
विना न सिध्यतीत्येवमर्थाक्षेपो न [4]युज्यते ॥ ५ ॥

* तदेतत्पूर्वकत्वे [5]धीर्न च तल्लक्षणाद् भवेत् ।
तदुक्तेर्वाऽनुमानादि किं न स्यात्तदपूर्वकम् ॥ ६ ॥

□ न च लक्षणभेदस्य स्वरूपेयत्तयोरपि ।
प्रत्यक्षलक्षणादेषां कथंचिदवधारणा ॥ ७ ॥

स्यादेतत्, प्रत्यक्षलक्षणोक्तावर्थादितरेषां तत्पूर्वकत्वमेव लक्षणमुक्तं भवतीति, तत्राह न चेति । एषां न लक्षणस्य सिद्धिरित्यर्थ इति । कथं न सिद्धिरित्यत आह न हीति । अतिव्यापकमिदं लक्षणमप्रमाणेऽपि स्मृत्यादौ भावादिति । न चाऽऽक्षेपो ऽपि सम्भवति, विनाऽपि तेन प्रत्यक्षलक्षणोपपत्तेरित्याह प्रत्यक्षेति ॥ ४ ॥ ५ ॥

किं च तत्पूर्वकत्वमपीति तेषां न प्रत्यक्षलक्षणेनाऽवगम्यते किमु तस्य लक्षणत्वमित्याह तदिति । अनुपपत्त्यभावेऽपि तत्पूर्वकत्वमाक्षिप्येत । विपरीतमपि किं न स्यादित्याह तदिति ॥ ६ ॥

सिध्यतु वा तेषां सामान्यतस्तत्पूर्वकत्वम्, यस्तु तेषामवान्तरलक्षणभेदः स्वरूपमियत्ता वा तत्सर्वं न प्रत्यक्षलक्षणेनाऽवधार्यत इति वक्तव्यमेव तेषां लक्षणमित्याह न चेति ॥ ७ ॥

---

* 'तदतत्पूर्वकत्वे इति पाठे तु तच्च अतच्च तदतदी, ते पूर्वे यस्येति बहुव्रीहिः । प्रत्यक्ष मन्यद् वा पूर्वमनुमादीनामिति न प्रत्यक्षलक्षणादवगम्यते ।

□ प्रत्यक्षलक्षणोक्तेरनुमानादीनां तत्पूर्वकत्वं सिध्यतु वा, किन्तु यस्त्वेषामवान्तरलक्षणभेदः स्वरुपं च, संख्या च इयन्ति प्रमाणानीति, तत् सर्वं न सिध्यतीत्युच्यते ।

१. 'स्तेषां'—ख
२. 'लक्षणम्'—ग
३. 'लक्षाशक्तिश्च'—ग
४. 'विद्यते'—ख
५. 'तदतत्'—ख

* प्रसिद्धत्वादवाच्यत्वं प्रत्यक्षेऽपि प्रसज्यते ।
तेनाऽन्यपरिसंख्यार्थं [1]सूत्रं मूढेन वोच्यते ॥ ८ ॥
न [2]त्वेकं लक्षयेदेषु बुद्धिपूर्वं कथञ्चन ।
सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते ॥ ९ ॥
'न चा[3]प्येतेन सूत्रेण प्रत्यक्षं लक्ष्यते स्फुटम् ।
तदा[4]भासेऽपि तुल्यत्वात्[5]स्वप्नज्ञानैकवर्जनात् ॥ १० ॥
तद्धीन्द्रियार्थ[6]सम्बन्धव्यापारेण विना भवेत् ।
केन चित्संप्रयोगे तु [7]भ्रान्त्यादि स्यान्नियोगतः ॥ ११ ॥

अथ लोकप्रसिद्धत्वात्तेषां लक्षणं न वक्तव्यं तत्प्रत्यक्षेऽपि स्यादित्याह **प्रसिद्धत्वादिति**। तेन बहुप्रमाणेषु यदेकस्य लक्षणकरणं तदितरपरिसंख्यां वा मूढतां वा सूत्रकारस्य गमयति, न ह्यन्यथैकस्य लक्षणं युक्तमित्याह। **तेनेति** ॥ ८ ॥

वाक्यभेदश्चैकवाक्यत्वसम्भवे न युक्त इत्याह **सम्भवतीति** ॥ ९ ॥

लक्षणमपि चैतदाभाससङ्करादयुक्तमित्याह **न चेति** पादत्रयेण। अत्यल्पं चैतदुच्यते तदाभासेषु तुल्यत्वादिति, स्वप्नज्ञानमेकं वर्जयित्वा सर्वेष्वाभासेष्वनुमानादिषु च तुल्यमिदं लक्षणमित्याह **स्वप्नेति** ॥ १० ॥

कारणमाह **तद्धीति**। स्वप्नज्ञानमेव ह्रीन्द्रियार्थसम्बन्धाद्विना भवति, तदतिरिक्तं तु सर्वमेव भ्रान्त्यादि केन चिदर्थेनेन्द्रियस्य सम्प्रयोगे सत्येव भवतीत्यस्त्येवाऽतिव्याप्तिः। इन्द्रियाऽर्थसम्बन्धराहित्यं बाह्येन्द्रियविषयम्, आत्मेन्द्रियसन्निकर्षस्य सर्वत्र सत्त्वादिति ॥ ११ ॥

---

* प्रसिद्धत्वे चानुमानादीनां लक्षणाकरणं प्रत्यक्षेऽपि समानम्। एवं सति केवलप्रत्यक्षलक्षणकरणं तदन्य परिसंख्यार्थमेव स्यात्, किन्तु अभिमत प्रमाणपरिसंख्यानं चानुचितं भवेत्।

१. 'सूत्रमूढेन'—ग
२. 'ह्येकं'—ख
३. 'प्यनेन'—ख
४. 'भासेषु'—ख
५. 'भ्रमज्ञानेति'—ग
६. 'संयोग'—ख
७. 'भ्रान्त्यादिः'—ख

ग्राह्येणाऽन्येन वेत्येतदुक्तं नैव विशेषणम् ।
संप्रयोगस्य येन स्याद्विशेषो वक्ष्यमाणवत् ॥ १२ ॥

असामर्थ्यं च मत्वाऽस्य वृत्तिकारेण लक्षणे ।
तत्संप्रयोगइत्येवं पाठान्तरमुदाहृतम् ॥ १३ ॥

तेनान्येनापि संयोगे चक्षुरादेर्यदुत्थितम् ।
विषयाऽन्तरविज्ञानं तत्प्रत्यक्षं प्रसज्यते ॥ १४ ॥

सत्संप्रयोगनिर्देशो व्यर्थश्चेदेतदेव हि ।
प्रतिपाद्यं परस्यापि लक्षणाऽसिद्धिरेव च ॥ १५ ॥

स्वप्नादीनां निवृत्तिर्वा फलं [1]तस्य भविष्यति ।
तस्माद्विध्यनुवादित्वं नाऽनुक्ते लक्षणे भवेत् ॥ १६ ॥

ननु ग्राह्येण संप्रयोगो लक्षणं, तथा च वक्ष्यति वृत्तिकारः "यदाभासं विज्ञानं तेन सम्प्रयोग" इति। न चासावनुमानादिषु भ्रान्तौ वा ऽस्ति, धूमादिशुक्त्यादि-संयुक्तेन्द्रियवह्न्यादिरजतादिषु उपजायमानत्वादतो नाऽतिव्याप्तिरित्याह ग्राह्ये-णेति। सम्प्रयोगमात्रमिहोपात्तं न ग्राह्यविशेषणं वक्ष्यमाण इव वृत्तिकारमते व्यस्तेन तच्छब्देन, अतोऽस्त्येवाऽतिव्याप्तिरिति ॥ १२ ॥

यत एव यथावस्थितं सूत्रं लक्षणायाऽसमर्थमत एव वृत्तिकारेण तत्सम्प्रयोग इति पाठान्तरमुदाहृतमित्याह असामर्थ्यमिति ॥ १३ ॥

उपसंहरति तेनेति ॥ १४ ॥

ननु येन केन चित्संप्रयोगस्य सर्वज्ञानसाधारणत्वात्तदुपादानमनर्थकम्, अतस्तदु-पादानादेव ग्राह्यविशेषणसिद्धिरिति शङ्कते सत्संप्रयोगेति। दूषयति एतदिति। परस्य लक्षणं दूषयतोऽप्येतदेव प्रतिपाद्यमव्यभिचाराद्विशेषणोपादानमप्यनर्थकं लक्षणं चातिव्याप्तत्वान्नसिध्यतीति। न ह्यनर्थकत्वमात्रेण वाचकमन्तरेण ग्राह्यविशे-षणसिद्धिरिति स्यादेव लक्षणस्याऽतिव्याप्तिरिति ॥ १५ ॥

स्वप्नादिव्यावृत्तिफलत्वाद्वा नाऽनर्थकमित्याह स्वप्नेति। आदिशब्देन भूत-चिन्तादिकं गृह्यतइति। तस्मान्नास्मिन् सूत्रे लक्षणमनुपात्तत्वाद्विधातुमनुवदितुं वा शक्यमित्याह तस्मादिति ॥ १६ ॥

१. 'तस्याः'—ग

तेन नैषा वचोव्यक्तिर्यत्सतीन्द्रियसङ्गमे ।
विज्ञानं [1]जायते तस्य प्रत्यक्षत्वं प्रतीयताम् ॥ १७ ॥

प्रत्यक्षं यज्जने सिद्धं तस्यैवंधर्मकत्वतः ।
विद्यमानोपलम्भ[2]त्वं तेन धर्मेऽनिमित्तता ॥ १८ ॥

ये च लक्षणानुवादेनैवाऽनिमित्तपरं सूत्रमिति मन्यन्ते तन्निरासार्थमनुवादनिराकरणम्, न ह्यनुक्तस्याऽनुवादोऽपि सम्भवतीति । तस्मान्नैषा वक्ष्यमाणा वचनव्यक्तिः सूत्रस्येत्युपसंहरति **तेनेति** ॥ १७ ॥

का तर्हीत्यत आह **प्रत्यक्षमिति** । यल्लोकप्रसिद्धं प्रत्यक्षं तस्य सत्संप्रयोगजन्वधर्मयोगाद्विद्यमानोपलम्भनत्वम् तेन धर्मे भविष्यत्यस्य अनिमित्ततेति ॥ १८ ॥

इदं परीक्ष्यते—प्रत्यक्षं तावदनिमित्तम् । किं कारणम् ? एवंलक्षणकं हि तत्, "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् ।"

* एवंलक्षणकत्वं च न स्वरूपविवक्षया ।
एवंलिङ्गकमित्येतद्भाष्यकारेण वर्ण्यते ॥ १९ ॥

ननु भाष्यकारेण "प्रत्यक्षमनिमित्तमेवंलक्षणकं हि तत्" इति वदता लक्षणाऽनुवादो दर्शितोऽतः कथमनुवादो न सम्भवतीत्युक्तमत आह **एवमिति** । न प्रत्यक्षस्वरूपापेक्षमेवंलक्षणकत्वम्, न प्रत्यक्षस्वरूपं तेन लक्ष्यत इति लक्षणवाचोयुक्तिः, किं तु धर्मं प्रत्यनिमित्तत्वं येन लिङ्गेन लक्ष्यते तल्लक्षणकं प्रत्यक्षमित्यर्थ इति ॥ १९ ॥

---

१. 'जायते'— ख

२. 'त्वमाने धर्मोऽनिमि'— ग

* शाबरा अपि लोकप्रसिद्धलक्षणानुवादेन अनिमित्तत्वं विदधति, तानपि न मृष्यामहे, संपूर्णलक्षणाभिधाने सूत्रस्याशक्तेः । अतो लक्षणोक्तिरिह लिङ्गविवक्षयैव । यथा धूमो लक्षणमग्नेः, एवं विद्यमानोपलम्भनत्वमनिमित्तत्वस्य । लक्ष्यते हि तत्तेनेति भाष्यकारस्याभिमतम् ।

* यतोऽस्ति तत्र धर्मोऽयं विद्यमानोपलम्भनम् ।
तस्मात्तेन प्रसिद्धेन गम्यतामनिमित्तता ॥ २० ॥
प्रत्यक्षत्वमदो[1] हेतुः शेषहेतुप्रसिद्धये ।

किं तल्लिङ्गमत आह यत इति । 'तस्यैवंधर्मकत्वत' इत्युक्तेन सत्संप्रयोगजत्वेन हेतुना प्रसिद्धो विद्यमानोपलम्भनत्वं नाम प्रत्यक्षस्य धर्मोऽस्ति, तस्मात्तेन प्रसिद्धेनाऽनिमित्तता गम्यत इति भाष्यार्थः ॥ २० ॥

सत्संप्रयोगजत्वस्यैव कुतः सिद्धिरित्यत आह प्रत्यक्षत्वमिति । तदेते त्रयः प्रयोगाः, प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वाद्, विद्यमानोपलम्भनत्वं च सत्संप्रयोगजत्वात्, सत्संप्रयोगजत्वं च प्रत्यक्षत्वादिति । सत्संप्रयोगजत्वं भविष्यद्-वृष्ट्यनुमाने मेघेन्द्रियसंयोगजेऽपि सम्भवादनेकान्तिकं न विद्यमानोपलम्भनत्वं साधयितुमलमिति चेत्, न, असत्संप्रयोगजत्वात्; वर्त्तमानवचनो ह्ययं सच्छब्दः, स च संप्रयोगसमानाधिकरणः, तेन वर्त्तमानात्संप्रयोगाद्यज्ज्ञानं जायते तत्सत्संप्रयोगजम् । न चैवंभावो ऽनुमानस्यास्ति, तद्धि संप्रयोगे लिङ्गज्ञानोत्पादनेन निवृत्त-व्यापारे पश्चाल्लिङ्गज्ञानेन जायते, अतो न सत्संप्रयोगजमिति नास्ति व्यभिचारः । तर्हि भवदासपक्षेऽपि लक्षणस्याऽनुमानादावतिव्याप्तिर्न स्यात् । स्यादिति ब्रूमः । तेन हि सच्छब्दः संप्रयुज्यमानवचनोव्याख्यातः, सता संप्रयोगः सत्संप्रयोग इति । अनुमानादिकमपि सतैव लिङ्गादिना इन्द्रियसंप्रयोगाज्जायत इति भवत्यतिव्याप्तिः । यदि तु सोऽपि सच्छब्दं संप्रयोगविशेषणं व्याचक्षीत ततः पीतशङ्खादिविषयेषु प्रत्यक्षाभासेष्वतिव्याप्तिर्वक्तव्या नाऽनुमानादिष्विति ।

ननु प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्, विद्यमानोपलम्भनत्वं च सत्संप्रयोगजत्वात्, सत्संप्रयोगजत्वं च प्रत्यक्षत्वादित्युक्ते कोदृष्टान्तः । न तावत्

---

* पूर्वमेवमुक्तमस्ति – विद्यमानोपलंभनत्वं नाम धर्मो लिङ्गम्, अनिमित्तता तु लिङ्गि । यदि तु तल्लिङ्गमसिद्धमिति कश्चिद् ब्रूयात्, तम्प्रति सत्सम्प्रयोग-जत्वहेत्वन्तरप्रसिद्धेन तेन अनिमित्तता अधिगन्तव्येति । कुतः पुनः हेत्वन्तर-स्यैव प्रसिद्धिरितिजिज्ञासायां त्रय एते प्रयोगाः प्रदर्श्यन्ते—प्रत्यक्षमनिमित्तं विद्यमानोपलंभनत्वात् । विद्यमानोपलंभनत्वं च सत्संप्रयोगजत्वात् । सत्संप्रयोगजत्वं च प्रत्यक्षत्वात् । अत्र च विद्यमानोपलंभनत्वस्य व्यक्तमेव पञ्चम्या हेतुत्वमुपात्तम्, इतरयोस्तु उपादानेनैव हेतुत्वं सूत्रितमिति द्रष्टव्यम् । अयं च 'प्रत्यक्षं यज्जने सिद्धम्' ( सू. ४ श्लो. वा. १८ ) इत्यस्यैव प्रपञ्चो वेदितव्यः, यतः प्रपञ्चरुचयश्च मीमांसकाः ।

१. 'मतो'—ग

* अस्मदादौ प्रसिद्धत्वाद्योग्यर्थमभिधीयते ॥ २१ ॥
प्रकृतेन च सम्बन्धः शेषाऽप्रामाण्यदर्शनात् ।
तदप्रामाण्य[1]सिद्धिश्च सम्बन्धादेरनीक्षणात् ॥ २२ ॥
शक्यमन्याप्रमाणत्वमिति सूत्रेण [2]पठ्यते ।
न च पर्यनुयोगोऽत्र लक्षणाऽनु[3]पयोगतः ॥ २३ ॥

प्रत्यक्षम्, पक्षसपक्षयोरेकत्वाऽयोगात् । नाप्यप्रत्यक्षम्, तत्र प्रत्यक्षत्वस्य हेतोर्दर्शयितुमशक्यत्वात् । प्रसिद्धं चास्मदादिप्रत्यक्षस्य विद्यमानोपलम्भनत्वं सत्संप्रयोगजत्वं, धर्मं प्रति अनिमित्तत्वं च, अतोंऽशे सिद्धसाध्यता स्यादत आह अस्मदादाविति । यत एवास्मदादौ सिद्धं प्रत्यक्षस्य सत्संप्रयोगजत्वादिकम्, अत एव सिद्धसाध्यतापरिहाराय योगिप्रत्यक्षार्थमेवेदमनुमानम् । अस्मिंश्च प्रत्यक्षविशेषे पक्षीकृते ऽस्मदादिप्रत्यक्षं दृष्टान्तः । तत्र हि प्रसिद्धा प्रत्यक्षत्वादेः सत्संप्रयोजत्वादिना व्याप्तिरिति ॥ २१ ॥

न च लक्षणपक्षवत् प्रकृताऽसंगतिरित्याह प्रकृतेनेति । शेषाणां शब्दातिरिक्तानामप्रामाण्येन चोदनैवेत्यस्यांशस्य साधनादिति । ननु प्रत्यक्षस्यैवाऽत्राऽप्रामाण्यमुच्यते नान्येषाम्, तत्कथं शेषाऽप्रामाण्यमत आह तदिति । प्रत्यक्षगृहीते हि धर्मे तत्संबन्धः सादृश्यं चार्थान्तरस्य शक्यते ग्रहीतुं नान्यथा । तेन प्रत्यक्षाऽनिमित्तत्वकथनादेव तन्मूले एवाऽप्रामाण्यसिद्धिरिति ॥ २२ ॥

ननु लक्षणपक्षे यथा तेषामपि लक्षणं वक्तव्यं तथा किमिति तेषामपि सूत्रेणैवाऽनिमित्तत्वं नोच्यतेऽत आह शक्यमिति । प्रत्यक्षाऽनिमित्ततयैव तेषामप्यनिमित्तत्वं शक्यमवगन्तुमिति न सूत्रे निबद्धम्, लक्षणं तु प्रत्यक्षलक्षणादसिद्धत्वादुक्तव्यमिति । यश्च लक्षणानुपयोगे पर्यनुयोगः यश्च न्यूनाऽतिरेकादिदोषः स सर्वोऽपि लक्षणाऽनङ्गीकारादेव परिहृत इत्याह न चेति । नन्वनिमित्तत्वेऽपि सत्संप्रयोगजं

---

* अत्र परपक्षोक्तान् दोषान् परिहरति । व्याप्तिसंवेदनाधीनजन्मत्वादनुमानस्य नित्यपरोक्षेण च धर्मेण व्याप्तिसंवेदनासंभवादनुमानोदयाभावः । न च वृष्ट्यादौ प्रसङ्गः । तेषां दृष्टपूर्वकत्वेन व्याप्तिसंवेदनोपपत्तेः ।

१. 'सिद्धेश्च' – ख
२. 'बध्यते' – ख 'बाध्यते' — ग
३. 'प्रयोगतः' — ग

न च न्यूनाऽतिरेकादिप्रसङ्गो लक्षणं प्रति ।
सर्वथा लोकसिद्धत्वाद्धर्मोऽयं तावदिष्यते ॥ २४ ॥

ततश्च मृगतृष्णादि न प्रत्यक्षं प्रसज्यते ।
अनिमित्तप्रसङ्गस्तु तस्यापि न [1]निवार्यते ॥ २५ ॥

'अतीताऽनागते ऽप्यर्थे सूक्ष्मे व्यवहितेऽपि च ।
प्रत्यक्षं योगिनामिष्टं कैश्चिन् मुक्तात्मनामपि ॥ २६ ॥

विद्यमानोपलम्भत्वमसिद्धं तत्र तान्प्रति ।
[2]भविष्यत्त्वस्य वा हेतोस्तद्ग्राह्यैर्व्यभिचारिता ॥ २७ ॥

मा भूतामिति तेनाऽऽह लोकसिद्धं सदित्ययम्' ।
न लोकव्यतिरिक्तं हि प्रत्यक्षं योगिनामपि ॥ २८ ॥

प्रत्यक्षमित्येवोच्यतेऽतोऽस्त्येवाभासेष्वतिप्रसङ्गोऽत आह **सर्वथेति** । न हि यदेवं विधं तत् प्रत्यक्षमित्युच्यते किं तु यत्प्रत्यक्षं तदेवंरूपत्वादनिमित्तमिति । अस्ति चाऽस्यायं धर्मो लोकसिद्धो यद्यन्यदपि तथाविधमस्ति मृगतृष्णादिज्ञानं तदपि भवत्वनिमित्तं न तु तस्य प्रत्यक्षत्वापत्तिरिति ॥ २३ ॥ २५ ॥

यदुक्तं 'योग्यर्थमभिधीयत' इति, तत्रेयमाशङ्का भवति, योगिप्रत्यक्षस्य वा किं न सिद्धं विद्यमानोपलम्भनत्वं येन तत्साध्यतेऽत आह **अतीतेति** सार्द्धद्वयेन ।

योगिनां हि भावनाबलजं प्रत्यक्षं सकलाऽतीताऽनागतसूक्ष्मादिविषयं धर्माऽधर्मावपि गोचरयतीति शाक्यादयो मन्यन्ते, स्वभावत एवात्मानः सर्वज्ञाः, ते देहावरणेनावृतज्ञानाः किंचिदेवेन्द्रियादिवशेन जानन्ति, निर्मुक्तदेहावरणास्तु मुक्ताः सर्वमनागतादि जानन्तीत्याहेताः । तान् प्रत्यसिद्धं विद्यमानोपलम्भनत्वम् । तथा विद्यमानोपलम्भनं प्रत्यक्षमिति वदतः सूत्रकारस्य "धर्मो न प्रत्यक्षः, भविष्यत्त्वादनागतवृष्टिवत्" इति हेतुः संमतः, तस्यापि योगिमुक्तात्मग्राह्यैरर्थान्तरैरनागतादिभिर्व्यभिचारितां मन्यन्ते । तावुभावपि दोषौ मा भूतामिति लोकप्रसिद्धं सत्संप्रयोगजत्वं विद्यमानोपलम्भनत्वसाधनार्थमयं जैमिनिराहेति ।

ननु सत्संप्रयोगजत्वमेषां सिद्धम्, यद्यपि लौकिकस्य प्रत्यक्षस्य तदस्ति तथापि योगिप्रत्यक्षस्य तदसिद्धमेव; भावनाबलजत्वाभ्युपगमात् । तदसिद्धौ च विद्यमानोपलम्भनत्वमपि असिद्धमेव, अत आह **न लोकेति** । लोके हि प्रत्यक्षं सत्संप्रयोगजं विद्यमानोपलम्भनं च दृष्टम् । अतो योगिप्रत्यक्षमपि न तत्स्वभावमतिवर्त्तितुमर्हतीति ॥ २६ ॥ २८ ॥

---

१. 'विनिवार्यते'—ग २. 'भविष्यत्वस्य'—ख

प्रत्यक्षत्वेन तस्यापि विद्यमानोपलम्भनम् ।
सत्संप्रयोगजत्वं वा ऽस्मत्प्रत्यक्षवद्भवेत् ॥ २९ ॥
'तेषामवर्तमानेऽर्थे या नामोत्पद्यते मतिः ।
प्रत्यक्षं सा ततस्त्वेव नाभिलाषस्मृतादिवत् ॥ ३० ॥
लोके चाप्यप्रसिद्धत्वात्प्रत्यक्षत्वप्रमात्वयोः ।
प्रतिभावद् द्वयासत्त्वं सदित्येतेन कथ्यते' ॥ ३१ ॥
लौकिकी प्रतिभा यद्वत्प्रत्यक्षाद्यनपेक्षिणी ।
न निश्चयाय पर्याप्ता तथा स्याद्योगिनामपि ॥ ३२ ॥
अविद्यमानसंयोगात् स्याच्चेत् प्रत्यक्षधीः क्वचित् ।
भविष्यत्यपि धर्मे [1]स्याच्छक्तेत्याह सदित्ययम् ॥ ३३ ॥

कथमित्यत आह प्रत्यक्षत्वेनेति । प्रत्यक्षत्वेनाऽस्मदादिप्रत्यक्षवद्विद्यमानोपलम्भनत्वं साधयितुं शक्यम् । पूर्वोक्तमार्गेण वा प्रत्यक्षत्वेन भावनाबलजत्वं निराकृत्य सत्संप्रयोगजत्वं साधयित्वा ततो विद्यमानोपलम्भनत्वं साधयितव्यम् । न हि भावनाबलजं प्रत्यक्षं नाम सम्भवति । भावना हि समानविषया विजातीयाऽव्यवहिता स्मृतिसंततिः । स्मृतिश्च पूर्वाऽनुभूतविषयिणी नाऽननुभूतं गोचरयति । तद्यदि धर्मः प्रमाणान्तरेणाऽनुभूतः किं भावनया ? यदि नाऽनुभूतो, भावयितुमपि न शक्यते । मुक्तात्मनां तु सर्वविषयं ज्ञानं प्रागेव निराकृतम्, प्रमाणाभावात् केवलभावनाबलजप्रत्यक्षनिरासार्थोऽयं प्रस्ताव इति ॥ २९ ॥

प्रत्यक्षं विद्यमानोपलम्भनमिति वदता यदविद्यमानविषयं योगिज्ञानं तत्प्रत्यक्षं न भवतीति सूचितम्, तत्प्रयोगद्वयेन दर्शयति तेषामिति द्वयेन । ततस्त्वेवेति । अवर्त्तमानविषयत्वादेवेत्यर्थः । प्रमाणत्वनिराकरणं योगिज्ञानम् प्रमाणमेव न भवति किं पुनः प्रत्यक्षमिति दर्शयितुमिति ॥ ३० ॥ ३१ ॥

वैशेषिकादयस्तु प्रतिभाख्यप्रमाणन्तरगम्यत्वं धर्माऽधर्मयोर्मन्यन्ते, तच्च लोकेऽपि क्व चिदस्त्येव । यथा श्वो मे भ्राताऽऽगन्तेति वाहुल्येन तद् ऋषीणामेवेत्यार्षमित्युच्यते, तान्निराकरोति लौकिकीति । अस्मदादिप्रतिभा तावल्लिङ्गाद्याभासजन्या प्रत्यक्षादिकमनपेक्ष्य स्वातन्त्र्येणाऽर्थमनिश्चाययन्ती नैव प्रमाणम् । अतस्तद्वदेव योगिनामपीति ॥ ३२ ॥

तदेवं विद्यमानोपलम्भनत्वस्य हेतोरसिद्धिपरिहारार्थं सत्संप्रयोगजत्वाभिधानमिति यदुक्तं तद्विवृतम् । इदानीं भविष्यत्त्वस्य वा हेतोरनैकान्तिकत्वनिराकरणार्थमिति यदुक्तं तद्विवृणोति अविद्यमानेति । यद्यविद्यमानादपि संप्रयोगाद् योगिनां क्वचिदर्थे प्रत्यक्षा धीःस्यात्, ततस्तेनाऽनैकान्तिकत्वान्न भविष्यत्त्वेन धर्मस्याऽप्रत्यक्षत्वं सिध्येदिति तदर्थमयं जैमिनिः सदित्यादकमाहेति ॥ ३३ ॥

---

१. 'स्याच्छक्के'—ग।

[1]प्रत्यक्षः प्रागनुष्ठानान्न धर्मोऽनुष्ठितोऽपि वा ।
फलसाधनरूपेण तदानीं येन नास्त्यसौ * ॥ ३४ ॥
अस्मत्प्रत्यक्षवच्चापि विद्यमानोपलम्भनम् ।
प्रत्यक्षं [2]ध्यायिनां धर्मे प्रत्यक्षत्वाच्च नेष्यते ॥ ३५ ॥

ननु भविष्यदवस्थायां मा भूद्धर्मः प्रत्यक्षो, यदा त्वसौ निष्पन्नः तदा किं न प्रत्यक्षोऽतआह प्रत्यक्ष इति । प्राक् तावदनुष्ठानाद् भविष्यत्त्वान्न प्रत्यक्षः, अनुष्ठितोऽपि नैव प्रत्यक्ष इति । कस्मादित्यत आह फलेति । फलसाधनरूपेण हि यागादीनां धर्मत्वम् । न च यागस्वरूपकाले तत्साधनत्वं वर्त्तति, फलस्य चिरभाविनस्तदानीमक्रियमाणत्वात् । यदा तु फलं निष्पद्यते तदा यागश्चिरविनष्टत्वान्न तत्साधनरूपेण शक्यते प्रत्यक्षयितुम् । अपूर्वं तु स्वभावादेवाऽप्रत्यक्षम् । यदि प्रत्यक्षं स्यात्ततो यागानन्तरं तदुत्पत्ति कालान्तरे च ततः सिद्धि फलस्य दृष्ट्वा यागस्य तद्द्वारं फलसाधनत्वं गम्यते । यापि यागस्याऽपूर्वं फलं वा प्रति शक्तिः सा यद्यपि यागकाले विद्यते तथापि न प्रत्यक्षा सर्वशक्तीनामतीन्द्रियत्वादिति ॥३४॥

प्रकृतमिदानीं विद्यमानोपलम्भनत्वेनाऽनिमित्तत्वं धर्मे प्रत्यक्षस्योपसंहरन् प्रयोगान्तरं दर्शयति अस्मदिति । विद्यमानोपलम्भनमिति हेतुनिर्देशः । ध्यायिनां प्रत्यक्षं धर्मे नेष्यते विद्यमानोपलम्भनत्वादित्युपसंहारः । प्रत्यक्षत्वादिति प्रयोगान्तरमिति । एवं सूत्रतात्पर्यं व्याख्यायाऽवयवाननुसंधत्ते । तत्र भिक्षुणा सद्ग्रहणमनर्थकमसता संप्रयोगाऽसम्भवादित्युक्तम्, यथाह—

सदित्यसद्व्युदासाय न नियोगात्स गंस्यते ।
संप्रयोगो हि नियमात्सत एवोपपद्यते ॥ इति ॥

तत्तावद्भाष्यकारेणैव 'सतीन्द्रियार्थसंप्रयोग' इति कर्मधारयं दर्शयता परिहृतम् ॥ ३५ ॥

---

१. 'प्रत्यक्षम्'—ग   २. 'योगिनां'—ख

* अनुष्ठानार्थं हि प्रमाणमन्विष्यते । तदनुष्ठानात् प्रागेव अन्वेष्यम् । न च अनुष्ठानात् प्राग् धर्मोऽस्तीति कथं प्रत्यक्षो भवेत् । यद्यपि अन्येन अनुष्ठितो विद्यमानोऽपि धर्मः प्रत्यक्षो न भवितुं शक्यः । यदि द्रव्यादयः स्वरूपेण धर्मा भवेयुस्तदा भवेदपि, किन्तु फलसाधनरूपेण एते धर्माः । तच्च रूपमनुष्ठानकाले नास्ति । आमुष्मिकफलेषु अत्र फलस्याभावात् । ऐहिकफलेष्वपि चिरेण । निरन्तरयोर्हि साध्यसाधनयोः साधनं प्रत्यक्षं भवति मर्दनसुखयोरिव । इह तु फलकाले साधनं चिरातिवृत्तं, साधनकाले फलमजातम् इति न फलसाधनं प्रत्यक्षम् । शक्तिस्तु सर्वभावानां नित्यपरोक्षैव, तेन न तद्विशिष्टो धर्मः प्रत्यक्षो भवतीति ।

अविद्यमानसंयोगात् प्रत्यक्षत्वनिराकृतिः ।
योगिनां केन लभ्येत नेष्टं सद्ग्रहणं यदि ॥ ३६ ॥

[1]सप्तम्याऽपि तु लभ्येत सदर्थः, कल्पना पुनः ।
परेषां वारणीयेति यत्नो जैमिनिना कृतः ॥ ३७ ॥

सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः ।
प्रयोग इन्द्रियाणां च व्यापारोऽर्थेषु कथ्यते ॥ ३८ ॥

दुष्टत्वाच्छुक्तिकायोगो वार्यते रजतेक्षणात् ।
एवं सत्यनुवादत्वं [2]लक्षणस्यापि सम्भवेत् ॥ ३९ ॥

न च कर्मधारयपक्षे ऽस्यानर्थक्यमित्याह अविद्यमानेति । अविद्यमानादतीतादनागताद्वा संप्रयोगादतीताऽनागताऽर्थविषयं योगिनां प्रत्यक्षम् असति सद्ग्रहणे कथं निराक्रियेतेति ॥ ३६ ॥

ननु निमित्तसप्तम्यैवाऽयमर्थो लभ्यते, न ह्यतीतस्याऽनागतस्य वा सम्प्रयोगस्य निमित्तत्वं सम्भवति । यद्यपि चाऽतीतस्य केनचिद् द्वारेण सम्भवेत्, न त्वनागतस्य कथं चिदपि सम्भवति । तदेव च भविष्यति धर्मे प्रत्यक्षस्याऽनिमित्तत्वं प्रतिपादयता निवारणीयम्, तच्चैतत्सप्तम्यैव लब्धमिति किं सद्गहणेनाऽत आह सप्तम्येति । सत्यं लभ्यते, तथापि योगिनोऽनागतादेव संप्रयोगादनागतेऽप्यर्थे प्रत्यक्षमुत्पद्यत इति यत्परेषां कल्पनं तन्निराकरणार्थो ऽयं यत्नः । अन्यथाऽतीते भाविनि वेत्यपि भ्रान्ताः कल्पयेयुरिति ॥ ३७ ॥

संशब्दं व्याचष्टे सम्यगिति । कः पुनः प्रयोगो यस्य दुष्टत्वं वार्यते, तद् दर्शयति प्रयोग इति ॥ ३८ ॥

कः पुनर्दुष्प्रयोगः, यन्निवारणः संशब्दस्तमाह दुष्टत्वादिति । कथं दुष्टत्वमत आह रजतेति । शुक्तौ हि रजतभ्रान्तिं कुर्वन् शुक्तीन्द्रियसंप्रयोगोदुष्टस्तन्निवारणेन सम्यग्ज्ञानजननो यः प्रयोगस्तत्परिहारार्थः संशब्द इति । एवं चाऽवयवव्याख्यायां लक्षणाऽनुवादेनैवाऽनिमित्तता शक्या विधातुमित्याह एवमिति । भवदासेन हि सता संप्रयोग इति उक्तं,संप्रयोगशब्दश्च सकलसंबन्धवचनो व्याख्यातः, अतस्तस्याऽनुमानादिष्वाभासेषु चाऽतिव्याप्तिर्भवति नास्मद्व्याख्यान इति ॥ ३९ ॥

---

१. सप्तम्यैव तु'—ख
२. 'लक्षणत्वेन'—ख

'ततश्चाऽप्राप्यकारित्वाद् यद्बौद्धैः श्रोत्रचक्षुषोः ।
लक्षणव्याप्तिसिद्ध्यर्थं संयोगो नेति कीर्त्यते ॥ ४० ॥

प्राप्य[1]ग्रहणपक्षे [2]हि [3]सान्तराऽग्रहणं किल ।
अधिष्ठानाऽधिकश्चार्थो न गृह्येत त्वगादिवत् ॥ ४१ ॥

व्यापारमात्र[4]वाचित्वा दविरुद्धं तदत्र नः' ।
यदि वाऽर्थार्जवस्थानं सम्प्रयोगोऽत्र वर्ण्यते ॥ ४२ ॥

योग्यतालक्ष[5]णो वाच्यः संयोगः कार्यलक्षितः ।
सांख्यादीन् वा विनिर्जित्य [6]प्राप्तिपक्षोऽत्र दूष्यताम् ॥ ४३ ॥

तयोश्च प्राप्यकारित्वमिन्द्रियत्वात् त्वगादिवत् ।
केचित्तयोः शरीराच्च बहिर्वृत्तिं प्रचक्षते ॥ ४४ ॥

यदपि बौद्धैः प्राप्तिवचनं संप्रयोगशब्दं मत्वा श्रोत्रचक्षुषोरप्राप्यकारित्वादव्यापकं लक्षणं, प्राप्यकारित्वे हि तयोर्यदिदं सान्तरग्रहणं 'दूरे शब्दो' 'दूरेऽर्थ' इति, तन्न स्यात् प्राप्तौ दूरत्वाऽसम्भवात् । न चात्मापेक्षया दूरत्वं, तस्य विभुत्वेनाऽभ्युपगमात् । तथाऽधिष्ठानाऽधिकपरिमाणानां महीधरादीनां ग्रहणं न स्यात् । न ह्यल्पेन महतां प्राप्तिः सम्भवतीत्युक्तम् । सान्तरग्रहणं न स्यात् प्राप्तौ स्थानाधिकस्य वा इति । तथा निरन्तरग्रहणं न स्यादित्युक्तम्, तदपि व्यापारमात्रवाचित्वात्संप्रयोगशब्दस्य प्राप्तिवचनत्वाऽभावात्परिहृतमित्याह ततश्चेति सार्द्धद्वयेन । अर्थाऽऽर्जवेनाऽवस्थानं वा संप्रयोग इत्याह यदि वेति ॥ ४० ॥ ४२ ॥

शक्तिलक्षणो वा संबन्धः कार्यगम्यः शब्दार्थयोरिवेन्द्रियाऽर्थयोः संप्रयोग इत्याह योग्यतेति । भवतु वा सांख्यादिसिद्धान्तेन प्राप्यकारित्वमेव श्रोत्रचक्षुषोरित्याह सांख्येति । न च ते शक्यन्ते निर्जेतुमित्यभिप्राय इति ॥ ४३ ॥

किं पुनः प्राप्यकारित्वे प्रमाणमत आह तयोरिति । ननु प्रत्यक्षविरुद्धमेवेदमनुमानं कर्णशष्कुल्याश्चक्षुर्गोलकस्य च शरीर एवोपलम्भादत आह केचिदिति । सांख्यास्तावदाहंकारिकयोः श्रोत्रचक्षुषोर्वृत्तिः शरीराद्विनिर्गत्याऽर्थं गृह्णाति इति मन्यन्ते । सा चाऽदृश्येति न प्रत्यक्षविरोध इति ॥ ४४ ॥

---

१. 'च'—ख २. 'ऽपि'—ख
३. 'सान्तरग्र'—ग ४. 'बाधित्वा'—ग
५. णो वान्यः'—ख 'णेनान्यः'—ग ६. 'प्राप्ति—ख

चिकित्सादिप्रयोगश्च योऽधिष्ठाने प्रयुज्यते ।
सोऽपि तस्यैव संस्कार आधेयस्योपकारकः[1] ॥ ४५ ॥

तद्देशश्चापि संस्कारः सर्वव्याप्त्यर्थ उच्यते ।
चक्षुराद्युपकारश्च[2] पादादावपि दृश्यते ॥ ४६ ॥

तस्मान्नैकान्ततः शक्यं संस्कारात्तत्र[3] वर्तनम् ।
बहिर्वृत्तिस्तयो[4]श्चेष्टा [5]पृथ्वग्रा सन्तताऽपि च ॥ ४७ ॥

अधिष्ठानाधिकं तेन गृह्यते यत्र यादृशम् ।
पार्थवं[6] वृत्तिभागे स्याद् दूरेऽपि ग्रहणं [7]तथा ॥ ४८ ॥

नन्वधिष्ठानमेवेन्द्रियम्, तत्र चिकित्सादिप्रयोगादत आह **चिकित्सेति**। अधिष्ठानाधारा वृत्तिस्तेन चिकित्सादिप्रयोगोऽधिष्ठानसंस्कारोऽपि तत्राऽऽधेयस्योपकरोतीति ॥ ४५ ॥

नन्वधिष्ठानगतस्यैवोपकर्तुं शक्नोति, कथं बहिर्गतस्योपकरोत्यत आह **तद्देश इति**। अपरित्यक्ताऽधिष्ठानैव वृत्तिरर्थदेशं प्राप्नोति दीपप्रभावत्, अतोऽधिष्ठानगतोऽपि संस्कारो वहिर्गताया अप्युपकरोतीति। दृष्टं च देशान्तरगतस्याऽपि संस्कारस्य देशान्तरेऽपि उपकारकत्वं, यथा पादादिगतस्य चक्षुरादाविति। तदाह **चक्षुरादीति** ॥ ४६ ॥

एतदेवोपसंहरति **तस्मादिति**। निरन्तरग्रहणमधिकग्रहणं चोपपादयति **बहिरिति** सपादेन। दीपप्रभैवाऽत्र दृष्टान्तः। तेन यत्र यादृशं पार्थवं पृथुत्वं तत्र तावदधिकं गृह्यत इति। न च वाच्यं यदि वृत्तिर्गत्वाऽर्थं प्रकाशयति किमिति दूरं न गच्छतीति। कार्यगम्या हि तद्गतिः अतो यथाकार्यमवतिष्ठत इति नातिदूरगमनम्। तत्रापि दीपप्रभैव निदर्शनम्, प्रत्युताऽप्राप्यकारित्ववादिनामेवाऽतिदूरव्यवहिताऽर्थग्रहणप्रसङ्ग इत्यभिप्रायेणाह **दूरेऽपीति** ॥ ४७ ॥ ४८ ॥

---

१. 'इष्यते'—ख
२. 'स्तु'—ख
३. 'वर्जनम्'—ग
४. 'स्तत'—ख
५. 'पृथ्व्यन्या'—ग
६. 'पार्थिवो'—ग
७. 'यथा'—ग

दीपप्रभा यथा [1]तस्मिन् विनश्यति विनश्यति ।
तथा बहिर्गताऽप्येषा मूल[2]च्छेदा द्विनश्यति ॥ ४९ ॥

अधिष्ठानपिधानं [3]तु [4]सत्यप्युच्छिन्नयत्नया ।
तयाऽर्थोऽनुपनीतत्वादात्मना नाऽनुभूयते ॥ ५० ॥

विच्छिन्न इति बुद्धिः स्यादधिष्ठानमपेक्ष्य [5]च । *

नन्वर्थगता वृत्तिरधिष्ठाननाशेऽपि किमित्यर्थं न प्रकाशयति, अत आह **दीपप्रभेति** । यद्यपिधानं यदि वापि नाशस्तथाप्यात्मप्रयत्नाऽनुगृहीता साऽर्थमात्मन उपनयति समर्पयति ॥ ४९ ॥

नष्टेऽप्यधिष्ठाने पिहितेऽपि वा उच्छिन्नयत्नया तयाऽर्थो ऽनुपनीतत्वान्नात्मनाऽनुभूयत इत्याह **अधिष्ठानेति** ॥ ५० ॥

सान्तरग्रहणमुपपादयति **विच्छिन्न इति** । यथा सर्वगतमप्यात्मानं शरीरान्तर्गतमेव प्रतिपत्तारो मन्वते, तथेन्द्रियमपि गोलकस्थमेव । अतः शरीराऽपेक्षया गोलकापेक्षया वा विच्छिन्ने विच्छेदबुद्धिः, शब्देऽप्ययमेव न्यायः सांख्यानामिति ।

---

१. 'तस्माद्'— ग  २. 'भेदाद्'—ग  ३. 'च'—ख
४. 'सत्या'—ग  ३. 'तु'—ख

* सांख्यानां वृत्तिगमनपक्षः प्राप्तिसाधारण्यमात्रेण वार्तिककारेण उक्तः, न पुनरभिप्रेतः । नहि इन्द्रियवृत्तिर्नाम क्वचित् प्रमाणेन अवगम्यते । तथाहि— आहङ्कारिकाणि इन्द्रियाणि इति कापिला मन्यन्ते । कश्चायमहङ्कारः ? यदि योऽयमात्मानं प्रकाशयति, स तर्हि ज्ञानम्, इति इन्द्रियाणां कथं प्रकृतिर्भविष्यति । आत्माधारमान्तरं ज्ञानं; कथं तेन बाह्येन्द्रियाण्यारब्धुं शक्यन्ते । अथ मतं तत्त्वान्तरमहङ्कारः इति । तन्न, प्रमाणाभावात् । अपि च तत्त्वान्तरमपि तत् कापिलैः विभु सङ्गीर्यते । ततः तन्मयानि इन्द्रियाण्यपि विभूनि भवेयुः नच विभूनां वृत्तिरुपपद्यते । वृत्तिनिर्गमनञ्च विभूनां नच संभवति । स्यान्मतम् नच ब्रूमो विभूनि इन्द्रियाणि गच्छन्तीति, किं तर्हि तदाधारा वृत्तिरिति । केयं वृत्तिरिति वक्तव्यम् । यदि श्रोत्रादीनां शब्दादिग्रहणयोग्यता, सा तर्हि अमूर्ता शक्तिः कथं गच्छेत् । अपिच त्रीण्यन्तः करणानि महानहङ्कारो मन इति कापिला मन्यन्ते । न च करणं करणान्तराणां प्रकृतिरुपपद्यते करणत्वात् मनोवत् । अतो नाहङ्कारिकाणि इन्द्रियाणि । न च तद्वृत्तिरमूर्ता प्राप्यकारिणीति प्रमाणवती कल्पना । अतो भौतिकान्येवेन्द्रियाणि प्राप्यकारीणीति । इन्द्रियाणां भौतिकत्वे दृष्टानुसार एव प्रमाणम् ।

शब्दे त्वाधिक्यविच्छेदो भ्रान्त्यैवोक्तावसम्भवात् ॥ ५१ ॥

स्वमते आह शब्दे इति। श्रोत्रदेशे एव शब्दो गृह्यते, अतो न विच्छेदः। अमूर्त्तद्रव्यत्वाच्च न वृद्धिह्रासाविति। तदेवं सांख्यानां मतेन प्राप्यकारित्वं समर्थितम्। न त्वाहङ्कारिकत्वेऽक्षाणां तत्त्वान्तरवृत्तिसद्भावे वा प्रमाणमस्ति। तेन भौतिकान्येवेन्द्रियाणि प्राप्यकारीणीति वक्तव्यम्। तथा हि, चक्षुस्तावद् रूपप्रत्यक्षहेतुत्वादालोकवत्तैजसम्। तथा च सति दीपप्रभावदेव पृथुग्राहिकल्पनं सुकरमिति न किं चिच्चोद्यम्। यथा रूपवदेव तैजसं चक्षू रूपस्य विशेषगुणस्य प्रकाशकम्, एवं गन्धस्यापि विशेषगुणस्य गन्धवदेव प्रकाशकमिति घ्राणस्य पार्थिवत्वसिद्धिः। तच्च वायुप्रेरितेषु चम्पकादिसूक्ष्मद्रव्येषु घ्राणोदरप्रविष्टेषु तद्‌गतं गन्धं संयुक्तसमवायेन प्राप्यैव गृह्णातीति वाच्यं प्राप्यकारित्वम्। एवं रसनमपि रसग्राहि रसवदेवेति स्थिते पार्थिवमाप्यं वेति चिन्तायामाप्यत्वं युक्तम्। आर्द्रजिह्वो हि स्फुटतरं रसं गृह्णाति न शुष्कजिह्वः। तेन जिह्वागतानामपामेव रसग्राहकत्वमिति रसनस्याऽऽप्यत्वम्। तथा निमग्नोत्तीर्णानां वायुसंम्पर्काच्छीतस्पर्शोपलम्भात् शरीरेऽपि वायोरेव स्पर्शोपलब्धिनिमित्त्वमितित्त्वगिन्द्रियस्य वायवीयत्वम्। प्राप्यकारित्वं तु त्वग्रसनयोरविवादम्। श्रोत्रं तु दिङ्मयम् इति शब्दाधिकरणे वक्ष्यत इत्यलमतिविस्तरेण ॥ ५१ ॥

सतीन्द्रियार्थसम्बन्धे या पुरुषस्य बुद्धिर्जायते तत्प्रत्यक्षम्। भविष्यंश्चैषोऽर्थो न ज्ञानकालेऽस्तीति। सतश्चैतदुपलम्भनं नासतः। अतः प्रत्यक्षमनिमित्तम्।

* पुरुषेन्द्रियशब्दौ च व्यवधानेन कल्पितौ।
पुरुषो लौकिको वा स्याद्यो वाऽस्मिन् साधयिष्यते ॥ ५२ ॥

अत्र सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मेति द्वयमप्ययुक्तम्, सर्वमेव हि

---

* अस्मिन् सूत्रे पुरुषस्य सम्प्रयोग इन्द्रियाणां बुद्धिजन्म इत्युच्यते। तच्चाऽयुक्तम्, विभोः पुरुषस्य सर्वभावैरेव सम्प्रयोगाऽव्यभिचारेण विशेषणोपादानवैयर्थ्यात्। इन्द्रियाणां च भौतिकानामचेतनत्वात्। चेतना हि बुद्धिः इति सर्वलौकिकाः परीक्षकाश्च मन्यन्ते। न पुनरिन्द्रियव्यापारो बुद्धिः। सांख्या हि इन्द्रियवृत्तौ बुद्धिशब्दमुपचरन्ति। तत्र तेषामेव परिभाषामात्रम्। अतोऽत्र कीदृश पदान्वय इति जिज्ञासायां विचार्यते। भाष्यकारेण पुरुषेन्द्रियशब्दौ व्यवहितकल्पनया व्याख्यातौ, येन एवमाह 'सति इन्द्रियार्थसम्बन्धे पुरुषस्य या बुद्धिर्जायते तत् प्रत्यक्षम्'। अत्र पुरुषशब्देन आत्मा अभिप्रेतः न शरीरम्, तस्य भौतिकत्वेन अचेतनत्वात्।

* विक्रिया ज्ञानरूपाऽस्य न नित्यत्वे विरोत्स्यते[1] ।

ज्ञानं पुरुषस्य संप्रयोगे सत्येव जायते । तस्य विभोर्नित्यस्य सर्वदा सर्वाऽर्थसंप्रयोगात् । अतो व्यभिचाराऽभावादविशेषणमिदम् । इन्द्रियाणां त्वचेतनत्वाद् बुद्धिजन्माऽनुपपत्तेरत आह पुरुषेति । "सतीन्द्रियार्ऽर्थसंप्रयोगे पुरुषस्य या बुद्धि" रिति वदता भाष्यकारेण व्यवहितकल्पना दर्शितेति ।

कः पुनः पुरुषः, न तावल्लौकिकः कायः, तस्याऽचेतनत्वात् । अथ आत्मा, स यदि बुद्धिजन्मना विक्रियते, क्षीरवदनित्यः स्यात् । अविक्रियत्वे वा पूर्ववदप्रमातृत्वादसत्तुल्यः स्यात् । यथाऽऽह—

बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाऽविकृतिरात्माऽयं प्रमातेति न युज्यते ॥

तथा—

वर्षांतपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् ।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः ॥ इति ॥

अत आह पुरुष इति । अन्यपरत्वात्सूत्रस्य नात्र तात्पर्यम् । परमार्थतस्तु साधयिष्यमाण एव पुरुषः । स च बुद्धिजन्मना विक्रियत एव । न किंचिद्विकारमात्रेण वस्तु नश्यति कुण्डलादिषु स्वर्णवदिति वक्ष्यते । तदाह विक्रियेति ।

---

* मीमांसका आत्मानं नित्यं मन्यन्ते, तत्कथं सिध्येत् ? ज्ञानजन्मनि विकाराऽऽपत्त्या चर्मवत् अनित्यत्वप्रसक्तेः । ज्ञानजन्मना तु अविकृतस्य पूर्वावस्थायामिव अप्रमातृत्वप्रसंगः एवं हि मन्यन्ते—न किञ्चिद् विकारमात्रेण वस्तु नश्यति, तत्प्रत्यभिज्ञानात् । अत्र बुद्धिजन्म प्रत्यक्षमित्युच्यते । तस्य कोऽर्थः ? किं बुद्धेर्जन्म अतिरिक्तमनतिरिक्तं वा ? यदि अतिरिक्तं तद् वाच्यं कीदृशम् । न च स्वमते जन्मस्वरूपमभिहितम् । यदि वैशेषिकोक्तस्वकारणसमवायो जन्म अभिधीयते, तस्य नित्यत्वेन अक्षानधीनत्वात् प्रत्यक्षशब्दाभिधेयत्वानुपपत्तिः । अनतिरिक्तत्वे तु पुनरुक्ततैव दोषः । अत एवमर्थः क्रियते—नायं बुद्धिजन्मेति षष्ठीसमासः । किन्तु बुद्धिश्चासौ जन्म चेति कर्मधारयः । जन्मशब्दश्च कर्तरि मनिन्प्रत्ययान्तः । तेन जायमाना बुद्धिः प्रमाणमित्युक्तं भवति । न पुनर्वैशेषिकादिवत् नित्यम् अत्यन्तभिन्नं समवायमाचक्ष्महे । कारणदशाविशेष एव कार्यजन्म इत्युच्यते । न तावत् अत्यन्तं कार्यकारणाभ्यां व्यतिरिच्यते ।

[1]. 'विरुध्यते'— ग

बुद्धिजन्मेति चाप्याह जायमानप्रमाणतम् ।. ५३ ।
व्यापारः कारकाणां हि दृष्टो जन्माऽतिरेकतः ।
प्रमाणेऽपि तथा मा भूदिति जन्म विवक्ष्यते ॥ ५४ ॥
न हि तत् क्षणमप्यास्ते 'जायते वाऽप्रमात्मकम् ।
येनाऽर्थग्रहणे पश्चाद् व्याप्रियेतेन्द्रियादिवत्' ॥ ५५ ॥
तेन जन्मैव विषये बुद्धेर्व्यापार [१]इष्यते ।
तदेव च प्रमारूपं तद्वती करणं च धीः ॥ ५६ ॥
जन्म चाऽव्यतिरेकेण भाष्यकारेण वर्णितम् ।
❀ तच्च भूतभविष्यत्त्वात् कृतं बुद्धेर्विशेषणम् ॥ ५७ ॥

बुद्धिजन्मेति । यदि बुद्धेरर्थान्तरं जन्म, तत् किं वैशेषिकोक्तः कारणे कार्यस्य समवाय इति चेन्न तस्य नित्यत्वेनाऽक्षाऽनधीनत्वात् प्रत्यक्षत्वाऽनुपपत्तेः । अथ नाऽर्थान्तरं, ततः पुनरुक्तमत आह बुद्धीति । कर्तृवचनोऽयं जन्मशब्दो बुद्धिसमानाधिकरणः । जायमाना बुद्धिरित्यर्थः । कीदृशी पुनर्जननक्रिया यस्यां कर्तृत्वम् उपादानकारणदशाविशेषः, यदनन्तरं कार्यस्य सत्ता तस्यापि दशाविशेषस्य ततः प्राच्यवस्थैव । ततः प्रागपि तथेत्यनादिरेषाऽऽगन्तुककार्यकारणपरम्परा न तु समवायो जन्म, नाऽपि तस्य नित्यत्वमिति ॥ ५२ ॥ ५३ ॥

जायमानाऽवस्थाविशेषोपादानस्य प्रयोजनमाह व्यापार इति ॥ ५४ ॥

किमिति पुनः कारकान्तरवैधर्म्यं प्रमाणस्याऽत आह न हीति । अस्थायित्वादस्य जन्मनोऽतिरिक्तव्यापारासम्भव इति । यद्यपि स्थायि, तथापि जायानमेव तन्नाऽप्रमात्मकं जायते, येन पश्चादिन्द्रियवद् व्यापारान्तरमर्थप्रकाशने स्यादित्याह जायत इति पादत्रयेण ॥ ५५ ॥

नन्वक्रियस्य कथं कारकवाचिभ्यां करणं प्रमाणमिति सामान्यविशेषशब्दाभ्यामभिधानमत आह तेनेति । जन्मैवास्य क्रियेति नाऽक्रियत्वम्, तदेव चाऽर्थप्रकाशनफलविशेषात्प्रमा, तद्योगाद्धीः करणम् । चशब्दात्प्रमाणं चोच्यत इति ॥ ५६ ॥

इदं च बुद्धिजन्मनोरनतिरिक्तत्वं "या बुद्धिर्जायत" इति वदता भाष्यकरेण दर्शितमित्याह जन्मेति । जायमानविशेषणस्याऽन्यदपि प्रयोजनमाह तच्चेति । तदभावे भूता भविष्यन्ती वेत्यपि शङ्क्येत अतोऽस्मात् द्वयाद्विशेषणं व्यवच्छेदकं जन्मग्रहणमिति ॥ ५७ ॥

---

❀ बुद्धिः प्रमाणमित्येतावति उक्ते भूता भविष्यन्ती वा प्रमाणमित्यपि केचित् संभावयेयुः । अतः तदाशंकानिराकरणार्थं जायमानविशेषणोपादानम् ।

१. 'उच्यते'—ख

यदाऽप्यौ[1]लूक्यसिद्धान्तात् समवायस्य जन्मता ।
[2]बुद्धिस्तत्रेन्द्रियाधीना तेन प्रत्यक्ष[3]मश्नुते ॥ ५८ ॥

बुद्धिर्वा, जन्म वा, सन्निकर्षो वेति नैषां कस्यचिदवधारणार्थमेतत्सूत्रम् । सतीन्द्रियार्थसम्प्रयोगे नासतीत्येतावदवधार्यते । अनेकस्मिन्नवधार्यमाणे भिद्येत वाक्यम् ।

प्रमाणफलभावश्च[4] यथेष्टं परिकल्प्यताम् ।
सर्वथाऽप्यनिमित्तत्वं विद्यमानोपलम्भनात् ॥ ५९ ॥
※ [5]यद्वेन्द्रियं प्रमाणं स्यात्, तस्य [6]वाऽर्थेन सङ्गतिः ।
मनसो वेन्द्रियैर्योग, आत्मना, सर्व एव वा ॥ ६० ॥
तदा ज्ञानं फलं तत्र व्यापाराच्च प्रमाणता ।
व्यापारो न यदा तेषां तदा नोत्पद्यते फलम् ॥ ६१ ॥

भवतु वा वैशेषिकसिद्धान्तात्समवायो जन्म । स च नित्यः । तथापि तस्याऽक्षाधीनाऽभिव्यक्तिरित्युपपन्नं प्रत्यक्षत्वमित्याह यदेति ॥ ५८ ॥

"बुद्धिर्वा जन्म वे" ति भाष्यार्थं दर्शयति प्रमाणेति । अनादरे कारणमाह सर्वथेति ॥ ५९ ॥

यथेष्टकल्पनामेव प्रपञ्चयति यद्वेति । आत्मना मनसो योग इत्यनुषङ्गः, सर्वएव वा समुच्चिता इति ॥ ६० ॥

एषु प्रमाणेषु फलं दर्शयति तदेति । करणानां हि काष्ठादीनां पाकादिक्रिया, तत्साध्यं वौदनादि फलम्, तद्वदिहाऽपीन्द्रियादीनां ज्ञानं फलं प्रमेयज्ञानमित्यर्थः । कथं पुनरेतेषां प्रामाण्यमत आह तत्रेति । सर्वाणि तानि ज्ञानोत्पत्तौ व्याप्रियन्त इति । व्यापार एव कुतोऽवगम्यते, अत आह व्यापार इति स्वप्नादाविन्द्रियादिव्यापाराऽभावे ज्ञानाऽनुदयात्सति चोन्मीलनादिव्यापारे तदुदयात्तद्व्यापाराधीनता ज्ञानफलस्याऽवगम्यत इति ॥ ६१ ॥

---

१. 'त्वौलूक्य' - क ख  २. 'व्यक्तितस्ये'—ख ग  ३. 'मुच्यते;—क ख
४. 'स्तु'—क ख  ५. 'यद्वे'—ख ग  ६. 'वाक्षेण'— ग

※ 'प्रमाणफलभावश्च यथेष्टं परिकल्प्यताम्, इत्यत्रोक्तां यथेष्टतां दर्शयति इन्द्रियं वा प्रमाणम्, इन्द्रियार्थसन्निकर्षो वा, इन्द्रियमनःसंयोगो वा, आत्ममनः-संयोगो वा, सर्वसंयोगो वा । "आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन,' इति संयोगत्रितयमेकंवा प्रमाणम्, यतः प्रमाणशब्दः करणवाची, साधकतमं, करणम्; तमवर्थश्चातिशयः । सचापेक्षित इति विवक्षावशेन अत्रातिशयकल्पना । अतः प्रमाणविकल्पः पञ्चधा दर्शितः ।

न च सर्वात्मनाऽक्षेण सम्बन्धोऽर्थस्य विद्यते ।
येन सर्वाऽर्थबोधः स्यात्तत्प्रमाणाऽभिधायिनाम् ॥ ६२ ॥

[1]प्राप्तिमात्रं हि [2]सम्बन्धो नेन्द्रियस्याऽभ्युपेयते ।
मा भूत्कारण[3]मात्रेण त्वचा रूपाऽवधारणम् ॥ ६३ ॥

यथा प्रमाणनिष्पत्तौ योग्यत्वादिन्द्रियाऽर्थयोः ।
नियता सङ्गतिर्हेतुः फलेऽप्येवं भविष्यति ॥ ६४ ॥

योगस्य द्वयाश्रयत्वेऽपि भवत्यन्यतराश्रयः ।
व्यपदेशोऽथ वाऽप्यक्षं तत्राऽसाधारणं भवेत् ॥ ६५ ॥

यत्त्विन्द्रियार्थसङ्गतिप्रमाणपक्षे त्वचा रूपादयोऽपि बुध्येरन्, तेषामपि स्पर्शवत्संयुक्तसमवायसद्भावादतो ज्ञानमेव प्रमाणम्, तस्य तु कारणमात्रमिन्द्रियार्थसम्बन्ध इति परैरुक्तम्, तत्राह न चेति ॥ ६२ ॥

कथं न विद्यतइत्यत आह प्राप्तीति । किमिति नाऽभ्युपेयते, अत आह मा भूदिति । प्रमाणकरणमिन्द्रियार्थसम्बन्ध इत्यत्रापि पक्षे तुल्योऽयं दोषः । त्वचा रूपाऽवधारणं स्यादिति तत्रापि प्राप्तिसद्भावादिति ॥ ६३ ॥

अतो यथा प्रमाणनिष्पत्तौ योग्यतासहितैव प्राप्तिः कारणं न प्राप्तिमात्रम्, एवं फलनिष्पत्तावपीति नाऽतिप्रसङ्ग इत्याह यथेति । योग्यत्वादिति । तत्रैव कार्यदर्शनेन योग्यत्वाऽवगमादिति ॥ ६४ ॥

ननूभयाऽऽश्रितो योगः, तस्य 'सत्संप्रयोग' इत्यादिके सूत्रे प्रत्यक्षमिति यो व्यपदेशः सोऽनुपपन्नः, इन्द्रियाऽर्थसम्बन्धनिमित्तत्वाद्, व्यपदेशस्य चोभयाश्रितत्वात् प्रत्यर्थमिति व्यपदेशोऽपि किं न स्यादत आह योगस्येति । अर्थसम्बन्धस्य प्रमाणाऽन्तरसाधारणत्वाद् वा प्रत्यक्षमिति व्यपदेश इत्याह अथ वेति । यद्वा किमक्षेणैव व्यपदिश्यते प्रत्यक्षमिति न पुनरर्थेनापि, इत्यत आह योगस्येति । यथा लोके डित्थडपित्थमाता डित्थमातेति । परिहारान्तरमाह अथ वेति : विशिष्टज्ञानफलोपाधिर्ह्यत्र प्रत्यक्षशब्दः, तस्य चाऽक्षमसाधारणमिति तेनैव व्यपदेशो नाऽर्थेन, तस्य ज्ञानान्तरकार्यान्तरसाधारणत्वात् । अत्र प्रमाणफलयोर्विषयैकत्वं विस्पष्टम्, इन्द्रियसम्बन्धस्याऽर्थाश्रयत्वाज्ज्ञानस्यापि तद्विषयत्वादिति ॥ ६५ ॥

---

१. 'प्रमाणमात्रं'— ग
२. 'संयोग'—ख
३. 'मात्रेऽपि त्वया' – ग

'संयोगे त्वात्ममनसोः स्याच्चेद्विषयभिन्नता ।
प्रमाणफलयो' र्नाऽसावर्थे हि [1]व्याप्तं द्वयम् ॥ ६६ ॥

अथाऽप्याश्रय इष्टस्ते [2]न योगाद्विषयान्तरम् ।
आत्मस्थत्वेन विज्ञानं [3]न भिन्नविषयं ततः ॥ ६७ ॥

प्रकृष्टसाधनत्वाच्च प्रत्यासत्तेः स एव नः ।
करणं तेन नाऽन्यत्र कारके स्यात् प्रमाणता ॥ ६८ ॥

प्रमाणे सर्वसंयोगे दोषो नैकोऽपि विद्यते ।
प्रमाणं त्विन्द्रियं यस्य तस्यैको विषयः स्फुटः ॥ ६९ ॥

आत्मनःसंयोगप्रमाणपक्षे तस्यात्ममनोऽधिष्ठानत्वात् ज्ञानस्य त्वर्थविषयत्वाद्विषयभेदः स्यादिति शङ्कते **संयोगइति फलयोरन्तेन** । निराकरोति **नासाविति** । कारणमाह **अर्थे इति** । एतावदेव हि लोके क्रियाकारकयोरेकविषयत्वं, यत् यत्र परश्वादिकं व्याप्रियते तत्रैव च्छिदेति, तद्वदिहाप्यात्ममनःसंयोगस्याऽर्थे विषये व्यापारादस्ति ज्ञानसमानविषयतेति ॥ ६६ ॥

यदि त्वाश्रयो विषयस्तदा ज्ञानस्याऽप्यात्माश्रयत्वादस्त्येव विषयैक्यमित्याह **अथाऽपीति** ॥ ६७ ॥

अयमेव चात्मनःसंयोगो ज्ञानस्यैकार्थसमवायित्वेन प्रत्यासन्नत्वात् प्रकृष्टं साधनं करणमिति तस्यैव प्रामाण्यं युक्तं न कारकान्तरस्येत्याह **प्रकृष्टेति** ॥६८॥

सर्वसंयोगप्रमाणपक्षेऽपि व्यापारतः समानविषयत्वं योग्यतावशेन चाऽतिप्रसङ्गपरिहार इति न कश्चिद्दोष इत्याह **प्रमाणइति । सर्वसंयोगइति** । आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति हि सन्निकर्षत्रयं पक्षे न्यायविदः संगिरन्ते । तदस्य त्रयस्यापि तुल्यत्वविवक्षया यदा प्रामाण्यं तदा न कश्चिद्दोष इति । इन्द्रियप्रामाण्ये ऽपि तस्याऽर्थप्राप्तस्य तद्विषयत्वाद्व्यक्तमेव विषयैक्यमित्याह **प्रमाणमिति** । मनइन्द्रियसंयोगप्रामाण्येऽप्यात्ममनःसंयोगवद् व्यापारतः समानविषयत्वमित्यूहनीयम् ॥ ६९ ॥

---

१. 'प्रत्यक्षं'—ग
२. 'विज्ञेया'— ख
३. 'अभिन्न'— ग

ॐ प्रमाणफलते बुद्ध्योर्विशेषणविशेष्ययोः ।
यदा तदापि पूर्वोक्ता भिन्नार्थत्व[1]निराक्रिया ॥ ७० ॥

'विशेषणे तु बौद्धव्ये यदालोचनमात्रकम् ।
प्रसूते निश्चयं पश्चात्तस्य प्रामाण्यकल्पना ॥ ७१ ॥

निश्चयस्तु फलं [2]तत्र' 'नाऽसावालो[3]चितो यदा ।
तदा नैव प्रमाणत्वं स्यादर्थाऽनवधारणात्' ॥ ७२ ॥

हानादिबुद्धिफलता प्रमाणं चेद्विशेष्यधीः ।
उपकारादिसंस्मृत्या व्यवायश्चे[4]दियं फलम् ॥ ७३ ॥

एवं तावदिन्द्रियादिप्रामाण्यपक्षे फलं विषयसाम्यं चोक्तम् । इदानीं ज्ञानप्रामाण्येऽप्युभयं दर्शयति **प्रमाणेति** । विशेषणज्ञानपूर्वकं विशेष्यज्ञानम्, तत्र विशेष्यज्ञानं फलम्, विशेष्यज्ञानसिद्ध्यर्थत्वाच्च विशेषणज्ञानस्य व्यापारतः समानविषयत्वं पूर्ववदुक्तमेवेति ॥ ७० ॥

यदा तर्हि विशेषणपर्यन्तैव प्रमितिस्तदा किं फलमत आह **विशेषणे इति** सपादेन । सर्वत्रैव तावदिन्द्रियाऽर्थसंप्रयोगाऽनन्तरमनिश्चयात्मिका बुद्धिरालोचनमात्ररूपा जायते । सा च पश्चान्निश्चयं प्रसूते । तत्राऽऽलोचनं प्रमाणम्, तस्य तु निश्चयः फलमिति । यदा पुनरालोचिते निश्चयो न जायते तदाऽर्थाऽनवधारणात् उत्प्रेक्षा ज्ञानवदर्थप्रकाशने सत्यपि नास्ति प्रामाण्यं नापि फलमित्याह **नाऽसाविति** पादत्रयेण ॥ ७१ ॥ ७२ ॥

यदा तु विशेष्यबुद्धिरेव प्रमाणं तदा हानोपादानोपेक्षाबुद्धयः फलमित्याह **हानादीति** । शङ्कते **उपकारादीति** । परिहरति **इयमिति** । इयमेवोपकारादिस्मृतिरव्यवहिता फलमस्तु नात्राऽभिनिवेश इति ॥ ७३ ॥

---

ॐ नैयायिकपक्षेऽपि परिहर्तुमाह प्रमाणफलते इति ।

१. 'निवारणा'—ख
२. 'तस्य'—
३. 'चिते'—ख 'किते'—ग
४. 'दिदं' ग

※ विषयैकत्वमिच्छंस्तु यः प्रमाणं फलं वदेत् ।
साध्यसाधनयोर्भेदो लौकिकस्तेन [1]बाधितः ॥ ७४ ॥

छेदने खदिरप्राप्ते पलाशे न च्छिदा यथा ।
तथैव परशोर्लोके च्छिदया सह नैकता ॥ ७५ ॥

[2]भवते भेदहानेन रुचिता विषयैकता ।
तत्त्यागेन परेभ्यस्तु भेदो रुचिमुपागतः ॥ ७६ ॥

करणत्वोपचारस्तु [3]फले [4]चेत्कल्प्यते त्वया ।
कथञ्चिद्विषयैकत्वं परैर्वा किं न कल्प्यते ॥ ७७ ॥

परिच्छेदफलत्वेन वृत्तस्याऽनन्तरस्य नः ।
[5]प्रमाणत्वं भवेज्ज्ञाने प्रमाणे तु परं फलम् ॥ ७८ ॥

यत्तु बौद्धैर्विषयैकत्वतृष्णया ज्ञानमेव प्रमाणं फलं चेत्युक्तम्, तदलौकिकमित्याह विषयेति ॥ ७४ ॥

कथं भेदस्य लौकिकत्वमित्याह च्छेदनइति । विषयैकत्ववत् क्रियाकारकयोः स्वरूपभेदोऽपि लोकसिद्ध एव च्छेदने परश्वादिवदिति । सत्यम्, द्वयं दृष्टम्, इह तूभयाऽसम्भवात् विषयैक्यमेव भेदहानेनास्मभ्यं रोचत इति चेत्,तर्हि परैर्नैयायिकादिभिरिन्द्रियादिप्रामाण्यवादिभिरपि विपरीतं वक्तुं शक्यमिति सोपहासमाह भवतइति ॥ ७५ ॥ ७६ ॥

फलमेव ज्ञानं, तस्य चौपचारिकं प्रामाण्यमिति शङ्कते करणत्वेति । परिहरति कथं चिदिति । पूर्वोक्तेन मार्गेण व्यापारतः समानविषयत्वमस्माभिर्वा किं न कल्प्यते, तथा सत्युभयमपि सुस्थं भवति न किं चिदौपचारिकमिति ॥ ७७ ॥

उपसंहरति परिच्छेदेति । परिच्छेदस्य ज्ञानस्य फलत्वेनाऽनन्तरवृत्तस्येन्द्रियादेः प्रामाण्यम्, ज्ञानस्य तु प्रमाणत्वे परं विशेष्यादिज्ञानं फलमिति ॥७८॥

---

※ मीमांसकपक्षे नैयायिकपक्षेच प्रमाणफलयोर्भेदं विषयैक्यं चोक्त्वा इदानीं बौद्धपक्षे प्रमाणफलभावं दूषयति । पूर्वं तावत् सौत्रान्तिकपक्षे दूषणं ब्रवीति ।

१. 'बोधित'—ग
२. 'भवस्य'—ग
३. 'फले'—ख
४. 'क्व'— ग
५. 'करणत्वं'—ख

स्वसंवित्तिफलत्वं तु तन्निषेधान्न [1]युज्यते ।
प्रमाणे विषयाऽऽकारे भिन्नार्थत्वं न युज्यते ॥ ७९ ॥

स्वाऽऽकारश्च स्वसंवित्तिं मुक्त्वा नाऽन्यः प्रतीयते ।
प्रामाण्यं यस्य कल्प्येत स्वसंवित्तिफलं प्रति ॥ ८० ॥

यत्तु सौत्रान्तिकैरुक्तम्, ज्ञानस्य विषयाकारो नीलपीतादिरूपाऽर्थेन ज्ञाने आहितः, स प्रमाणम्, तन्निबन्धनत्वान्नीलपीतादिविषयव्यवस्थायाः, स्वसंवित्तिस्तु फलम्, बाह्यार्थस्तु प्रमेय इति, यदाहुः—

विषयाकार एवास्य प्रमाणं तेन मीयते ।
स्वसंवित्तिः फलं चास्य तद्रूप्ये ह्यर्थनिश्चयः ॥ इति ।

तन्निराकरोति स्वसंवित्तीति । निषेत्स्यते शून्यवादे स्वसंवित्तिरिति । किं चैवं विषयभेदो ऽपीत्याह प्रमाणइति । विषयाऽऽकारो हि प्रमाणं ते, प्रमाणं च प्रमेयविषयम्, नीलादिकं च प्रमेयमिति विषयाकारो विषयविषयः, स्वसंवित्तिस्तु विज्ञानविषयेति विषयभेद इति ॥ ७९ ॥

योगाचारास्तु बाह्यार्थमपलपन्तो ज्ञानस्यैवानाऽदिवासनोपप्लावितो नीलपीतादिविषयाकारः प्रमेयम्, स्वाकारः प्रमाणम्, स्वसंवित्तिः फलमिति मन्यन्ते यथाहुः—

यदाभासं प्रमेयं तत्प्रमाणफलते पुनः ।
ग्राहकाऽऽकारसंवित्त्योस्त्रयं नाऽतः पृथक् कृतम् ॥ इति ।

तान् दूषयति स्वाकारइति । स्वसंवित्तिस्तावन्निषेत्स्यत एव । यश्चाऽयं स्वाऽऽकारः प्रमाणत्वेन कल्पितः सोऽपि स्वसंवित्तेरन्यो न गम्यते, स्वसंवित्तिरेव ज्ञानस्याकारः, न हि स्वस्य संवित्तिः स्वसंवित्तिरिति सम्भवति, संविदन्तराऽनभ्युपगमादिति ॥ ८० ॥

---

योगाचारपक्षे प्रमाणफलभावं निराकरोति । तस्य चैतद्दर्शनम्—बाह्यार्थो नास्ति, विज्ञानस्य विषयाकारता प्रमेया, स्वाकारता प्रमाणम् स्वसंवित्तिः फलम् । तदुक्तम्—

"यदा भासं प्रमेयं तत् प्रमाणं फलते पुनः ।
ग्राहकाकारसंवित्योस्त्रयं नातः पृथक् कृतम् ॥

१. 'युज्यते'—ख

स्वाऽऽकारस्य परिच्छेदो न चाऽऽकारान्तराद्विना ।
तस्याप्येवं तथा च स्यान्नाऽऽकारान्तः कदाचन ॥ ८१ ॥

न चाऽसंचेतितः सत्तां स्वाऽऽकारः प्रतिपद्यते ।
ग्राह्ये चाऽविषयाऽऽकारे ग्राहकोऽन्यो न लभ्यते ॥ ८२ ॥

मनस्त्विन्द्रियत्वेन प्रत्यक्षा धीः सुखादिषु ।
मनसा सम्प्रयुक्तो हि [1]तान्यात्मा प्रतिपद्यते ॥ ८३ ॥

सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना ।
सामान्यं वा विशेषो वा ग्राह्यं नाऽतो ऽत्र कथ्यते[2] ॥ ८४ ॥

किं चाऽयं स्वाऽऽकारः परिच्छिन्नो वा प्रमाणमपरिच्छिन्नो वा ? परिच्छेदस्तावत् स्वेनैव स्वस्य न सम्भवति विषयाकारस्य प्रमेयत्वहानात् । अत आकारान्तरमप्यङ्गीकर्त्तव्यम्, न च तदस्ति, भावे वा तस्याऽप्याकारान्तरकल्पनायामनवस्थेत्याह स्वाऽऽकारस्येति ॥ ८१ ॥

अपरिच्छिन्नस्तु सत्तामेव न लभते कुतस्तस्य प्रामाण्यमित्याह न चेति । न चाऽस्माकमिव ज्ञानस्य पश्चादन्येन ग्रहणं सम्भवति, सर्वसंविदां स्वांशपर्यवसायित्वादिति । यदा चैवं स्वाकारोऽपलपितस्तदा तदधीनग्रहणस्य विषयाऽऽकारस्याऽऽप्यसिद्धिरेवेत्याह ग्राह्ये इति ॥ ८२ ॥

ननु भवताऽपि सुखदुःखेच्छादीनां स्वसंवेद्यत्वमेष्टव्यम्, अन्यस्य वक्त्रादेस्तद्ग्राहकत्वाऽभावादत आह मनस इति । किमिन्द्रियं मन इत्येतावता तज्ज्ञानं प्रत्यक्षम्, कः पुनर्ममनसः सुखादिभिः संनिकर्षः, अत आह मनसेति । मनसा, मनःसंज्ञकेनेन्द्रियेण संयुक्त आत्मा स्वसमवेतान् सुखादीन् संयुक्तसमवायसंनिकर्षेण प्रतिपद्यत इति नास्ति तेषामपि स्वसंवित्तिरिति ॥ ८३ ॥

ननु सौगतैर्विशेषविषयत्वं वेदान्त्यादिभिः सामान्यविषयत्वं प्रत्यक्षस्योक्तम् । इदं तु ग्राह्याऽनुपादानात् न्यूनं लक्षणमत आह सम्बद्धमिति । यदेवं योग्यं सम्बद्धं च सामान्यं विशेषो वा तत्सर्वं ग्राह्यमिति न विशेषकथनेन प्रयोजनमिति ॥ ८४ ॥

---

१. 'तेनात्मा'—ख
२. 'कथ्यते'—ख

लक्षणं यच्च यैरुक्तं प्रत्यक्षे लौकिके सति ।
विद्यमानोप[1]लम्भित्वात् सर्वस्यैवाऽनिमित्तता ॥ ८५ ॥
निर्विकल्पकपक्षे तु सुतरामनिमित्तता ।
साध्यसाधनसम्बन्धो नाऽविकल्प्य हि गृह्यते ॥ ८६ ॥

प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारणत्वमिति ॥४॥

कथं प्रत्यक्षपूर्वत्वमनुमानादिनो भवेत् ।
यदा स्मृत्यसमर्थत्वान्निर्विकल्पेन्द्रियस्य धीः ॥ ८७ ॥
'न चाऽविकल्प्य [2]लिङ्गस्य लिङ्गिसम्बन्धयोस्तथा ।
गृहीति' रुपमानेऽपि सादृश्यग्रहणात् [3]स्मृते ॥ ८८ ॥

ननु कल्पनापोढमभ्रान्तं प्रत्यक्षम्, तच्चतुर्विधम्, इन्द्रियजम्, इन्द्रियजसमनन्तरप्रत्ययोद्भवं मानसम्, सर्वचित्तचैत्तानामात्मसंवेदनम्, योगिज्ञानं च । योगिज्ञानमपि भावनाबलजमतीताऽनागतादिविषयमपि कल्पनाऽपोढत्वात्प्रत्यक्षमेव । तेन यद्यपि सत्संप्रयोगजस्य प्रत्यक्षस्य विद्यमानोपलम्भनत्वात् धर्मं प्रत्यनिमित्तत्ता, तथापि कल्पनापोढलक्षणस्य योगिज्ञानस्य तन्निमित्तता भविष्यतीत्यत आह लक्षणमिति । सर्वमेव प्रत्यक्षं विद्यमानोपलम्भनं लोके, अतो यस्मिन्कस्मिंश्चिदपि लक्षणे सिध्यत्येवाऽनिमित्तता, भावनाबलजं तु ज्ञानं स्मृतिरेव, अनुभूतविषयत्वाद्भावनायाः तेन प्रामाण्यमेव नास्ति नतरां प्रत्यक्षत्वमित्युक्तम् । कल्पनापोढपक्षे च सुतरामनिमित्ततेत्याह निर्विकल्पकेति । कारणमाह साध्येति । श्रेयःसाधनता हि धर्मता, सा चाऽवश्यमिदमस्य साधनमिति विकल्प्यैव ग्रहीतव्या, नाऽविकल्पितेन शक्या ग्रहीतुमिति ॥ ८५ ॥ ८६ ॥

एवं प्रत्यक्षाऽनिमित्तत्वं प्रतिपाद्य प्रत्यक्षपूर्वकत्वादनुमानोपमानाऽर्थापत्तीनामकारणत्वमुक्तं भाष्यकारेण, तदाक्षिपति कथमिति । कथं वा न भवति, अत आह यदेति । इन्द्रियार्थसामर्थ्यजं ज्ञानं प्रत्यक्षम् न चेन्द्रियस्याऽर्थस्य वा स्मर्तुं सामर्थ्यम् । सविकल्पकं च स्मृत्याकृष्टं जात्यादियोजनयोपजायते अतो निर्विकल्पकमेव प्रत्यक्षमिति ॥ ८७ ॥

ततः किमित्याह न चेति गृहीतिरन्तेन । लिङ्गलिङ्गितःसम्बन्धग्रहणपूर्वकं ह्यनुमानम् । न च निर्विकल्पकेन तद्ग्रहणं सम्भवति, अतो न प्रत्यक्षपूर्वकमनुमानमिति । तथोपमानेऽपि न तत्पूर्वकतेत्याह उपमानइति । गां दृष्ट्वा गवयं तत्सदृशतया विकल्प्य पश्चात्स्मृते गवि सादृश्यं तेन गृह्यते, अतो नाऽविकल्पकपूर्वकमिति ॥ ८८ ॥

---

[1] 'लंभत्वात्'—ख [2] 'लिङ्गि'—ख [3] 'स्मृतः'—ख

अर्थापत्तिः पुनः प्रायोऽनन्यदृष्टेऽर्थ इष्यते ।
प्रवर्तते च यं दृष्ट्वा सोऽप्यर्थः सविकल्पकः ॥ ८९ ॥

यत्र चानुमितं लिङ्गं सूर्यगत्यादि, लिङ्गि च ।
तत्र प्रत्यक्षपूर्वत्वं कथमध्यवसीयते ॥ ९० ॥

प्रत्यक्षाऽवगते चाऽर्थे कुतस्तेषां प्रमाणता ।
तैर्यदा [१]स प्रतीयेत तदा नाऽक्षस्य गोचरः ॥ ९१ ॥

अथ कस्य चिदर्थस्य ज्ञानात् तत्पूर्वता भवेत् ।
तदाऽर्थस्य भविष्यत्त्वं न स्यादज्ञानकारणम् ॥ ९२ ॥

वर्तमाने हि कस्मिंश्चिद्विज्ञातेऽर्थेऽक्षबुद्धिभिः ।
लिङ्गादविद्यमानोऽपि धर्मो गम्येत तैस्तदा ॥ ९३ ॥

प्रत्यक्षेण गृहीत्वा च [१]वर्णान् वेदेऽपि गृह्यते ।
प्रमेयमिति सोऽपि स्यात्तत्पूर्वत्वादकारणम् ॥ ९४ ॥

अर्थापत्तिस्त्वत्यन्ताऽतीन्द्रिये शक्त्यादौ प्रवर्त्तमाना कथं प्रत्यक्षपूर्विकेत्याह **अर्थापत्तिरिति** । मा भूत्प्रमेयप्रत्यक्षपूर्विका, अनुपपन्नं तु प्रत्यक्षेण दृष्ट्वा प्रवर्तत इति तत्पूर्विका भविष्यतीत्यत आह **प्रवर्त्ततइति** । दाहादिकं ह्यनेन विनेदं नोपपद्यत इति विकल्पितमेवाऽर्थापत्त्युदये निमित्तमिति ॥ ८९ ॥

किं च यत्र देशान्तरप्राप्त्यनुमितेन सूर्यगत्यादिना लिङ्गेन गतिकारणं लिङ्ग्यनुमीयते तत्र द्वितीयस्याऽनुमानस्य कथं प्रत्यक्षपूर्वकत्वमित्याह **यत्रेति** । तथा धर्मेऽप्यप्रत्यक्षपूर्वकमनुमानं भविष्यतीति ॥ ९० ॥

किं च विकल्पनीयमिदं प्रत्यक्षपूर्वकत्वम्, यदि तावत् प्रमेयविषयं प्रत्यक्षमपेक्ष्यैषां प्रवृत्तिः ततः प्रामाण्यमेव न स्यादित्याह **प्रत्यक्षेति** । कालभेदात्प्रामाण्यमिति चेत्, ततोऽनवगतविषयत्वान्न प्रत्यक्षपूर्वकतेत्याह **तैरिति** ॥ ९१ ॥

अथ किस्मिंश्चिदर्थे प्रत्यक्षेण गृहीते अनुमानादीनां प्रवृत्तिरिति शङ्कते **अथेति** । दूषयति **तदेति** । अर्थस्य धर्मस्याऽनुमानादिभिरज्ञाने भविष्यत्त्वेन धर्मस्याऽप्रत्यक्षत्वं न कारणं स्यादिति ॥ ९२ ॥

कथमित्याह **वर्त्तमाने इति** । तदा हि वर्त्तमाने किंचित्प्रत्यक्षेण गृहीत्वा भविष्यन्नपि धर्मोऽनुमानादिभिर्गृह्येतेति ॥ ९३ ॥

किं चेदृशं प्रत्यक्षपूर्वकत्वं शब्दस्याप्यस्त्येवेति सोऽपि धर्मनिमित्तं न स्यादित्याह **प्रत्यक्षेणेति** ॥ ९४ ॥

---

१. 'संप्रतीयेत'—ख  १. 'वर्णाद्वेदो'—ख

* केचित् तत्पूर्वकत्वं तु हेतुर्नैवेति मन्वते ।
तत्पूर्वकत्वाद्यत्तावत् प्रामाण्यं तदसम्भवः ॥ ९५ ॥

प्रत्यक्षेण गृहीत्वा च लिङ्गाद्यन्यतमं[1] ध्रुवम् ।
प्रवृत्तिरनुमानादेर्न च धर्मेऽस्ति तादृशम् ॥ ९६ ॥

अनुमानानुमानादेर्न चाप्यस्तीह सम्भवः ।
[2]सम्बन्धलिङ्गिलिङ्गानां पूर्वसिद्धेरसम्भवात् ॥ ९७ ॥

एवमाक्षिप्तं भाष्यमेकेषां मतेन समाधत्ते केचिदिति । किं तर्हीत्याह तत्पूर्वकत्वादिति । प्रत्यक्षाऽगृहीते धर्मे यत्तत्पूर्वकतया प्रामाण्यमन्येषां, तत्तावन्नास्तीत्येतावदुच्यत इति ॥ ९५ ॥

एवं तु प्रमाणान्तराणामनिमित्तत्वे हेत्वनभिधानान्मदफलं भाष्यं स्यादिति मत्वा स्वमतेन समाधत्ते प्रत्यक्षेणेति । सविकल्पकमपि प्रत्यक्षमित्युपपादयिष्यते । एवं च सामान्यतो वा विशेषतो वा प्रत्यक्षगृहीते एवार्थेऽनुमानादिप्रवृत्तिः, सम्बन्धग्रहणाऽपेक्षत्वादगृहीते सम्बन्धिनि तद्ग्रहणाऽसम्भवात् लिङ्गादीति । लिङ्गत्वेन वा सदृशत्वेन वा धूमगवयादिकं गृहीत्वाऽनुमानादेः प्रवृत्तिः, न चाऽगृहीतेऽग्नौ गवि वा तल्लिङ्गतया तत्सदृशतया वा धूमगवयादिग्रहणं सम्भवति । तदनेन प्रकारेणाऽनुमानादिप्रमेयस्यैव प्रत्यक्षग्रहणाऽपेक्षा दर्शिता भवति । धर्मस्य चाऽप्रत्यक्षत्वेन तल्लिङ्गं तत्सदृशं वा न शक्यं ग्रहीतुमिति नाऽनुमानादेर्धर्मं प्रति निमित्ततेति ॥ ९६ ॥

न चाऽनुमिताऽनुमानमपि धर्मे सम्भवति, तस्यापि प्रत्यक्षपूर्वकत्वात् । यावद्धि न कार्यं कारणं तयोश्च सम्बन्धः प्रत्यक्षेण गृहीतः न तावदनुमितयाऽपि गत्या तत्कारणमनुमातुं शक्यम् । न च धर्मे तथा सम्भवति । तस्य क्वचिदप्यनवगमादित्याह—अनुमानेति ॥ ९७ ॥

---

* न धर्मं प्रति अप्रामाण्ये साध्ये प्रत्यक्षद्वारत्वादित्ययं हेतुरुपदिश्यते अपि तु यत्प्रत्यक्षपूर्वकत्वेन प्रामाण्यमित्येतदनूद्य तस्य धर्मं प्रति असम्भवः इत्येतदत्र विधीयते इत्यभिप्रायः ।

१. 'न्यतमत्'—गं

२. 'संबंधि'—ग

❀ सत्ता च नाऽनुमानेन कस्य चित्प्रतिपद्यते ।
धर्मेणाऽन्यद्विशेष्यं चेत्, पक्षोऽसिद्धविशेषणः ॥ ९८ ॥

'तस्माददृष्टपूर्वत्वात्केन चिद्वस्तुना सह ।
धर्मस्य नाऽनुमेयत्वमसाधारणवस्तुवत् ॥ ९९ ॥

अदृष्टसदृशत्वाच्च स्वयं चाऽनुपलम्भनात् ।
धर्मस्य नोपमेयत्वमसाधारणवद्भवेत्' ॥ १०० ॥

नन्वर्थापत्तिरेवं स्याज्जगद्वैचित्र्यदर्शनात् ।
सुखिदुःख्यादिभेदो हि नाऽदृष्टात्कारणादृते ॥ १०१॥

कथं च धर्मानुमानम् ? न तावद्धर्मोऽस्तीति शक्यमनुमातुमत आह–सत्तेति । शङ्कते धर्मेणेति । परिहरति पक्ष इति । धर्मस्य क्व चिदपि प्रमाणेन सिद्ध्यभावात् । न ह्यप्रमितसद्भावेन वस्तुना शक्यमन्यद्विशेष्टुम् । न तर्हि धर्माऽनुवादेन प्रमाणविधिः सिध्येत् । सत्यम्, यदि विद्यमानो यो धर्म इत्यनूद्येत । यदा तु योऽयं निष्प्रमाणत्वादिविवादास्पदीभूत इत्यनूद्यते तदा विवादास्पदीभूतस्याऽनूद्यमानरूपस्य प्रमाणसिद्धिरस्त्येव । अनूद्यमानसिद्धिरेव चानुवादस्याऽपेक्षिता, न धर्मस्वरूपस्य । ये तु तस्यापि सामान्यतः सिद्धिमेव मन्यन्ते तेषां कुतः सिद्धिरिति वक्तव्यम् । 'पक्षोऽसिद्धविशेषण' इति च ग्रन्थविरोधः । तथा परीक्षाविशेषं दर्शयता न चाऽन्यन्नाऽपि चोदनेत्ययमपि पक्षो दर्शितः, तस्मिंश्च पक्षे विद्यमाने कथं वा सामान्यसिद्धिरविवादा स्यात् । अभावनिराकरणं च "अभावोऽपि नास्ति" इति भाष्यकारस्याऽसङ्गतं स्यादित्यास्तां तावत् ॥ ९८ ॥

एवमुपपादितमनुमानाद्यविषयत्वं सौगतान् प्रति प्रयोगेण दर्शयति तस्मादिति द्वयेन । असाधारणं हि सौगतानामपि अविकल्पत्वान्नाऽनुमानादिगम्यमिति ॥ ९९ ॥ १०० ॥

चोदयति नन्विति । एवमिति । प्रमाणं स्यादित्यर्थः । वैचित्र्यमेव दर्शयति सुखीति ॥ १०१ ॥

---

❀ स्वतंत्रस्य धर्मस्य अनुमेयत्वम्, अस्ति धर्मः इति अन्यविशेषणस्य वा ? न तावत् स्वतंत्रस्य, यतः सत्तायां हि साध्यायां भावधर्मस्य हेतुत्वं स्यात् ? अभावधर्मस्य वा ? उभयधर्मस्य वा ? तत्र भावधर्मस्य अनैकान्तिकत्वम् । अथ धर्मवानयं पुरुषः इत्येवं साध्यते, तत्रापि असिद्धविशेषणत्वं पक्षस्येत्यर्थः ।

दृष्टस्य व्यभिचारित्वात्तदभावेऽपि सम्भवात् ।
सेवाऽध्ययनतुल्यत्वे दृष्टवा च फलभिन्नता ॥ १०२ ॥

* स्यादेवं यदि शक्येत स्वाभाविकनिवारणा ।
[3]कर्मशक्तेश्च वैचित्र्ये हेतुरन्यो भवेद्यदि ॥ १०३ ॥

□ यथा [4]च फलवैचित्र्ये कर्मणां शक्तता स्वतः ।
तथा [5]च चित्रता लोके स्वभावादुपपत्स्यते ॥ १०४ ॥
अधर्मे धर्मरूपे वा ह्यविभक्ते फलं प्रति ।
किमप्यस्तीति विज्ञानं नराणां क्वोपयुज्यते ॥ १०५ ॥

कथमित्याह दृष्टस्येति । कस्य चित्प्रयस्यतोऽपि धनं न भवति, कस्य चिदप्रयस्यतो ऽपि भवतीति व्यभिचारमेवोदाहरणेन दर्शयति सेवेति ॥ १०२ ॥

निराकरोति स्यादेवमिति । न च सा शक्येत्याह कर्मेति । यदि ब्रह्महत्याऽश्वमेधयोः शक्तिवैचित्र्ये स्वभावादन्यो हेतुः स्यात् ततो निवार्येत स्वाभाविकत्वम्, न चाऽसावस्तीत्यतो यथा कर्मशक्तिवैचित्र्यं स्वाभाविकमेवं जगद्वैचित्र्यमेवास्तु, किमन्तर्गडुना कर्मणेत्याह यथा चेति ॥ १०३ ॥ १०४ ॥

नन्वव्यभिचारात्कर्मशक्तीनां युक्तं स्वाभाविकत्वम् । न चैवं जगद्वैचित्र्यस्य सम्भवति । एकस्यैव हि दारिद्र्यमैश्वर्यं च पर्यायेण दृश्यते, तत्स्वाभाविकत्वेऽनुपपन्नम् । अतोऽवश्यंभाविनि कारणे दृष्टस्य व्यभिचाराददृष्टं कल्प्यमत आह अधर्म इति । भवत्वेवम्, तथापि दुःखफलसाधनमधर्मो ब्रह्महत्यादिः सुखफलहेतुश्च धर्मोऽग्निहोत्रादिः, सुखेऽपीदं स्वर्गस्य साधनमिदं पशोरिति यावत्फलविशेषं प्रति धर्माऽधर्मौ न विभज्येते तावत्किमप्यदृष्टमस्तीति एतावदर्थापत्तिज्ञानमनुपयोगीति ॥ १०५ ॥

---

* लोकायतदर्शनानुसारेण परिहारः ।

□ अदृष्टमपि जगद्वैचित्र्योपपादकं विचित्रमेव अभ्युपगन्तव्यम् । तच्चापि वैचित्र्यम्, अदृष्टस्य स्वाभाविकम् अदृष्टान्तरकल्पानायामनवस्थाप्रसङ्गात् । एवं च सति जगद्वैचित्र्यमेव स्वाभाविकं भविष्यतीत्यपार्थकमदृष्टकल्पनम् ।

३. 'धर्म' – ख

४. 'वा'—ख

५. 'वि' —ख, 'पि' – ग

'किं नु यागादितो दुःखं हिंसादेः किं सुखोद्भवः ।
स्वर्गपुत्रादिभेदश्च कीदृशात् कर्मभेदतः ॥ १०६ ॥

इति यावदविज्ञानं तावन्नैव प्रवर्तते ।
प्रवृत्त्यङ्गं च यज्ज्ञानं तस्य मूलं प्रतीक्ष्यते ॥ १०७ ॥

तस्मात्सिद्धेऽपि सामान्ये विशेषो नाऽऽगमादृते ।
* विशेषस्य तु जिज्ञासा सूत्रकारेण सूत्रिता ॥ १०८ ॥

गम्यमाने विशेषे च तदन्तर्भावकारितः ।
सामान्यप्रत्ययोऽपि स्याच्छास्त्रादेवेत्यकारणम् ॥ १०६ ॥

यथाऽर्थापत्तिरेवं च नाऽनुमा, नोपमेष्यते ।
शास्त्रं चेत्तदपेक्षेत तस्यैव स्यात्प्रमाणता ॥ ११० ॥

एतदेव विवृणोति किं न्विति सार्द्धेन । मा प्रवर्तिष्ट, सिद्धं तावदर्थापत्तिरपि धर्मे प्रमाणमिति । तथा च चोदनैवेत्यवधारणाऽसम्भवः, अत आह प्रवृत्त्यङ्गमिति । प्रवृत्त्यङ्गं यत् ज्ञानं तत्र चोदनैव कारणमिति नात्राऽर्थापत्तिमूलं विवक्षितमित्यर्थः ॥ १०६ १०७ ॥

अतोऽर्थापत्तेः सामान्ये मानत्वेऽपि विशेषे चोदनैवेति प्रतिज्ञासिद्धिरित्युपसंहरति तस्मादिति । सूत्रकारेणाऽपि न सामान्यमात्रजिज्ञासा सूत्रिता तन्मात्रस्याऽप्रयोजनत्वात् । किं तु विशेषपर्यन्तैवेत्याह विशेषस्येति । न सामान्यस्यैव किं तु विशेषस्यापीत्यर्थः । विशेषपर्यन्तैति यावदिति ॥ १०८ ॥

नन्वर्थापत्तेः सामान्यस्य, विशेषस्य, चाऽऽगमात् सिद्धेः समुच्चितयोः प्रामाण्येन चोदनैवेत्यवधारणाऽसिद्धिरत आह गम्यमानइति । सामान्यं हि साधयन्ती अर्थापत्तिः न विशेषं निर्धारयितुमलम्, विशेषं तु साधयच्छास्त्रमन्तर्णीतसामान्यमेव साधयतीति किं प्रमाणान्तरेणेति ॥ १०६ ॥

केचित्त्विमामेव वैचित्र्यार्थापत्तिमनुमामेव कार्यात्कारणगोचरां मन्यन्ते सा ह्यर्थापत्तिवदेव निराकार्येत्याह यथेति । सापि सामान्यमात्रसाधनादनुपयोगिन्येव । उपमाग्रहणं दृष्टान्त इति । अथ तदेव शास्त्र मनुमाऽप्यपेक्षते, ततस्तदेवास्तु प्रमाणम्, किमनुपयोगिन्याऽनुमयेत्याह शास्त्रमिति ॥ ११० ॥

---

* अधर्मे धर्मरूपेवेत्यारभ्य सूत्रकारेण सूत्रितेत्यन्तं यावत् अभ्युपगम्याऽपि अदृष्टमात्र प्रति अर्थापत्तेः प्रामाण्यम् अदृष्टविशेषाभिप्रायेण "अथातो धर्मजिज्ञासा" इत्युक्तम् तत्रैव च प्रत्यक्षाद्यनुप्रवेशव्यवच्छेदेन चोदनायाः प्रामाण्यं प्रतिज्ञातम् "चोदनालक्षणोऽर्थो धर्मः" इति, तस्यैव प्रवृत्त्यङ्गत्वात् । तत्र च नार्थापत्तेः प्रामाण्यम्, इत्येतच्छ्लोकचतुष्टयस्याभिप्रायः ।

प्रत्यक्षाऽग्रहणं यत्तु लिङ्गादेरविकल्पनात् ।
तन्नेष्टत्वाद्विकल्पस्याप्यर्थरूपोपकारिणः ॥ १११ ॥

* अस्ति ह्यालोचना[1]ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ ११२ ॥

□ न विशेषो न सामान्यं तदानीमनुभूयते ।
तयोराधारभूता तु व्यक्तिरेवाऽवसीयते ॥ ११३ ॥

यत्तु लिङ्गादि न प्रत्यक्षग्राह्यं निर्विकल्पकत्वात् प्रत्यक्षस्येत्युक्तम्, तदनुभाषते प्रत्यक्षेति । निराकरोति तन्नेति । कारणमाह इष्टत्वादिति । अर्थरूपोकारिण इति । यो विकल्पः स्वेनैव रूपेणाऽर्थं विकल्पयति नान्यरूपेण शुक्तिरजतवत्, तस्यापि प्रत्यक्षत्वेनेष्टत्वात् अस्ति प्रत्यक्षं लिङ्गादेरिति ॥ १११ ॥

यस्त्वपिशब्दमसहमानः सर्वमेव ज्ञानं शब्दाऽनुविद्धत्वात्सविकल्पकमेव, न किंचिन्निर्विकल्पकमस्तीति मन्यते, तं प्रत्याह अस्तीति । बालानामिवाऽव्युत्पन्नानामस्माकमपि चक्षुःसन्निपाताऽनन्तरं सविकल्पकात्प्रथममस्ति निर्विकल्पकं प्रतीतिसिद्धमालोचनविज्ञानं शुद्धवस्तुविषयम्, तदभावे हि निर्निमित्तं शब्दस्मरणं स्यात् । अस्मृतशब्दस्य च न शब्दाऽनुविद्धो विकल्पः सम्भवतीति ॥ ११२ ॥

शुद्धवस्तुजमित्येतद्विवृणोति न विशेष इति । विशेषो व्यवच्छेदो व्यावृत्तिः, सामान्यं समानत्वम्, अनुवृत्तिरिति यावत् । अनुवृत्तिव्यावृत्ती न निर्विकल्पके प्रकाशेते । तयोस्त्वाधारभूतमनुवृत्तं व्यावृत्तं च यज्जातिव्यक्त्याद्यनेकाकारं वस्तु तत्तदाकारसंयुक्तं संमुग्धं सर्वमवसीयते, तत् शुद्धवस्त्वित्युच्यते । व्यक्तिरिति । वस्त्वित्यर्थः ॥ ११३ ॥

---

* अत्रनिर्विकल्पकम् अस्तित्वेन प्रमाणत्वेन च साध्यते । आलोचनज्ञानमित्यनेन बोधकत्वं प्रामाण्ये हेतुमाह । प्रथममित्यनेनापि अस्तित्वं निर्विकल्पकत्वं च युक्त्या साधयति ।

□ बौद्धदर्शनाभिप्रायेण निर्विकल्पकस्य विषयं दर्शयति । व्यक्तिशब्देन स्वलक्षणम् आह । सामान्यविशेषसंकीर्तनन्तु पराभिप्रायेण । न तु बौद्धदर्शने सामान्यविशेषयोः स्वलक्षणं प्रति आधाराधेयभावोऽस्ति, तयोरभावात् ।

१. 'नं' — ग

S महासामान्यमन्यै[1]स्तु द्रव्यं सदिति चोच्यते ।
सामान्यविषयत्वं च प्रत्यक्षस्यैवमाश्रितम् ॥ १:४ ॥

विशेषास्तु प्रतीयन्ते सविकल्पकबुद्धिभिः ।
ते च केचित् प्रतिद्रव्यं केचिद् बहुषु संश्रिताः ॥ ११५ ॥

□ [2]तानकल्पयदुत्पन्नं व्यावृत्ता[3]ऽनुगतात्मना ।
गव्यश्वे चोपजातं तु प्रत्यक्षं न विशिष्यते ॥ ११६ ॥

वेदान्तिनस्तु महासामान्यमेव सत्ता, द्रव्यशब्दाऽभिलप्यं निर्विकल्पकस्य विषयमाहुरित्याह **महासामान्यमिति** । एवं च सर्वमेव प्रत्यक्षं सामान्यविषयमाश्रितं भवतीत्याह **सामान्येति** ॥ ११४ ॥

निर्विकल्पमेव चेत्प्रत्यक्षं कथं तर्हि विशेषप्रतिपत्तिरत आह **विशेषास्त्विति** । तानेव द्विविधान् विभजते **ते चेति** । प्रतिद्रव्यवृत्तयः खण्डादिव्यक्तयो, गोत्वादयस्तु बहुष्वनुगताः, ते च सत्तादिमहासामान्यापेक्षया विशेषा इति ॥ ११५ ॥

तांश्च द्वयानपि विशेषान् व्यावृत्त्यनुगमात्मना स्थितानकल्पयत् प्रत्यक्षं सन्मात्रविषयमुपजायमानं गवि चाऽश्वे चैकरूपमेव भवतीत्याह **तानिति** । किमिति विशेषान् न कल्पयति? भेदाऽवभासाऽधीनत्वाद्विशेषाऽवभासस्य । तस्य चेतरेतराऽभावरूपस्य प्रत्यक्षेण ग्रहणाऽसम्भवात् । अपि चाऽभावपूर्वको वा विशेषाऽवभासो विपरीतं वा । न तावदभावपूर्वकत्वम्, अभावस्य प्रतियोग्याश्रयग्रहणाधीनत्वात् । न हि सद्रूपमेक मेवेतरेतराऽभावस्य प्रतियोगि चाश्रयश्चेति सम्भवति । नापि विशेषाऽवभासपूर्वको भेदाऽवभासः, भेदाऽनवभासे विशेषाऽनवभासात् । तस्मादनाद्यविद्यानिबन्धनविकल्पविलसिता एव विशेषाः न परमार्थतः सन्ति । एवं चाऽद्वितीयमेकं संविद्रूपमक्षर मित्यद्वैतश्रुतिः प्रत्यक्षाऽनुगुणैव न प्रत्यक्षविरोधिनी ॥ ११६ ॥

---

S वेदान्तवादिनस्तु—महासामान्यं निर्विकल्पकस्य विषयमाहुः तच्च केचित् सत्तामाहुः, अपरे द्रव्यम् ।

△ यत्र तु सविकल्पके भेदावगमः प्रत्यक्षमेव न भवतीत्युच्यते ।

□ सत्त्वभेदप्रतिपादकस्य 'आत्मा वा इदं सर्वम्' इत्येवमादेरागमस्य नास्ति प्रत्यक्षेण विरोधः । ततश्च सिद्धाद्वैतसिद्धिः ।

१. 'स्तदद्र'—ग
२. 'तान्न्'—ख
३. 'व्यावृत्त्यनुगमा'—ख

तदयुक्तं, प्रतिद्रव्यं भिन्नरूपोपलम्भनात् ।
∠ न ह्याख्यातुमशक्यत्वाद् भेदो नास्तीति गम्यते ॥ ११७ ॥
∴ 'निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः ।
ग्रहणं' 'लक्षणाख्येयं' ज्ञात्रा शुद्धं तु गृह्यते ॥ ११८ ॥
न[1] चाऽसाधारणत्वेन [2]परव्यावृत्त्यकल्पनात् ।

तदेतद् दूषयति तदयुक्तमिति । किं खलु भवतो नीलपीतयोस्तिक्तमधुरयोः शीतोष्णयोर्गवाश्वयोश्चाक्षप्रयोगानन्तरमुपजायमानं विज्ञानमेकरूपमेव ? सत्यमिति ब्रुवाणस्य नोत्तरं वाच्यम् । यस्त्वितरेतराऽभावो भेद इति, तदस्तु, न त्वत्र भेदग्रहणेन कार्यम् । यद्धि नीलाद्भिन्नं पीतं तत्स्वरूपमेव गृह्यते न तु भिन्नतया, येन भेदग्रहणाऽपेक्षा भवेत्, तेन नीलपीतादीनां भिन्नरूपाणां प्रत्यक्षग्रहणे सति पश्चादभावेनेतरेतराऽभावः प्रतीयतइति न कश्चिद्दोषः । अन्यथा सविकल्पकबुद्धिरपि उपपादयितुं न शक्यते । सत्यं न शक्यते, अत एवाऽविद्येत्युच्यतइति चेत्, नन्वविद्ययाऽप्यशक्यमेव विशेषग्रहणाधीनं भेदग्रहणं तदधीनं च विशेषग्रहणं कथमविद्ययाऽपि निर्णीयेत । न चाऽनादितया बीजाङ्कुरवत् परिहारसंभवः । स्वापादुत्थितस्याद्यं विशेषज्ञानं भेदज्ञानं चान्योन्याश्रयत्वान्नालमुत्पत्तुम् । अथ भेदग्रहणमन्तरेणाऽप्यविद्यामात्रेण विशेषग्रहणं, तर्हीन्द्रियमात्रमेवानपेक्षमस्तु किमविद्याग्रहणेनेत्यास्तां तावत् । ननु निर्विकल्पकदशायां तावदीदृशमिति भिन्नरूपं नोपाख्यातुं शक्यते; तत् कथं तस्य ग्रहणमत आह न हीति ॥ ११७ ॥

किमिदानीं भिन्नरूपमेव निर्विकल्पकग्राह्यं, नेत्याह निर्विकल्पकेति ग्रहणमन्तेन । द्व्यात्मकस्य, सामान्यविशेषात्मकस्येत्यर्थः । सामान्यविशेषाऽवभासोऽपि प्रतीतिसिद्ध एव । नहि निर्विकल्पकेनाऽगृहीतस्य सविकल्पकेनापि ग्रहणं सम्भवति । न वा ऽगृहीते सामान्ये व्यक्त्यन्तरे प्रत्यभिज्ञा संभवति । तस्मात्सामान्यं विशेषश्च निर्विकल्पकेऽपि प्रकाशते एव ।

ननु 'न विशेषो न सामान्यं तदानीमनुभूयत' इत्युक्तं तत्कथं तयोर्ग्रहणमुच्यते, अत आह लक्षणेति नापि तदित्यन्तेन । न हीदानीमप्यनुवृत्तिव्यावृत्त्योर्ग्रहणमुच्यते । या त्वियं गृह्यमाणस्य द्व्यात्मकत्वाख्या सा लक्षणाख्या गृह्यमाणस्य

∠ न उपाख्या वस्तुनः सत्त्वे कारणम् , अपि तर्हि प्रख्या ।
∵ व्यक्तिरेव अवसीयत इति यदुक्तं तत्रापि सामान्यविकल्पसिद्धिर्भवति ।
अत्र शुद्धमित्यनेन अनुवृत्तिव्यावृत्तिपरामर्शरहितं गृह्यते ।

१. 'ह्य'—ख, 'त्व'—ग
२. 'परावृत्यवि'—ग

विशेषाऽ[1]नुगमाऽक्लृप्तेः सामान्यमिति नापि तत् ॥ ११९ ॥

ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया।
बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन संमता ॥ १२० ॥

□ करणं चेन्द्रियं बुद्धेर्न तत्र ज्ञानमाहितम्।
[2]ततः स्मृत्यसमर्थत्वाद्विकल्पोऽज्ञो न वार्यते ॥ १२१ ॥

आत्मन्येव स्थितं ज्ञानं स हि बोद्धाऽत्र गम्यते।
स्मरणे चास्य सामर्थ्यं सन्धानादौ च विद्यते ॥ १२२ ॥

वस्तुनो लक्षणमाख्यायते सामान्यविशेषात्मकं तद्वस्त्विति; ज्ञात्रा पुनः शुद्धमेवाऽनुवृत्तिव्यावृत्तिरहितं गृह्यते न त्वसाधारणत्वेन, परेभ्यो व्यक्त्यन्तरेभ्यो व्यावृत्तेरकल्पनात्। तथा व्यक्त्यन्तराऽनुवृत्तेरकल्पनात् न सामान्यमपि गृह्यते, अतो न विरोध-इति ॥ ११८ ॥ ११९ ॥

एवं निर्विकल्पकं तद्विषयं च व्याख्याय सविकल्पकस्य प्रत्यक्षत्वं पूर्वोक्तं प्रपञ्चयति ततः परमिति। ततो निर्विकल्पकादुत्तरकालं जात्यादिभिर्विकल्प्य वस्तु यया बुद्धचा गृह्यते साऽपि प्रत्यक्षमेवेति ॥ १२० ॥

यत्तु सविकल्पकस्य स्मृत्यनुविद्धत्वादिन्द्रियस्य स्मृतावसामर्थ्यात्तत्रेन्द्रियजत्वादित्युक्तं, तत्राह करणमिति ॥ १२१ ॥

क्व तर्हि ज्ञानमाहितमत आह आत्मनीति तत्र कारणमाह स हीति। ततः किमित्याह स्मरण इति ॥ १२२ ॥

□ करणं चेति आत्मन्येवेति द्वाभ्यामिदमुच्यते—क्रिया, कर्मणि कर्तरि वा समवैति। न च इन्द्रियस्य ज्ञानक्रियायां कर्मत्वम्, अप्रतिभासनात्। नापि कर्तृत्वम्, अबोद्धृत्वात्। आत्मनि तु क्रिया समवैति, तस्यैव चेतनत्वात्, अस्त्येव स्मरणादौ सामर्थ्यम्। यदि इन्द्रियाणि स्मृत्वा अर्थं विकल्पयन्तीत्यस्माभि रुच्येत, तदेवमुपलभ्येमहि यत् तानि स्मर्तुं न शक्नुवन्तीति। नत्वेतदेवम्, इन्द्रियाणां करणत्वात् कर्तरि चात्मनि स्मरणसमवायात् अतस्तत्स्मृत्याद्यशक्तिरदोष एव। आत्मा हि चेतयते। सन्न प्राग्भवीयधर्मोपार्जितेन्द्रियोपनीतमर्थं बुध्यते स्मरत्यनुसन्धत्ते चेति न किञ्चिदनुपपन्नम्।

१. 'वगमा'—ख
२. 'तत्स्मृत्याद्य'—क

तेनेन्द्रियार्थसम्बन्धे विद्यमाने स्मरन्नपि ।
विकल्पयन् स्वधर्मेण वस्तु प्रत्यक्षवान् नरः ॥ १२३ ॥ ∴

तच्चैतदिन्द्रियाऽधीनमिति तैर्व्यपदिश्यते ।
तदसम्बन्धजातं तु नैव प्रत्यक्षमिष्यते ॥ १२४ ॥

पुनः पुनर्विकल्पे ऽपि[१] सती जातिः प्रतीयते ।
तत्सबन्धाऽनुसारेण सर्वं प्रत्यक्षमिष्यते ॥ १२५ ॥

न हि प्रविष्टमात्राणामुष्णाद् गर्भगृहादिषु ।
अर्था न प्रतिभान्तीति गृह्यन्ते नेन्द्रियैः पुनः ॥ १२६ ॥

यथा स्वाभासमात्रेण पूर्वं ज्ञात्वा स्वरूपतः ।
पश्चात्तत्राऽववुध्यन्ते तथा जात्यादिधर्मतः ॥ १२७ ॥

तथापि कथं, स्मरणोपेतोऽक्षव्यापारजन्यस्य सविकल्पकस्य प्रत्यक्षत्वमत आह तेनेति । पुरुषो हि पूर्वदृष्टं जात्यादि कालान्तरे चक्षुरादिभिर्गृहीत्वा तस्य पूर्वदर्शनं मनसा स्मृत्वा तदिदमित्यनुसन्धायाऽनुपरतेन्द्रियव्यापारः पुरः स्थितमर्थं विकल्पयन् प्रत्यक्षवानेव । तदानीमपि इन्द्रियव्यापारस्य अविरमादिति ॥ १२३ ॥

नन्विन्द्रियमात्रजं प्रत्यक्षम्, इदं तु स्मरणसहितेन्द्रियजं, कथमिन्द्रियव्यपदेश्यमत आह तच्चैतदिति । इन्द्रियजं प्रत्यक्षं न तन्मात्रजमिति अक्षाऽसम्बद्धाऽर्थविषयकस्याऽस्माभिरपि नैव प्रत्यक्षत्वमिष्यत इत्याह तदिति ॥ १२४ ॥

तत्सम्बन्धाऽनुसारिणस्तु वहवो विकल्पाः पुनः पुनरपि जायमाना न प्रत्यक्षतामतिवर्तन्त इत्याह पुनः पुनरिति ॥ १२५ ॥

नन्वक्षजश्चेद्विकल्पः किमिति प्रथमाऽक्षसंनिपात एव न जायते ? अतो नाऽक्षज इत्यत आह न हीति ॥ १२६ ॥

यदि तु तत्र प्रथममेवाऽस्फुटाऽवभासं विज्ञानमस्तीत्युच्यते, तदिहापि समानमित्याह यथा त्विति ॥ १२७ ॥

---

∴ यदि आत्मनः स्मरणादौ सामर्थ्यमस्तीति कृत्वा सविकल्पस्य प्रत्यक्षत्वमुच्यते, हन्त तर्हि निवृत्तेन्द्रियव्यापारस्यापि शब्दं स्मरतो यत्सविकल्पकं ज्ञानमुत्पद्यते 'गौरयम्' इति, तस्यापि प्रत्यक्षत्वं प्राप्नुयात् इत्याशंकानिरासायेदमुच्यते ।

१. 'यावानधिगमो भवेत्'--ख

* यदित्वालोच्य संमील्य नेत्रे कश्चिद्विकल्पयेत् ।
न स्यात् प्रत्यक्षता तस्य सम्बन्धाऽननुसारतः ॥ १२८ ॥

असम्बद्धविकल्पेऽपि तुल्यमात्मादि कारणम् ।
[1]तेनासाधारणत्वं स्यादत्राऽक्षस्यैव ☐ कल्पने ॥ १२९ ॥

[2]निर्विकल्पकबोधेऽपि नाऽक्षं केवलकारणम् ।
ऽ तत्पारम्पर्यजाते वा रूढिः स्यात् पङ्कजादिवत् ॥ १३० ॥

अनिमित्तैव वा रूढिः सुतरां सविकल्पकम् ।
प्रत्यक्षं संमतं लोके न तथा निर्विकल्पकम् ॥ १३१ ॥

यदा चैवं स्मृत्युत्तरकालमिन्द्रियव्यापाराऽनुपरमात्प्रत्यक्षत्वं तदा यत्परैरुक्तं, 'स्मरणव्यवहितस्यापि सविकल्पकस्येन्द्रियव्यपारसंनिधिमात्रेण प्रत्यक्षत्वे सत्यालोच्य निमील्याऽवस्थितस्य विकल्पयतो विकल्पः प्रत्यक्षं स्याद्' इति, तन्न प्रसज्यत इत्याह **यदि त्विति** ॥ १२८ ॥

नन्वनेककारणकं सविकल्पकं किमक्षेणैव व्यपदिश्यत इत्यत आह **असम्बद्धेति** । अक्षाऽसम्बद्धविषये अनुमानादिविकल्पे ऽप्यात्मादेः साधारणत्वादपरोक्षविकल्पेऽस्याऽसाधारणत्वात्तेनैव व्यपदेश इति ॥ १२९ ॥

तुल्यं चेदं निर्विकल्पके ऽपीत्याह **निर्विकल्पेति** । एवमक्षव्यापाराऽनुपरमात् प्रत्यक्षत्वमुक्तम् । अस्तु वा निर्विकल्पकोत्पत्तौ निवृत्त्यापारत्वमक्षस्य, तथापि परंपरया तावदक्षजत्वम्, तावतापि प्रत्यक्षत्वोपपत्तिः । किं चैवमनुमानादीनामपि प्रत्यक्षत्वं स्यादिति तन्निवृत्त्यर्थं रूढिरभ्युपगम्यते, यथा परंपरया पङ्काज्जननं मण्डूकादिसाधारणमिति तन्निवृत्तये पद्मविषये पङ्कजशब्दस्य, तदिदमाह **तत्पारंपर्येति** ॥ १३० ॥

अनिमित्तैव वा सविकल्पके रूढिरस्तु, वृद्धव्यवहारे सुतरां तत्रैव प्रयोगादिति आह **अनिमित्तेवेति** ॥ १३१ ॥

---

* न इन्द्रियव्यापारासक्तिः ऐन्द्रियिकत्वे कारणम् । किं तर्हि, इन्द्रियव्यापारानुपरतिः ।

☐ कल्पने सविकल्पज्ञाने इत्यर्थः ।

ऽ नात्र रूढिरेव केवला, नापि केवलयोगः । योगरूढिरिति मन्यन्ते वृद्धाः ।

१. 'तेन'—ग

२. 'निर्विकल्पेऽपि विज्ञाने'—ग

वृद्धप्रयोगगम्याश्च शब्दार्थाः सर्व एव नः ।
तेन यत्र प्रयुक्तोऽयं न तस्मादपनीयते ॥ १३२ ॥
□ सिद्धाऽनुगममात्रं हि कर्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन[1] निवर्तनम् ॥ १३३ ॥
[2]कल्पनायाः स्वसंवित्ताविन्द्रियाधीनता कथम् ।
मनस्तत्रेन्द्रियं चेत् स्याद् गोत्वादावपि तत्समम् ॥ १३४ ॥
△ स्वसंवित्तौ तदिष्टं चेल्लोको न ह्येवमिच्छति ।
तस्माद्रूढित्वमेष्टव्य पारिभाषिकताऽपि वा ॥ १३५ ।

ननु सत्यपि वृद्धप्रयोगे तन्निवृत्त्या परीक्षकैर्निर्विकल्पकमेव प्रत्यक्षमाश्रीयतेऽत आह वृद्धेति ॥ १३२ ॥

किमिति नाऽपनीयतेऽत आह सिद्धेति । यदि नाऽक्षजं सविकल्पकं ततः कल्पनाऽपि स्वसंवित्ताविष्टा नार्थे विकल्पनादिति यदस्यां स्वसंवित्तौ प्रत्यक्षत्वमिष्टं तदपि न स्यादित्याह कल्पनाया इति । अथेन्द्रियजनिर्विकल्पकसमनन्तरप्रत्ययाख्यमनोजन्यतया तत्र प्रत्यक्षं, ततो गोत्वादिविषयेऽपि तस्याः प्रत्यक्षत्वं मनोजन्यतयैव भविष्यति, मनःस्वरूपं तदुक्तमन्यद्वेत्यन्यदेतदित्याह मन इति ॥ १३४ ॥

बाह्ये मनसः प्रवृत्त्ययोगात्स्वसंविद्रूपस्यैव मानसप्रत्यक्षत्वमिति शङ्कते स्वसंवित्ताविति । दूषयति लोक इति । लोको हि गोत्वादिविषयेऽपि मनसः प्रत्यक्षहेतुत्वमिच्छति संविदश्च बहिर्विषयत्वं मन्यते न स्वसंवित्तिप्रत्यक्षत्वम् । अतो बहिरेव सविकल्पस्य प्रत्यक्षत्वमङ्गीकर्त्तव्यम् । तत्र यदि मनो न बहिर्वर्त्तते चक्षुर्व्यापारस्य च व्यवहितत्वं, तथा च रूढिर्वा परिभाषा वाऽङ्गीक्रियतां न त्वप्रत्यक्षत्वं, लोकविरोधादित्याह तस्मादिति ॥ १३५ ॥

अथवा निर्विकल्पकसहायं मनो बहिः प्रवर्त्स्यति, तथापि च मनोजन्यताऽस्त्येवेति तदधीनसुखादिबुद्धिवत् प्रत्यक्षता भविष्यतीत्याह मनसस्त्विति ॥ १३६ ॥

---

□ लौकिको हि शब्दार्थसन्बन्धः । तेन परीक्षकैरपि यथालोकमेव वर्तितव्यम् । अन्यथाकरणे तेषां लोकबाध एव ।

△ अयमाशयः—सत्यमिष्टं कल्पनाज्ञानं स्वसंवेदने प्रत्यक्षमिति भवद्भिः । लौकिकास्तु विपरीतं मन्यन्ते । अयं गौरिति पररूपनिरूपणं सविकल्पकं लौकिका मन्यन्ते, न पुनरहं गौरित्यात्मनिरूपणम् । यदपि बाह्येषु मनो न वर्तत इति सत्यम्, बहिरिन्द्रियानपेक्षं न प्रवर्तते । गोत्वादयस्तु संयुक्तसमवायेन चक्षुषा सन्निकृष्यन्ते इत्यस्ति तेषु मनोव्यापारः इति तन्निबद्धमक्षव्यपदेशं लभते ।

१. 'वि'—ख २. 'कल्पनापि'—ख

मनसस्त्विन्द्रियत्वेन सुखदुःखादिबुद्धिषु ।
यथा प्रत्यक्षतैवं नस्तदधीना भविष्यति ॥ १३६ ॥

* तदधीनत्वसाम्येऽपि कल्पनाऽपोढशब्दनात् ।
प्रत्यक्षं किञ्चिदेवेष्टं यथा तव तथैव नः ॥ १३७ ॥

लिङ्गाद्यभावतश्चापि नाऽनुमानादिधीरियम् ।
[1]बाधकप्रत्ययाऽसत्त्वान्नाऽप्रामाण्यं च युज्यते ॥ १३८ ॥

[2]न च पर्वमदृष्टत्वात् स्मृतित्त्रमुपपद्यते ।
तस्मात् प्रत्यक्षमेवेदं व्यवहारस्तथैव च[3] ॥ १३९ ॥

नन्वन्यसहितमनोजन्यत्वमनुमादीनामप्यस्त्येवेति तेषामपि प्रत्यक्षत्वं स्यादित्यत आह तदधीनेति । यथा मनोजन्यत्वे समानेऽपि सविकल्पकस्य कल्पनाऽपोढलक्षणा-श्रयणेन किंचिदेव स्वसंवेदनं प्रत्यक्षमिष्टं न गोत्वादिसंवेदनं, तथाऽस्माकमपि मनोजन्यत्वे समानेऽप्यपरोक्षावभासमेव ज्ञानं प्रत्यक्षं नाऽन्यदिति ॥ १३७ ॥

पारिशेष्यादपि सविकल्पकस्य प्रत्यक्षत्वं बाधाऽभावाच्च नाऽप्रामाण्यमित्याह लिङ्गादीति ॥ १३८ ॥

अथ निर्विकल्पकप्राप्तप्रापकत्वात् स्मृतिरियमुच्यते अत आह न चेति । भवन्मते तावन्निर्विकल्पकेनाऽगृहीतमेव सामान्यम् । अस्माकमपि क्षणान्तरसम्बन्धस्याऽगृहीतस्य ग्रहणान्न स्मृतित्वमिति । पारिशेष्यात्प्रत्यक्षत्वमेवेत्युपसंहरति तस्मादिति । भवतामपि योऽनुमानस्य प्रत्यक्षविरोधादिव्यवहारः स तथैव सविकल्पकस्य सामान्यग्राहिणः प्रत्यक्षत्वे सत्येवाऽवकल्पते नाऽन्यथेत्याह व्यवहार इति । स्वलक्षणमात्रं हि सर्व-सामान्यसहम् । अतो यत्तद्विषयं प्रत्यक्षं तद्यत्किंचिदपि सामान्यमनुमानादिगम्यं न बाधते । यथा संतमसे गोः स्वलक्षणमेव गृह्णदपि प्रत्यक्षं गोत्वाऽनवधारणात् नाऽश्वत्वाऽनुमानस्य बाधकम्, एवमालोकेऽपि प्रत्यक्षं तन्मात्रमेवाऽनधिकं गृह्णदश्वत्वं तस्मिन्नेव स्वलक्षणेऽनुमीयमानं न बाधेतेति ॥ १३९ ॥

* मनोऽधीनत्वे समानेऽपि स्वकीयकल्पनापोढलक्षणानुसारेण किञ्चिदेव प्रत्यक्ष-माश्रीयते । तथा सति इच्छानुसारेण व्यवस्थायामिष्यमाणायां वयमपि यथाशयं किञ्चिदेव प्रत्यक्षं वक्ष्यामः ।

१. 'न च पूर्वमदृष्टत्वात् स्मृतित्वमुपपद्यते'—ख
२. 'बाधकप्रत्ययाऽसत्त्वान्नाऽप्रामाण्यं च युज्यते'—ख
३. 'वः'—ख

∠ जात्याद्यर्थान्तरं यस्माद्तद्रूपेऽपि वस्तुनि ।
भवत्यध्यस्य धीस्तस्मान्मृगतृष्णादिभिः समा ॥ १४० ॥

नैतदश्वादिबुद्धीनामध्यारोपाद्यसम्भवात् । □
स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि नः ॥ १४१ ।

यदि ह्येकान्ततो भिन्नं विशेष्यात् स्याद्विशेषणम् । *
स्वाऽनुरूपां सदा बुद्धिं विशेष्ये जनयेत् कथम् ॥ १४२ ॥

यदुक्तं नेदमनुमानं न स्मृतिरिति, तत्सत्यं, नाऽप्रमाणमिति यदुक्तं तन्न मृष्यामहे इति चोदयति जात्यादीति । जातिगुणक्रियानामधेयानि व्यक्तेरर्थान्तरभूतानि-अनर्थान्तरत्वे व्यक्तिमात्रत्वापत्तेर्जात्यादीनामभावप्रसङ्गात्तानिव्यक्त्यात्मतया सविकल्पकेन गृह्यन्ते । गौरयं, दण्ड्ययं, शुक्लोऽयं, गच्छत्ययं, डित्थोऽयमिति । तेनार्थान्तरमर्थान्तरात्मतयाऽध्यवस्यदूषरमिव सलिलतया मिथ्यैव सविकल्पकमिति ॥१४०

परिहरति नैतदिति । कथमसम्भवोऽत आह स्थितमिति । नामधेये नैवतावत् ताद्रूप्यप्रतीतिरस्तीति वक्ष्यामः । जात्यादित्रयस्यानर्थान्तरत्वादेव तु न ताद्रूप्यप्रतीतेरप्रामाण्यमिति ॥ १४१ ॥

कथमनर्थान्तरत्वमत आह यदि हीति । नहि कदाचिदिहगोत्वमिति प्रतीतिरस्ति, यतो व्यक्तेरर्थान्तरत्वमेकान्ततो जात्यादेः स्यात् । सर्वदैव सर्वेषामियं गौरिति गोत्वात्मिकैव व्यक्तिः प्रतीयते, न चेयं प्रतीतिरैकान्तिके भेदेऽवकल्पते, इयमेव च प्रतीतिर्जातौ प्रमाणं नाऽन्यत् । इयं च जात्यात्मिकामेव व्यक्तिं गमयति, न चास्याः किं चिद् बाधकमस्तीति पारमार्थिकमेव तादात्म्यमिति नाऽप्रामाण्यमिति । ननु भिन्नमेव लाक्षादिकं स्वाऽनुरूपां बुद्धिं मिथ्याभूतां स्फटिके जनयति, तथा जात्यादिकमपि किं न स्यादित्यत उक्तं सदेति ॥ १४२ ॥

∠ ननु किमिदं 'नाप्रामाण्यं च युज्यते' इति । विशिष्टावगाहिनो हि विकल्पाः । भिन्नं च विशेष्याद् विशेषणम् । अभेदे विशेषणविशेष्याऽनुपपत्तेः । अतः अर्थान्तरभूतैर्जात्यादिभिर्विशिष्टे वस्तुनि गृह्यमाणे अतस्मिंस्तद्ग्रहणाद् भ्रान्तिरेव सविकल्पकज्ञानम् । तथा च—सविकल्पकं ज्ञानम् अप्रमाणम्, अर्थान्तरे अर्थान्तरारोपेण उत्पद्यमानत्वात्, ऊषरे सलिलज्ञानवत् ।

□ पररूपेण हि परस्मिन् निरूप्यमाणे भ्रान्तिर्भवति । न च जात्यादीनां पाररूप्यं, तेषामनतिभेदात् इति परिहारः ।

* जात्यादीनां द्रव्यादभेद एव प्रमाणान्तरं ब्रवीति । तथा च—विशेष्यादभिन्नं विशेषणम्, विशेष्ये सदा स्वानुरूपबुद्धिजनकत्वात्, स्वलक्षणस्वरूपवत् ।

१. 'स'—ख

स्फटिकादौ तु लाक्षादिस्वरूपा या मतिर्भवेत् । △
अव्युत्पन्नस्य सा मिथ्या व्युत्पन्नानां हि भेदधीः ॥ १४३ ॥
न [1]तु जात्यादि[2]निर्मुक्तं वस्तु दृष्टं कदा चन ।
तद्विमोकेन वा तानि लाक्षादिस्फटिकादिवत् ॥ १४४ ॥
तत्रापि चेन्न दृश्येत भेदः कैश्चित् कदा चन ।
रक्तादिबुद्धिसम्यक्त्वं निर्विवार्येत केन वा ॥ १४५ ॥
□ न चाऽप्ययुतसिद्धानां सम्बन्धित्वेन कल्पना ।
नाऽनिष्पन्नस्य सम्बन्धो निष्पत्तौ युतसिद्धता ॥ १४६ ॥

तद्विवृणोति **स्फटिकादाविति** । कदाचिदेव तद्रूपं स्फटिकमजातविवेकैर्गृह्यते न सर्वदा, व्युत्पन्नानां भेदावगमादिति । गोत्वानुरूपां तु व्यक्तिं सर्वदाऽवगच्छन्ति । न हि जात्यादिरूपत्वं व्यक्तेः व्यक्तिरूपत्वं वा जात्यादीनां कदा चिद्बाध्यते, लाक्षास्फटिकयोरिवेतरेतरात्मकत्वमित्याह **न त्विति** । ननु वस्तुविमोकेन व्यक्त्यन्तरेऽपि जात्यादीनि दृश्यन्ते, वस्त्वपि बदरादिफलं श्यामत्वनिर्मुक्तं पक्वावस्थायां रक्तगुणं दृश्यते । सत्यम्, अत एव जात्यादीनां द्रव्याद् भेदोऽभ्युपगम्यते । कथं तर्हि न विमोको दृष्ट इत्यत आह **तद्विमोकेनेति** । तादात्म्यप्रत्ययस्य बाधो न दृष्ट इत्यर्थः । न हि व्यक्त्यन्तरेऽपि गोत्वं पश्यन् पूर्वव्यक्तेर्गवात्मकत्वं मिथ्या मन्यते, सोऽपि गौरयमपि गौरिति प्रतिभासात्, तथा फलेऽपि रक्तप्रत्ययो न पूर्वसंजातं श्यामप्रत्ययं बाधते, पूर्वं श्याममेवेदानीं रक्तमित्यवगमात्; लाक्षास्फटिकयोस्तु तादात्म्यं बाधत एवेति ॥ १४३ ॥ ॥ १४४ ॥

बाधाभावे तु तत्रापि नाऽप्रामाण्यमित्याह **तत्रापीति** ॥ १४५ ॥

वैशेषिकास्तु जात्यादीनां व्यक्तेश्चैकान्तभेदमेवाऽङ्गीकृत्य समवायसम्बन्धं मन्यन्ते । यथोक्तम् 'अयुतसिद्धानामाधार्याधारभूतानामिहप्रत्ययहेतुर्यः सम्बन्धः स समवाय' इति । युतसिद्धिः पृथक्सिद्धिः, तान्निराकरोति **न चापीति** । किमिति न कल्पनेत्यत आह **नेति** । न तावदनिष्पन्नस्य, सामान्येन सम्बन्धः सम्भवति सम्बन्ध्याधारत्वात्सम्बन्धस्य, तदभावेऽनुपपत्तेरिति । निष्पत्तौ वा पृथक् सिद्धेः अयुतसिद्धेरनुपपत्तिरित्याह **निष्पत्ताविति** ॥ १४६ ॥

---

△ पूर्वोक्तस्य सदेतिविशेषणस्य फलप्रदर्शनम् ।

□ अयुतसिद्धानां सम्बन्धः समवाय इष्यते, तच्च अनुपपन्नम्, अनिष्पन्नस्य अविद्यमानत्वेन सम्बन्धाभावात् । अत एव न निष्पद्यमानयोः, निष्पत्त्युत्तरकालं च सम्बन्धनिष्पत्तौ युतसिद्धताप्रसङ्गात् ।

1. 'हि'—ख 2. 'दिभि'—ख

तथा च सति सम्बन्धे हेतुः कश्चिन्न विद्यते।
□ [1]षण्णामपि न सम्बन्धः पदार्थानां प्रतीयते ॥ १४७ ॥

समवायवियोगाच्च विश्लेषः स्याऽत् परस्परम्। *
[2]तत्क्लृप्तानवस्था स्यात् तस्य तस्याऽन्यसङ्गतः[3] ॥ १४८ ॥

अथ तस्याऽऽत्मरूपत्वान्नाऽन्यसम्बन्धकल्पना।
अभेदात्समवायोऽस्तु स्वरूप धर्मधर्मिणोः ॥ १४९ ॥

युतसिद्धत्वे वा को दोषोऽत्त आह तथा चेति। नह्यसम्बद्धायां व्यक्तौ निष्पन्नायां पश्चात्समवायाख्यसम्बन्धलाभे कश्चिद्धेतुरस्तीति। यदा चैवं धर्मधर्मिणो! सम्वन्धो न लब्धः तदा धर्माणामपि तन्निवन्धनस्यैकार्थसमवायसम्बन्धस्याऽभावात् षण्णामपि द्रव्यादिविशेषपर्यन्तानामसम्बन्ध एवाऽऽपन्न इत्याह षण्णामपीति ॥ १४७ ॥

किं चाऽस्य समवायस्य धर्मधर्मिभ्यां वियोगादसम्बन्धान्न तद्वशेन धर्मधर्मिणोः संश्लेषः स्यादित्याह समवायेति। यदि त्वस्यैव समवायस्य समवायिभ्यां धर्मधर्मिभावः सम्बन्धः, ततस्तस्यापि सम्बन्धस्य सम्बन्धान्तरकल्पनादनवस्थेत्याह तत्क्लृप्ताविति ॥ १४८ ॥

शङ्कते अथेति। धर्मधर्मिरूपत्वात्ताभ्यां समवायस्याऽभिन्नत्वान्न सम्बन्धान्तरकल्पनेति। दूषयति अभेदादिति। एवं तर्ह्यभेदस्याऽङ्गीकृतत्वाद्धर्मधर्मिणोरेवाऽभेदमङ्गीकृत्य तयोरेव समवायसंज्ञाऽङ्गीक्रियतां यद्यवश्यं तया प्रयोजनं, न तु तद्व्यतिरिक्तसमवायाङ्गीकरणं युक्तम्। यच्चाऽपृथग्गतिमत्त्वादिकं समवायात्मकतया कथितं, तत् शास्त्रदीपिकायामाकृतिग्रन्थे दूषितमिति नेह प्रतन्यते ॥ १४९ ॥

---

□ षण्णां द्रव्यगुणकर्मसामान्यविशेषाणां द्रव्येण सह समवायलक्षणः सम्बन्धः परस्परं चैकार्थसमवायलक्षणः समवायं विना न प्राप्नोति।

* समवायः समवायिभ्या व्यतिरिक्तः, अव्यतिरिक्तो वा स्यात्? व्यतिरिक्तपक्षेऽपि ताभ्यां सम्बन्धः, असंबन्धो वा स्यात्? यदि तावत् व्यतिरिक्तः असंबंधश्च, तदा दूषणम्प्रदर्श्यते। अथ सम्बन्धः तत्रापि संयोगस्तावन्नास्त्येव, समवायस्य अद्रव्यत्वात्, समवायान्तराभ्युपगमे चानवस्था।

१. 'तस्माच्चापि'—ग
२. 'तत्क्लृप्तावव्यवस्था'—क ख
३. 'तेः'—क ख

न हि स व्यतिरिक्तः सन् सम्बन्धं प्रतिपद्यते ।
तस्मिंस्ताभ्यामभिन्ने तु न नानात्वं तयोर्भवेत् ॥ १५० ॥

ननु धर्माऽतिरेकेण धर्मिणोऽनुपलम्भनात् ।
तत्सङ्घमात्र एवायं गवादिः स्याद्वनादिवत् ॥ १५१ ॥

आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ।
तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद् भवेत् ॥ १५२ ॥

कारणमाह न हीति । पूर्वोक्तमेवैतदनवस्थापत्तिरिति । अभेदपक्षे चाऽभिन्नेनाऽभेदाद्धर्मधर्मिणोरभेदापत्तिरित्याह तस्मिन्निति । किञ्चेहप्रत्ययाभावान्नायुतसिद्धिः । इयं गौरिति हि सर्वदा सर्वेषां प्रतीति र्न पुनरिह गवि गोत्वमिति । का चेयमयुतसिद्धिः ? युतसिद्धयभावः । का पुनर्युतसिद्धिः ? पृथग्गतिमत्त्वम् पृथगाश्रितत्वं च । तदभावोऽयुतसिद्धिः । यद्येवमवयवावयविनोः समवायो न स्यात् । विनाप्यवयविचलनेनावयवानां चलनात् । अवयविनोऽवयवाश्रितत्वात् अवयवानां च स्वावयवाश्रितत्वात्समवायानुपपत्तिः । तत एवं वक्तव्यम्, येन सम्बन्धेनाधेयमाधारे स्वानुरूपां बुद्धिं जनयति, स्वाकारेण बोधयतीत्यर्थः, स सम्बन्धः समवाय इत्युच्यते । यदि जात्यात्मना व्यक्तिः प्रतीयते तदा जातिव्यक्त्योरभेदः प्रतीतिबलादप्युपपद्यते । प्रतीयते हि गौरयं शावलेयो गौरयं बाहुलेय इति भेदबुद्धिः । शावलेयादिभेदेन भेदबुद्धिश्च । प्रपञ्चितश्चायं जातिसिद्धाविति ॥ १५० ॥

यदुक्तं 'ततः परं पुनर्वस्त्विति' तदाक्षिपति नन्विति । न हि रूपादिधर्मेभ्योऽन्यो धर्मी विद्यते, यो जात्यादिभिर्विशिष्टो गृह्येत । रूपादिसंघातमात्रमेव गवादिकं वृक्षसंघातमात्रमिव वनं नाऽन्यत्, अनुपलभ्भादुपलम्भकारणाऽसम्भवाच्च । यथाहुः—

क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चसु ।
न षष्ठमिन्द्रियं तस्य ग्राहकं विद्यते बहिः ॥ इति ।

न चाऽसत्यपि बहिरिन्द्रियेऽन्तःकरणेन गृह्यतामिति वाच्यम् । तस्य बहिरस्वातन्त्र्यादिति ॥ १५१ ॥

परिहरति आविरिति । रक्तत्वहरितत्वादिधर्मेष्वाविर्भावतिरोभावधर्मकेषु यद् बदरफलमवस्थाद्वयाऽनुयायि प्रत्यभिज्ञायते, यद्वा पिण्डघटकपालाद्यवस्थास्वनुगतमवस्थावत् । यद्वा सन्तमसे बलाकापङ्क्तौ प्रागेव शुक्लरूपग्रहणाद् गृह्यते, तद्धर्मि, न हि तदभावे प्रत्यभिज्ञा सम्भवति धर्माणां भिन्नत्वाद्दर्शनस्पर्शनाभ्यां च ग्रहणमिति न ग्राहकाभाव इति ॥ १५२ ॥

---

१. 'वत्'—ग

अतो जात्यादिरूपेण धर्मि यद् गृह्यते नरैः ।
पाररूप्यं न तस्यास्तीत्यप्रामाण्यं न युज्यते ॥ १५३ ॥

'यस्यापि व्यतिरेकः स्याद्धर्मेभ्यो धर्मिणः स्फुटः ।
नित्यं तस्यापि ताद्रूप्यान्न मिथ्यात्वं प्रसज्यते ॥ १५४ ॥

योऽप्यन्यरूपसंवेद्यः [1]संवेद्यो वान्यथा पुनः । *
स मिथ्या न तु तेनैव यो नित्यमवगम्यते । १५५ ॥

□ न चाऽनेकेन्द्रियग्राह्यं भिन्नतां प्रतिपद्यते ।

प्रकृतं सविकल्पस्य प्रामाण्यमुपसंहरति अत इति ॥ १५३ ॥

भवतु वाऽत्यन्तभेदो धर्मधर्मिणोः, तथापि नाऽप्रामाण्यमित्याह यस्यापीति–द्वयेन । नित्यं ताद्रूप्याद् बाधकाभावात् । स वेद्येताऽन्यथा पुनरिति । बाध्येतेत्यर्थः । कथं पुनर्भिन्नयोरभेदप्रतीतिरमिथ्या स्यात्, सत्यम्, न त्वयं गौरिति प्रतीतिरभेदप्रतीतिः, न ह्ययं गौरिति च गौरेवायमिति च बुद्धिद्वयं पर्यायरूपं गम्यते, अतः समवाय एवायमेवं प्रतीयते, येनेत्थंभावेन धर्मिणो धर्मः प्रतीयत इति भेदवादिनो मतिरिति ॥ १५४ ॥ १५५ ॥

ननु दर्शनस्पर्शनाभ्यां गृह्यमाणं द्रव्यं ग्राहकभेदाद् रूपादिवद्भिद्येत, यदि सत्यपि ग्राहकभेदे न भिद्यते, रूपादयोऽपि न तद्वदेव मिथो भिद्येरन् । पञ्चभिरक्षैर्ग्राह्यं सत्तासामान्यम् एकं दृष्टमिति चेत्, न, तस्याऽनैन्द्रियकत्वात्, सर्वसामान्यानां सविकल्पकविलसितत्वात् । इन्द्रियसंकरे वाऽक्षानेकत्ववैयर्थ्यं स्यात् । एकमेव त्वगिन्द्रियं भिन्नेष्वपि विषयेषु पञ्चसु शक्तिमदङ्गीक्रियताम् । तदुक्तम्—

नैकं रूपाद्यभेदो वा दृष्टं चेन्नेन्द्रियेण तत् ।
अक्षाऽनेकत्ववैयर्थ्यं स्वार्थे भिन्नेऽपि शक्तिमत् ॥ इति ॥

---

१. 'संवेद्येतान्य'—ख

* अनेन पूर्वेण चेति द्वाभ्यामिदम्प्रतिपाद्यते—नान्यरूपसंवेद्यतामात्रेण मिथ्यात्वं, किन्तु पुनरन्यथासंवेदनेन । बाधकप्रत्ययेनेतियावत् । इह च सर्वेषां सर्वदा च तद्रूपाबुद्धिरिति भावनाया इव धात्वर्थविशिष्टबोधो न मिथ्या ।

□ यदुक्तं ग्राहकभेदाद् भेद इति; तन्नोचितम्, भिन्नशरीरस्थचक्षुर्ग्राह्यस्य अभिन्नत्वेन हेतोरनैकान्तिकत्वात् ।

मा भूद् भिन्नशरीरस्थ[1]ग्राह्यत्वा[2]द्भिन्नरूपता ॥ १५६ ॥

जात्यभेदादभेदश्चेदिन्द्रियत्वेन तत्समम् ।
तुल्यबुद्धेरतो भिन्ना न सत्तेन्द्रियभेदतः ॥ १५७ ॥

बुद्धिभेदाच्च नैकत्वं रूपादीनां प्रसज्यते । ◻
एकाऽनेकत्वमिष्टं वा सत्तारूपा[3]दिरूपतः ॥ १५८ ॥

क्व चिच्च सङ्करान्नाऽक्षमेकमित्यवसीयते ।
दार्ढ्यं दौर्बल्यभेदेन व्यवस्थाऽपि यतः क्व चित् ॥ १५९ ॥

अत आह न चेति । अनैकान्तिको हेतुरित्याह मा भूदिति ॥ १५६ ॥

नाऽनैकान्तिको हेतुरिति शङ्कते जात्यभेदादिति । चक्षुष्ट्वजातेरेकत्वान्न रूपस्याऽनेकेन्द्रियग्राह्यतेति । परिहरति । इन्द्रियत्वेनेति । यथा रूपगोचराणां चक्षुष्ट्वेन एकत्वं तथा दर्शनस्पर्शनयोरपि इन्द्रियत्वेनैकत्वात् द्रव्यस्यापि नाऽनेकेन्द्रियग्राह्यत्वम् इति असिद्धो हेतुः स्यात्, तेनैकबुद्धिग्राह्यत्वात् एकमेव द्रव्यं ग्राहकभेदस्वतन्त्रमिति । अत एव पञ्चेन्द्रियगोचरोऽपि सत्ता तुल्यबुद्धिगम्यत्वादभिन्ना भवति । अन्यथा साऽपि भिद्येतेत्याह तुल्यबुद्धेरिति । यत्तु 'नेन्द्रियेण त'-दित्युक्तं, तदयुक्तम्, ऐन्द्रियकं हि सामान्यं स्थापितमिति ॥ १५७ ॥

'रूपाद्यभेदो वे' ति यदुक्तं, तत्राह 'बुद्धिभेदादिति । 'नैकं रूपाद्यभेदो वे'-त्यत्रोभयत्रापि सिद्धसाध्यता शक्या वक्तुमित्याह एकेति । रूपादीनां सद्रूपतयैकत्वं, द्रव्यस्यापि रूपाद्यात्मनाऽनेकत्वमिष्टमेवेति ॥ १५८ ॥

अक्षाऽनेकत्ववैयर्थ्यं परिहरति क्व चिदिति । कारणमाह दार्ढ्येति । प्रबलचक्षुर्दुर्बलश्रोत्रो रूपं गृह्णाति न शब्दम् । विपरीतस्तु विपरीतम्, सेयं व्यवस्थाऽक्षैकत्वेऽनुपपन्नेति सत्यपि द्रव्यविषये संकरे नाऽक्षाऽनेकत्ववैयर्थ्यमिति ॥ १५९ ।

---

१. 'स्य'—क, ख,

२. 'द्रूपभिन्नता'—ख,

३. 'भेदत'—ख

◻ 'सद्रूपेण' रूपादीनामेकत्वं रूपादिरूपेण च धर्मिणो नानात्वम् ।

'यथा हि मनसः सार्धं रूपादौ चक्षुरादिना।
प्रवृत्तिः सुखदुःखादौ केवलस्यैव [1]दृश्यते ॥ १६० ॥

न क्व चित्सङ्कराऽभावात्सर्वत्रैव निवर्तते।
क्व चिच्च सङ्करं दृष्ट्वा सङ्करोऽन्यत्र कल्प्यते ॥ १६१ ॥

श्रोत्रादेरुपघातेऽपि शब्दादिस्मृतिदर्शनात्।
वर्तमानस्य चाऽज्ञानाद्व्यवस्था संप्रतीयते ॥ १६२ ॥

एकं यदि भवेदक्षं [2]सर्वं गृह्येत वा न वा।
*कल्प्यते शक्तिभेदश्चे[3]च्छक्तिरेवेन्द्रियं भवेत् ॥ १६३ ॥

नन्वक्षाणां संकरे द्रव्य इव रूपादिष्वपि संकरः स्यात्तत्राह **यथा हीति** द्वयेन। न हि यदेकत्र दृष्टं तदन्यत्राऽदृष्टमपि भवति। यथा तावन्मनसो रूपादिग्रहणे चक्षुरादिसहायस्य प्रवृत्तिः, स्मृतिसुखादौ केवलस्य, तथा चक्षुरादेरपि रूपादिष्वसंकरो द्रव्ये च संकरो भविष्यति, न सर्वत्रैकरूप्यमिति ।. १६० ॥ १६१ ॥

कथं पुनर्मनस एव रूपादिग्रहणे चक्षुरादिसहायस्य प्रवृत्तिः स्मृतिसुखादौ केवलस्येति व्यवस्था गम्यते अत आह **श्रोत्रादेरिति**। श्रोत्रादिरहितस्यापि बधिरादेः शब्दादिस्मरणं सुखाद्युपलब्धिश्च दृश्यत इति तत्र श्रोत्राद्यनपेक्षत्वं, वर्त्तमानस्य च शब्दादेरग्रहणात्तत्र श्रोत्रादिसापेक्षत्वं मनसोऽवगम्यत इति ॥ १६२ ॥

एवं दार्ढ्यदौर्बल्यवशाद्रूपाद्युपलब्धिव्यवस्था दर्शिता। यथा तु तयाऽक्षानेकत्वं सिध्यति तथा दर्शयति **एकमिति**। यत्तूक्तं 'स्वार्थभिन्नेऽपि शक्तिम' 'दिति तदाशङ्कते **कल्प्यतइति**। परिहरति **शक्तिरेवेति**। शक्तिपञ्चकं तावत्कल्पनीयमिन्द्रियस्थानीयं तत्र तद्वा कल्पनीयमिन्द्रियपञ्चकं वेति न विशेषः। ननु धर्मिकल्पनाद्धर्मकल्पना लघीयसी, सत्यम्, इह तु क्लृप्तमेव पृथिव्यादिपञ्चकं तत्र पञ्चानां शक्तिपञ्चककल्पनं दृष्टानुगुण्यं प्रागेव दर्शितम्, एकस्य तु वायवीयस्य त्वगिन्द्रियस्य शक्तिपञ्चककल्पनं दृष्टाऽननुगुणत्वादयुक्तमिति ॥ १६३ ॥

---

१. 'गम्यते'—क

२. 'सर्वैंगृ'—क

३. 'च्छक्तिमेवे'—ख

* अनेकशक्तिकल्पनायामपि अस्मत्पक्ष एव। तस्मादनेकमिन्द्रियं क्वचित्संकीर्णं क्वचिद् व्यवस्थितम्।

शृणुयाद् बधिरः शब्दं सङ्करे चक्षुरादिना ।
मनसो वा स्वतन्त्रत्वे वर्तमानाऽर्थबुद्धिषु ॥ १६४ ॥

न स्मरेद् बधिरः शब्दं श्रोत्रं चेत्स्मृतिकारणम् ।
[1]स्मृतिवद्वा भवेदस्य वर्तमानार्थधीरपि । १६५ ॥

'स्मृतिश्च न भवेत्पश्चाद् गृह्णीयात्तन्न चेन्मनः ।
श्रोत्रग्रहणवेलायां' न च सर्वा स्मृतिर्भवेत् ॥ १६६ ॥ □

* बोधात्मकतया पुंसः सर्वत्र ग्रहणं भवेत् ।

यदुक्तं 'क्व चिद्वा संकरं दृष्ट्वा रूपादावक्षिसंकरो न युक्तोऽव्यवस्थादर्शना' दिति, तस्य व्यतिरेकमाह शृणुयादिति । संकरे व्यवस्था न स्यादिति । यत्तु वर्त्तमानस्याऽज्ञानान्मनसो बहिरस्वातन्त्र्यमुक्तं, तस्य व्यतिरेकमाह मनस इति । शृणुयाद् बधिरः शब्दमित्यनुषङ्गः, तस्यापि मनोऽस्तीति ॥ १६४ ॥

यत्तु श्रोत्रादेरुपघातेऽपि शब्दादिस्मृतिदर्शनात्तत्र श्रोत्राद्यनपेक्षं मनः स्वतन्त्रमित्युक्तं, तस्य व्यतिरेकमाह न स्मरेदिति । अथाऽसत्यपि कारणे स्मृतिः स्याद्, वर्त्तमानोपलब्धिरपि स्यादित्याह स्मृतिवदिति ॥ १६५ ॥

ननु वर्त्तमानः शब्दादिः श्रोत्रादिभिरेव गृह्यतां, किं तत्र मनसा, अत आह स्मृतिश्चेति पादत्रयेण । यत् खलु मनसा स्मर्यते तद्ग्रहणेऽपि मनोव्यापारो दृष्टः, यथा सुखादेः । शब्दादिकमपि मनसैव स्मर्यते, सर्वस्मरणानां मानसत्वात् । अतः शब्दादिग्रहणेऽपि मनोव्यापारोऽनुमीयते । तत्र च स्वातन्त्र्ये बधिरादेरपि शब्दादिग्रहणप्रसङ्गात् श्रोत्राद्यपेक्षैव मनःप्रवृत्तिरवधार्यते । किं च विषयाऽन्तरव्याक्षिप्तमनस्कस्य चक्षुरादिसंयुक्तेष्वपि रूपादिषु ज्ञानाऽनुदयादस्ति तत्रापि मनोव्यापार इति निश्चीयते । तथा शब्दादिषु गृह्यमाणेषु तदतिरिक्तेष्वर्थान्तरेषु सर्वेषु स्मरणं न जायते, तदवगम्यते नूनं तद्ग्रहणे मनो व्यापृतमिति । इतरथा त्वव्यापृतं मनोऽर्थान्तरेष्वपि सर्वेषु स्मृतिमादधीतेति न सर्वास्मृतिः सिध्येदित्याह न चेति । श्रोत्रग्रहणवेलायामित्यनुषङ्ग इति ॥ १६६ ॥

ननु बोधस्वभावः पुरुषोऽन्याऽनपेक्ष एव विषयानान्तरान् बाह्यांश्च जानाति, किमस्यान्तःकरणेन बहिः करणेन वा ? तत्राह बोधेति । यदि बोधस्वभावतया पुरुषो विषयेषु बोद्धव्येषु करणं नाऽपेक्षते ततः सर्वदा सर्वं जानीयात् । ततोऽस्त्य-

---

१. 'स्थिति' – ख

□ अन्तःकरणसद्भावे प्रमाणमाह ।

* अन्तःकरणसद्भावे प्रमाणान्तरम् ।

युगप[1]द्विषयेऽप्यस्य [2]करणाऽपेक्षिता न चेत् ॥ १६७ ॥

❀ तस्माज्ज्ञानाऽनुसारेण व्यवस्थासङ्करौ क्व चित् ।
ग्राह्यग्राहकशक्तिभ्यः कार्यद्वारेण कल्पितौ ॥ १६८ ॥

चक्षूरूपादिभेदस्तु पञ्चधैव व्यवस्थितः ।
तेन नीलादिभेदेऽपि नेन्द्रियाऽऽनन्त्यकल्पना ॥ १६९ ॥

तस्मात् पञ्चभिरप्यक्षैर्बोधः सत्तागुणत्वयोः ।
[3]द्रव्यमूर्तौ पुनर्द्वाभ्यां रूपादावेकशः स्थितिः ॥ १७० ॥ ऽ

न्यापेक्षा । ततश्च बाह्येषु रूपादिषु चक्षुरादीनां करणत्वमन्वयव्यतिरेकाभ्यामनुमीयते । सुखादिवेदनस्य तु किं चित्करणमनुमीयते । तत्र लिङ्गादीनामसम्भवात्तज्जन्यत्वे चाऽपरोक्षत्वानुपपत्तेरिन्द्रियमेवेति निश्चीयते, तत्तु मन उच्यते । ननु शरीरमेव मनोऽस्तु, न, इन्द्रियत्वेन नेत्रादिवत् तद्व्यतिरेकानुमानादिति ॥ १६७ ॥

प्रकृतमुपसंहरति तस्मादिति । ज्ञानाख्यकार्यद्वारेण ग्राह्यग्राहकशक्तयः, ताभ्यः क्व चिद्रूपादावसंकरः क्व चिद् द्रव्यादौ च संकर इति ॥ १६८ ॥

किमिति तर्हि रूपादीनामिव रूपविशेषाणामपि नीलपीतादीनामिन्द्रियभेदो न कल्प्यते ? अत आह चक्षूरूपादीति । न हि रूपरसादिवत् रूपविशेषोपलब्धिव्यवस्थाऽस्ति, यत इन्द्रियभेदः कल्प्येत, अतः पञ्चधैव चक्षुरादिभेदः । तथा रूपादीनामपि चाक्षुषत्वं श्रोत्रत्वम् इत्येवं पञ्चधैव भेदो व्यवस्थित इति न नीलादिवशेनाऽनन्तेन्द्रियकल्पनेति ॥ १६९ ॥

क्व पुनरेषामिन्द्रियाणां संकरः क्व वा व्यवस्थितत्वं, तत्संक्षिप्य दर्शयति तस्मादिति । मूर्त्तिः परिमाणम्, तच्च द्रव्यं च, द्वाभ्यां दर्शनस्पर्शनाभ्यामिति ॥ १७० ॥

---

❀ संकरे व्यस्थायां च कार्यदर्शनं प्रमाणम् ।

ऽ स्पर्शवद्द्रव्यपरिमाणं मूर्तिः, असर्वगतद्रव्यपरिमाणं वा,—तद्विशिष्टानि भूम्यप्तेजांसि द्रव्याणि द्वाभ्यां दर्शनस्पर्शनाभ्यामुपलभ्यन्ते । रूपादिपञ्चकं वेकैकशश्चक्षुरादिभिः ।

१. 'विषयेष्वस्य'—ख
२. 'कारणा'— क ग
३. 'द्रव्यमूर्तौ'—क

ननु जात्यादिरूपेऽपि शब्दाऽभेदोपचारतः।
प्रवर्तमाना मिथ्या स्याद् [1]बुद्धीरूपेषु बुद्धिवत् ॥ १७१ ॥ □

न शब्दाऽभेदरूपेण बुद्धिरर्थेषु जायते।
प्राक् शब्दाद् यादृशी बुद्धिः शब्दादपि हि तादृशी ॥ १७२ ॥

'ननु गोत्वादिरूपेण गवाकारादिबुद्धयः।
न प्राक् शब्दार्थसम्बन्धज्ञानात्सन्ति कदा चन ॥ १७३ ॥

जात्यादेस्तत्स्वरूपं चेदशब्दज्ञोऽपि लक्षयेत्।
अन्वयव्यतिरेकाभ्यां शब्दरूपत्वनिश्चयः' ॥ १७४ ॥

यथा रूपादयो भिन्नाः प्राक् शब्दात्स्वात्मनैव तु।
गम्यन्ते [2]तद्वदेवैतत्संज्ञित्वं केवलं परम् ॥ १७५ ॥

शब्दविकल्पमिदानीमनुसंधत्ते, तत्र चोदयति नन्विति। जात्यादिरूपत्वाद्वस्तुनस्तद्रूपप्रतीतेरस्तु नामाऽमिथ्यात्वम्, शब्दस्य त्वार्थान्तरत्वात् तद्रूपा बुद्धिर्मिथ्यैव। तत्र ये जातिगुणक्रियावाचिनो गवादिशब्दाः ते प्रथमं स्वाऽभिधेयं जात्यादिकं स्वात्मतया विकल्प्य पश्चात् तादृशेन जात्यादिना द्रव्यं विकल्पयन्ति। तत्र यद्यपि द्रव्यस्य जात्याद्यात्मना न मिथ्यात्वं तथापि जात्यादेः शब्दात्मता मिथ्यैव। ये तु डित्थादिशब्दा द्रव्यवाचिनः तेऽपि द्रव्यमेव साक्षाच्छब्दाऽभेदेन विकल्पयन्तीति मिथ्यात्वमिति ॥ १७१ ॥

परिहरति न शब्देति। बुद्धिरेवाऽत्र शब्दाकारा नास्तीति भावः ॥ १७२ ॥

पुनश्चोदयति नन्विति द्वयेन। गवाकारादिषु गोत्वजात्यादिषु गोत्वशुक्लत्वादिरूपेण बुद्धयो न शब्दाऽर्थसम्बन्धज्ञानात्प्राग्जायन्ते। तद्यदि जात्यादेरेव रूपं तत् स्यादशब्दज्ञोऽपि तद्रूपं लक्षयेत्। न तु तदस्ति। तस्माच्छब्दरूपमेव तदिति ॥ १७३ ॥ ॥ १७४ ॥

परिहरति यथेति। रूपादिस्वलक्षणवदेव जात्यादिकमपि प्रागेव शब्दाऽर्थसम्बन्धज्ञानात् स्वेनैव रूपेण गम्यते न शब्दरूपेण। शब्दज्ञस्तु संज्ञित्वं केवलमधिकं स्मृत्वानुसंधत्ते नाऽन्यत्किंचिदिति ॥ १७५ ॥

---

१. बुद्धिरूपेषु—ग, 'बुद्धिरूपेष्वु'—ख

२. 'तद्वदेवैते'—क

□ अशब्दात्मनां शब्दात्मना निरूपणे पुनरपि पारूप्यमापन्नमिति मृगतृष्णादिज्ञानवदेव पञ्च विकल्पा मिथ्या स्युः।

∴ न चाऽविकल्पितः शब्दादिति वाच्यो न गृह्यते ।
तेनाऽगृहीतशब्दोऽपि गोत्वादीन् प्रतिपद्यते ॥ १७६ ॥
श्रुतिसंस्पर्शबोधेऽपि नैवाऽभेदोपचारता[1] ।
विवेकादर्थशब्दानां चक्षुः श्रोत्रधिया कृतात् । १७७ ॥ ✤
अनन्तधर्मके धर्मिण्येकधर्माऽवधारणे ।
शब्दोऽभ्युपायमात्रंस्यान्नाऽऽत्माऽध्यारोपकारणम् ॥ १७८ ॥
न चोपेयेऽभ्युपायस्य रूपाध्यासः प्रसज्यते ।
न हि दीपेन्द्रियादीनां [2]रूपाऽध्यारोप इष्यते ॥ १७९ ॥ ☐

अथाऽशब्दज्ञस्य नैव गोत्वादिप्रतीतिरस्ति, शब्दाऽनुवेधस्य तदानीमभावात् । अशब्दाऽनुविद्धस्य च प्रत्ययस्याऽभावादित्युच्यते, यथाह—

'न सोऽस्ति प्रत्ययो लोके यः शब्दाऽनुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते इति ॥ इति' ।

अत आह न चेति । उक्तमशब्दानुविद्धमपि ज्ञानमस्तीति, तेनाऽशब्दज्ञोऽपि प्रत्येत्येव गोत्वादिकमिति ॥ १७६ ॥

एवं च शब्दसंस्पृष्टबोधेऽपि संज्ञित्वमेवाऽधिकं न ताद्रूप्यप्रतीतिरित्याह श्रुतीति । कस्मादित्याह विवेकादिति ॥ १७७ ॥

यदि न शब्दा स्वात्मानमर्थेऽध्यारोपयति, किं तर्हि करोत्यत आह अनन्तेति ॥ १७८ ॥

यद्युपायः शब्दो, व्यक्तमसौ रूपमर्थेऽध्यारोपयति दर्पण इव मुखे, अत आह न चेति ॥ १७९ ॥

---

∴ सिध्यत्यपि शब्दात्मकता, यदि शब्दसंभेदात् प्राक् गोत्वादयो न प्रतीयन्त एव । न त्वेतदस्ति, अगृहीतसंबंस्यापि तद्बोधोत्पादात् इति भावः ।

✤ द्वाभ्यामिन्द्रियाभ्यां द्वावर्थशब्दौ गम्येते ।

☐ अनैकान्तिको हेतुरितिभावः ।

१. 'चारतः':—ख

२. 'रूपेऽध्यारोप'—ख

नित्यं यदि च गोत्वादि शब्दरूपेण गृह्यते ।
[1]रूपान्तरं न दृष्टं चेद् भेदाऽध्यासौ कुतोन्विमौ ॥ १८० ॥

यद्यभेदो न मिथ्यात्वं [2]भेदश्चेत्स्यात्स्वरूपतः ।
नाऽध्यारोपप्रसङ्गः स्याद् भ्रान्त्या त्वध्यासकल्पना ॥ १८१ ॥

शब्देनैव च निर्देशो गृहीतेऽर्थेऽवकल्पते ।
गौरित्येव [3]च निर्देशो वाच्यतद्बुद्धिवादिनाम्[4] ॥ १८२ ॥ ∟

[5]निर्देशतुल्यतायां च श्रोत्रा [6]वक्तुः सरूपता ।
शब्दज्ञानप्रमेयेषु विज्ञानस्याऽवसीयते ॥ १८३ ॥

किं च यदि व्यक्तिरिव जातिरूपेण जातिरपि शब्दरूपेण गृह्यते, न च बाध्यते, तथा सत्यभेद एव स्यात् न त्वध्यास इत्याह नित्यमिति ॥ १८० ॥

सति चाऽभेदे तदनुविद्धस्य बोधस्य न मिथ्यात्वमित्याह यदीति । भेदे वा नाऽध्यारोपो भ्रान्त्या तु भवतामध्यारोपकल्पनेत्याह भेदश्चेदिति । १८१ ॥

भ्रान्तिकारणमाह शब्देनेति । सर्वमेव वस्तु शब्देन परस्मै निर्दिश्यत इति । ततः किमित्याह गौरिति । वाच्यं च तच्च वचनं बुद्धिश्च वाच्यतद्बुद्धयः; तद्वादिनां पुंसां गौरित्येव निर्देशः, गौरित्यर्थो, गौरिति शब्दो, गौरति ज्ञानमिति ॥ १८२ ॥

तथापि किमित्यत आह निर्देशेति । वक्तुस्त्रिष्वपि निर्देशं तुल्यं दृष्ट्वा श्रोता त्रिष्वपि ज्ञानस्य वक्तुः सरूपतां कल्पयति, तत्कृतनिर्देशसरूपताम्, एकरूपतामिति यावत् ॥ १८३ ॥

---

१. 'रूपान्तरमदृष्टं' ख
२. 'भेदश्च स्यात्'—ख
३. 'हि'—ख
४. 'वाचिनाम्'—ख
५. निर्देशतुल्यतायाश्च'—ख
६. 'वक्तृस्वरूपता'—ख

∟ त्रयाणामपि वाच्यवाचकज्ञानानां समानो निर्देशः गौरितिशब्दः गौरित्यर्थः गौरितिज्ञानम् । वाच्यं च स बुद्धिश्च वाच्यतद्बुद्धयः, तद्वादिनां पुरुषाणां गौरिति समानो निर्देशः प्रतीयत इत्यर्थः ।

भ्रान्तिहेतुसमानत्वेऽप्युपायत्वान्मतिश्रुती ।
मन्यतेऽर्थं समध्यस्ते [1]नाऽर्थाध्यासं तयोः पुनः ॥ १८४ ॥ ∵

गोत्वे सास्नादिम[2]द्रूपा गादिरूपाऽभिधायके ।
॥ निराकारोभयज्ञाने० संवित्तिः परमार्थतः ॥ १८५ ॥

यदि चाऽभेदरूपेण शब्देनाऽर्थः प्रतीयते ।
एकरूपत्वमक्षादौ देवनादेः प्रसज्यते ॥ १८६ ॥ ❀

ननु निर्देशतुल्यतयाऽध्यासं मन्यमानः किं शब्दज्ञानयोरेवार्थेऽध्यारोपं मन्यते न त्वर्थस्य तयोरत आह भ्रान्तीति । ज्ञानाऽऽरोपश्च कैश्चिज्जात्यादीनामाश्रितः स शब्दाऽध्यासनिरासेनैव तुल्यन्यायतया निरस्तो भवतीति इह नोपन्यस्त इति ॥१८४॥

तदेवं भ्रान्तिरेवारोपः, परमार्थतस्तु त्रिष्वपि विलक्षणैव संविदित्याह गोत्व- इति ॥ १८५ ॥

केचित्तु जात्यादीनपह्नुत्य स्वरूपमेव शब्दानामभिधेयं मत्वा तस्यैव व्यक्तावारोपं मन्यन्ते । शब्दैक्यादेव च खण्डमुण्डादिष्वेकरूपताऽवगमो न जातिनिबन्धन इति मन्यन्ते, तान् प्रत्याह यदि चेति । शब्देन सहाऽभेदेनेत्यर्थः ॥ १८६ ॥

---

१. 'नार्थाध्यासतयोः'—ख

∵ पूर्वपूर्ववक्त्रनुसारेणोत्तरोत्तरेषां श्रोतॄणां निर्देशसाधारण्यादध्यासभ्रमः इति पूर्वमुक्तम् । यदि निर्देशसाधारण्याद् भ्रान्तिः आर्थाध्यास एव किं न शब्दबुद्ध्योः प्रतिपाद्यते । समानं हि भ्रान्तिबीजम् । उपायो ह्यर्थस्य जडात्मनः स्वयमप्रकाशस्य मतिश्रुती । उपायपूर्विका चोपेयस्थितिरिति तत्पूर्वमर्थं बुध्यमानास्तदध्यासं मन्यन्ते । श्रुतिश्च श्रूयत इति । शब्दोऽभिधीयते । मत्यध्यासश्च पूर्वमनुपक्षिप्तोऽपि कैश्चिदाश्रितः । स च शब्दाध्यासनिराकरणेनैव तुल्यन्यायतया निराकृतो भविष्यतीत्युपन्यस्तः । एवं बौद्धगन्धिवैयाकरणा मन्यन्ते— जात्यादिरर्थो व्यतिरेकाव्यतिरेकविकल्पदूरीकृतनिरूपणः । शून्याङ्कुरजन्मादौ तु बाह्यासंभवादशक्योऽभ्युपगन्तुम्, अतो ज्ञानाकार एवार्थ इति । तदपि ज्ञानात् प्रागेव अर्थरूपोपलंभात् तद्द्वारेणैव ज्ञानावधारणान्निराकृतं वेदितव्यम् । विकल्पपरिहारस्तु आकृतिग्रन्थे वक्ष्यते । शून्यादौ तु बाह्यार्थसंभवो निरालम्बनवाद इति ।

२. 'रूपांगादिरूपा'—ख

❀ अक्षादौ शब्दे अध्यस्यमाने शब्दैकत्वात् तद्रूपत्वाच्चार्थस्य देवनादेरेकत्वं प्रसज्यत इति ।

स्यादनक्षनिवृत्त्या चेत् न प्राक् शब्दात् प्रतीयते ।
गवादिष्वपि तुल्यं चेन्नैकरूपस्य दर्शनात् ॥ १८७ ॥ △

त्रये बिभीतकादीनां नैकधर्मान्वयोऽ[1]स्ति हि ।
शब्दः साधारणस्तेषां जातिशब्दाद्विलक्षणः ॥ १८८ ॥

[2]परस्परविभिन्नं तु ज्ञायतेऽत्राऽऽकृतित्रयम् ।
तदध्यासे न युज्येत तद्रूपस्याऽविभागतः ॥ १८९ ॥

भिन्नाः स्युरक्षशब्दाश्चेन्नाऽर्थे संशयदर्शनात् ।
न सामान्यादृते स स्याद्रू[3]पाऽभेदश्च गम्यते ॥ १९० ॥ ∵

भवत्यादौ च भिन्नेऽपि नामाख्यातत्वसंज्ञया ।
रूपैकत्वेन चाऽध्यासे तुल्यार्थत्वं प्रसज्यते ॥ १९१ ॥

नन्वनक्षव्यवृत्तिरूपेणाऽस्त्येव त्रयाणामेकत्वमिति शङ्कते **स्यादिति** । दूषयति **नेति** । अध्यासवादिनोऽभिप्रायं शङ्कते **गवादिष्विति** । परिहरति **नैकरूपस्येति** ॥ १८७ ॥

अक्षादिषु नैवमस्तीत्याह **त्रयेइति** । कस्य तर्हि तत्राऽन्वयोऽत आह **शब्द इति** । शब्द एवात्र साधारणो न तु गवादिवदर्थैक्यमिति ॥ १८८ ॥

कस्मादित्याह **परस्परेति** । तच्च वैलक्षण्यमध्यासपक्षे न युज्यते, शब्दरूपस्याऽविलक्षणत्वादित्याह **तदिति** ॥ १८९ ॥

शङ्कते **भिन्नाः स्युरिति** । दूषयति **नार्थे इति** । ततः किमित्याह **न सामान्यादिति** । साधारणधर्मदर्शननिबन्धनो हि संशयो न शब्दभेदे ऽवकल्पत इति । प्रत्यभिज्ञानाच्च न शब्दभेद इत्याह **रूपेति** ॥ १९० ॥

दोषान्तरमप्यध्यासे दर्शयति **भवतीति** ॥ १९१ ॥

---

△ अध्यासवादी स्वाभिप्रायेण चोदयति ।

१. 'न्वयास्ति'—ख

२. पूर्वोत्तरार्धव्यत्यासेनवर्तेते—ख

३. 'रूपभेदश्च' – ख

∵ न वर्णातिरिक्तः पदस्फोटोऽस्तीति । वर्णा एव हि पदं, ते च अभिन्नरूपाः प्रतीयन्ते ।

'शब्दनिष्पत्त्यभेदाच्च तिङन्तार्थस्य साध्यता ।
कथं, कथञ्च मूर्त्तोऽर्थो वाचके मूर्तिवर्जिते ॥ १९२ ॥ *

• गवाऽश्वशुक्लशब्दादेर्वाच्यरूपाऽनपेक्षणे ।
वाचकत्वव्यवस्थानं कथं जातिगुणादिषु ॥ १९३ ॥
वृक्षप्लक्षादिशब्दानां तुल्ये भेदे घटादिभिः ।
विशेषणविशेष्यत्वं कथमर्थाऽनपेक्षया ॥ १९४ ॥
सामानाधिकरण्यं च न स्याद्वाचकबुद्धिवत् ।
एकत्र चोपसंहारो न बुद्ध्योर्निर्विकल्पके[1] ॥ १९५ ॥

इदमपरमध्यासेऽनुपपन्नं स्यादित्याह शब्देति कथमन्तेन । शब्दस्य हि निष्पन्नरूपता आख्यातेष्वपि न भिद्येत । अतस्तस्मिन् सिद्धरूपेऽध्यस्यमाने तिङन्तार्थस्य पूर्वापरीभूतता न स्यादिति ।

केचित् शब्दविवर्त्तनम्, तान् प्रत्याह कथमिति । मूर्त्तानामेव हि क्षीरादीनां चन्द्रादीनां च मूर्त्तरूपो दध्याद्यात्मकः परिणामः प्रतिबिम्बरूपो वा विवर्त्तो दृश्यते । शब्दस्य त्वमूर्त्तस्य मूर्त्तोऽर्थः कथं परिणामो विवर्त्तो वा स्यादिति ॥ १९२ ॥

जातिगुणाद्यपह्नवेन च शब्दरूप एवार्थेऽध्यस्यमानेऽयं जातिशब्दोऽयं गुणशब्द इत्यपि व्यवस्था न स्यादित्याह गवाश्वेति ॥ १९३ ॥

जात्याद्यनपेक्षया शब्दस्वरूपेऽध्यस्यमाने विशेषणविशेष्यताऽपि न व्यवतिष्ठत इत्याह वृक्षेति ॥ १९४ ॥

सामानाधिकरण्यं च नीलोत्पलादिषु वाचकबुद्ध्योरिवाऽर्थबुद्ध्योरपि न स्यात्, वाचकस्यैव वाच्यत्वात्, वाचकयोश्च भेदादेकविषयत्वाऽभावादेकविषयत्वाऽधीनत्वाच्च सामानाधिकरण्यस्येत्याह सामानाधिकरण्यं चेति । ननु जात्यादिवादिनामिवैकस्वलक्षणविषयबुद्धिजनकतया सामानाधिकरण्यं स्यादत आह एकत्रेति । स्वलक्षणे प्रवर्त्तमानयोर्नीलोत्पलशब्दयोर्न किंचिद्व्यवस्थापकमस्ति, अस्मिन् स्वलक्षणे वृत्तिर्नास्मिन्निति जातिगुणादेरभावादिति ॥ १९५ ॥

---

* परिणामवादिनो हि वागेव अर्थात्मना परिणमतीति मन्यन्ते, ते उपालभ्यन्ते । कथममूर्तस्य मूर्तः परिणामः । मूर्तानां हि मृदादीनां मूर्त्तो घटादिपरिणामो भवतीति युक्तम् । एवं विवर्तवादेऽपि वाच्यम् । मूर्तं हि मुखमादर्शे विवृत्तं युक्तं यद् मूर्तमुपलभ्यते । अमूर्त्तविवर्ते तु कथं मूर्तनिर्भासा बुद्धिः ।

• देवदत्तो–गौः–पचति–शुक्ल इत्येवमादिषु द्रव्यजातिगुणक्रियावाचकत्वं न प्राप्नोति ।

1. 'क.'—ख

∵ वस्तुमात्रे स चेदेवं सर्वेषामेकवाच्यता ।
भवेद् गवादिशब्दानां सर्वैर्वस्तु हि गम्यते ॥ १९६ ॥

० न चाऽसाधारणे[1] भेदे नीलोत्पलमितीष्यते ।
न हि शब्दप्रवृत्तिः स्यादन्यत्राऽन्यत्र[2] चेष्यते ॥ १९७ ॥

न च नीलोत्पलं नाम वस्त्वेकं किंचिदिष्यते ।
शब्दाऽर्थयोर्यतो भेदो गम्यतेऽवयवाऽनुगः ॥ १९८ ॥

शब्दद्वयस्य चाऽध्यासः पर्यायेष्वपि [3]दृश्यते ।
एकाऽधिकरणास्तेन[4] स्युस्ते नीलोत्पलादिवत् ॥ १९९ ॥

न चाऽनवगते पूर्वं पदमर्थं प्रयुज्यते ।
तत्र सम्बन्धवेलायां[5] कीदृशोऽर्थः प्रतीयते ॥ २०० ॥

यदि च वस्तुमात्रे प्रयोगस्ततः सर्वेषां गवादिशब्दानां वस्तुविषयत्वात्सामानाधिकरण्यं स्यादित्याह वस्त्विति । एकवाच्यतेति । सामानाधिकरण्यमित्यर्थः ॥ १९६ ॥

यदि यत्राऽसाधारणे नीलोत्पलादिशब्दयोः प्रयोगो दृष्टः तत्र तयोः प्रयोगस्तथा सत्यन्यस्मिन्नदृष्टप्रयोगे प्रथमप्रयोगो न स्यादित्याह नचेति ॥ १९७ ॥

न च नीलोत्पलं नाम जातिर्भवतेष्यते, यन्निबन्धनः प्रयोग इत्याह न चेति । न परं नेष्यते, निष्प्रमाणकं चेत्याह शब्देति । शब्दयोरर्थयोश्च जातिगुणयोर्भेदाऽवगमादिति ॥ १९८ ॥

किञ्च, नीलोत्पलवदेव करहस्तशब्दयोरपि भिन्नयोरेवैकत्राध्यासादपौनरुक्त्यं सामानाधिकरण्यं स्यादित्याह शब्देति ॥ १९९ ॥

किं च, सम्बन्धग्रहणाऽपेक्षः शब्दः, तत्र सम्बन्धग्रहणकाले कीदृगर्थः प्रतीयत इति निरूपणमशक्यमित्याह न चेति ॥ २०० ॥

---

∵ सर्वेषां हि गवादिशब्दानां वस्तुमात्रविषयत्वेन पर्यायत्वप्रसंगः ।

० अवयवार्थरहितनीलोत्पलस्वलक्षणान्तराऽभ्युपगमे हि तेषां बहुत्वाद् यस्मिन्नेव नीलोत्पलस्वलक्षणे सम्बन्धग्रहणं ततोऽन्यत्र नीलोत्पलशब्दप्रयोगो न प्राप्नोतीत्यर्थः ।

१. 'णोभेदः'—ख
२. 'चेक्षणात्'—ख
३. 'विद्यते'—ख
४. 'स्तेऽपि'—ख
५. 'कीदृगर्थः'—ख

तदानीं नाऽर्थरूपे[1] हि शब्दरूप[2] त्वसम्भवः ।
❀ न चाऽसाधारणांशेन सम्बन्धाऽनु[3]गमः क्वचित् ॥ २०१ ॥
तत्र पूर्वाऽनपेक्षत्वे यद्यात्माऽध्यासशक्तता ।
शब्दस्य प्रथमेऽपि स्याच्छ्रवणेऽध्यस्तरूपता ॥ २०२ ॥
मम वाच्याऽनभिज्ञत्वान्न[4] भवेत्स्मरणं ततः ।
भवतस्त्वर्थरूपस्य[5] वाचकेष्वपि दर्शनात् ॥ २०३ ॥ ऽ
∵ यथा त्वज्ञातशब्दानां वाच्ये तद्धीर्न[6] जीयते ।
तथैवाऽज्ञातवाच्यानामुपलब्धे ऽपि वाचके ॥ २०४ ॥

कथं न शक्यमित्याह तदानीमिति । गृहीते सम्बन्धे शब्दात्मकताऽर्थस्य गम्यते न प्रागिति । यत्त्वसाधारणं तदा प्रतीतं तेन न सम्बन्धानुभवस्त-स्याऽऽनन्त्यादित्याह न चेति ॥ २०१ ॥

तत्र यद्यगृहीतसम्बन्ध एवात्मानं शब्दोऽर्थेऽध्यस्येत्, प्रथमश्रवणेऽप्यध्यस्येदि-त्याह तत्रेति ॥ २०२ ॥

ननु तवापि नित्यत्वात्सम्बन्धस्य तुल्यमेतदत आह ममेति । गृहीतसम्बन्धो हि प्रत्यायकोऽयम्, अतो योऽस्येदं वाच्यमिति न जानाति न तस्य शब्दादर्थस्य स्मरणं सम्भवतीति । भवतस्तु भवेदेव स्मरणं, सम्बन्धग्रहणाऽनपेक्षेषु वाचकेषु गृहीतेष्वेवाऽर्थज्ञानाऽभ्युपगमादित्याह भवत इति ॥ २०३ ॥

न त्वेतदस्तीत्याह यथेति ॥ २०४ ॥

---

१. 'पि'—ख २. 'स्य'—ख ३. 'नुभवः' ख
४. 'त्वं न भवेत् कारणान्तरम्'—ग ५. 'वाचकेष्वेव'—ग ६. 'जायते—ख

❀ भवत्पक्षे सम्बन्धग्रहणं न प्राप्नोति तावत् स्वलक्षणेषु, तेषामानन्त्यात्, नापि सामान्ये, शब्दादन्यस्य शब्दाध्यासवादिनां सामान्यस्य अभावात्, शब्द एव एको बहुषु स्वलक्षणेषु अध्यस्तः प्रतीयते इति अध्यासवादिनां दर्शनम् ।

ऽ येषामपि शब्दविपरिवर्तरूपः अर्थः तेषामगृहीतसम्बन्धानामेव अर्थावगतिः प्राप्नोति, सम्बन्धसापेक्षतायां हि क्व कस्य सम्बन्धग्रहणं स्यात् ? अस्मत्पक्षे तु भिन्नत्वादस्ति सम्बन्धग्रहणापेक्षा ।

∵ अस्मत्पक्षे तु यथागृहीतसंबन्धोऽपि अश्रुतशब्दः अर्थं न प्रत्येति, तथा श्रुतशब्दोऽपि अगृहीतसंबंधः ।

□ तस्मान्नाऽतीव वाच्यानां वाचकाऽधीनता भवेत् ।
स्मारकत्वाच्च तेष्वेव पारतन्त्र्यं प्रतीयते ॥ २०५ ॥

* तेन सम्बन्धवेलायामर्थात्मा योऽवसीयते ।
शब्दादपि स एवेति नाऽर्थरूपं प्रणश्यति ॥ २०६ ॥

प्रवृत्तौ वा निवृत्तौ वा[1] यां शब्दः कुरुते मतिम् । △
तादात्म्यं[2] तस्य शब्दस्य न कथं चित्प्रतीयते ॥ २०७ ॥

करहस्तादिशब्देभ्यः शब्दरूपस्य भेदतः ।
भिन्नोऽर्थः संप्रतीयेत तदध्यारोपकल्पने ॥ २०८ ॥

'आत्माऽध्या[3]सस्तु सादृश्यादुपरागाच्च दृश्यते ।
न तावदर्थसादृश्यं शब्दस्येह प्रतीयते ॥ २०९ ॥

न चाऽनुरागः शब्देन भिन्नदेशस्य युज्यते' ।
दूरस्थप्रतिबिम्बं च नाऽरूपस्य प्रतीयते ॥ २१० ॥

उपसंहरति तस्मादिति । न शब्दरूपेणाऽर्थोऽवगम्यते यथाऽवस्थितमेव त्वर्थरूपं शब्दः स्मारयति इति ॥ २०५ ॥

एवं च सविकल्पकस्य न मिथ्यात्वमित्याह तेनेति । न प्रणश्यति, नान्यरूपं गम्यत इत्यर्थः ॥ २०६ ॥

इतश्च न शब्दाऽध्यास इत्याह प्रवृत्ताविति ॥ २०७ ॥

दोषाऽन्तरमाह करेति ॥ २०८ ॥

किं चाऽध्यासः सादृश्यादनुरागाद्वा भवति, शुक्ताविव रजतस्य, मणाविव लाक्षायाः । न चेह सादृश्यमस्ति, दूरस्थत्वाच्च नाऽनुराग इत्याह आत्मेति सार्द्धेन । अथ दूरस्थोऽपि शब्दोऽर्थे चन्द्र इव जले प्रतिबिम्बितो गृह्यते, अत आह दूरस्थेति । रूपवतामेव प्रतिबिम्बमिति, चक्षुर्ग्राह्याणामेवेत्यर्थः ॥२०९॥२१०॥

---

□ तस्मात् शब्दविपरिवर्तरूपत्वात् न शब्दतन्त्रोऽर्थः, अपि तु स्मारकत्वेन शब्दस्य, तत्तन्त्रत्वमर्थस्य ।

• संम्बन्धग्रहणवेलायां हि यादृगर्थः प्रतीयते, शब्दादपि हि तादृगेव प्रतीयते, न शब्दविशिष्टो नापि विपरिवर्तरूपः ।

△ अध्यासपक्षे च प्रवृत्तिनिवृत्तिरूपार्थावगतिर्न प्राप्नोति अतदात्मकत्वाच्छब्दस्य ।

१. 'यः शब्दः सकृदुच्यते'-ग २. 'तत्र'--ग ३. 'सश्च'—ख

शब्दसर्वगतत्वेन यद्यर्थप्राप्तिरुच्यते ।
सर्वाऽर्थानां भवेच्छब्दैः सर्वैरेवाऽनुरञ्जनम् ॥ २११ ॥

न च भिन्नेन्द्रियग्राह्यं किं चिदस्त्यनुरागकृत् ।
नहि लाक्षाऽनुरक्तेऽपि स्फटिके[1] धीस्त्वगादिभिः ॥ २१२ ॥

☐ अनुमानाऽऽगमौ मिथ्या स्यातामध्यासकल्पने ।
निरूपणस्य मिथ्यात्वात् सर्वाऽभावः प्रसज्यते ॥ २१३ ॥

[2]तथाऽस्त्विति यदि ब्रूयान्मिथ्या स्ववचने सति ।
कथमेवं वदेदर्थो नाऽनृताद्धि प्रतीयते ॥ २१४ ॥

शून्यवादोचराच्चापि यथाऽर्थं बुद्धिशब्दयोः ।
प्रवृत्तिर्न तु तत्तान्त्रमर्थ[3]रूपं कदा चन ॥ २१५ ॥

तस्मात्प्रागपि ये [4]शब्दाद् भिन्नैकत्वादिबुद्धिभिः ।
गृह्यन्ते सर्वदा तेषां परमार्थाऽस्तिता भवेत् ॥ २१६ ॥

यदुक्तं दूरस्थत्वान्नाऽनुराग इति, तत्र शङ्कते शब्देति । दूषयति सर्वेति ॥ २११ ॥

इतश्च नाऽनुराग इत्याह न चेति । कारणमाह नहीति ॥ २१२ ॥

किं चाऽध्यासवादिनामनुमानाऽऽगमयोः प्रामाण्यं न स्यादित्याह अनुमानेति । अत्यल्पमिदमुच्यते, सर्वस्य निरूपणस्य सविकल्पकस्य मिथ्यात्वात्तन्निबन्धनत्वाच्च सर्वलोकव्यवहाराणामुच्छित्तिरेव स्यादित्याह निरूपणस्येति ॥ २१३ ॥

इतरस्त्वाह तथेति । इष्टमेव नः सर्वाऽप्रामाण्यमिति । दूषयति मिथ्येति । सर्वं मिथ्येत्येतदपि भवद्वाक्यं मिथ्या स्यात्, तन्मिथ्यात्वे चेतरेषाममिथ्यात्वमिति ॥ २१४ ॥

किं चाऽयमध्यासः शून्यवादनिरासेनैव निरस्त इत्याह शून्यवादेति । बुद्धिवदेव शब्दस्यापि नित्यं परविषयत्वान्न स्वात्मग्रहणसामर्थ्यमिति ॥ २१५ ॥

उपसंहरति तस्मादिति । सर्वदेति । परस्तादपि पूर्वाऽवगतेनैव रूपेणाऽवगमात् न मिथ्यात्वमिति । प्रागपि शब्दादित्यतिशयार्थमुक्तम् ॥ २१६ ॥

---

१. 'धीस्त्वगाधिभिः'—ग
२. 'भवत्विति'—ग
३. 'तत्त्वं'—ग
४. 'शब्दादन्यैकत्वादि'—ग

☐ अत्र निरूपणशब्देन सविकल्पकं ज्ञानमुच्यते ।

□ शब्दाऽभ्युपायकेऽप्यर्थे तदभावे च यद्यपि ।
अर्थबुद्धिर्न जायेत नाऽर्थः रूपं प्रणश्यति ॥ २१७ ॥

चक्षुरादेरभावे हि रूपाद्यात्मा न गृह्यते ।
[1]स्वरूपनाशो रूपादेस्तावन्मात्रेण नेष्यते ॥ २१८ ॥

∴ सम्बन्धस्य च नित्यत्वान्नाऽर्थस्य स्यादरूपता ।
युगपन्न हि सर्वेषामन्याकाराऽर्थवेदनम्[2] ॥ २१९ ॥

तदाकारेऽपि तद्वच्चेद् द्वये सति परीक्ष्यताम् ।
किन्त्वर्थस्याऽतथाभावो ग्रहीतुः किं न्वशक्तता ॥ २२० ॥

△ सदसद्भावयोरर्थे विरोधित्वादसम्भवः ।
ग्रहीतृभेदाच्छक्तत्वमशक्तत्वं च युज्यते ॥ २२१ ॥

शब्दैकगम्यत्वेऽपि ताद्रूप्यस्याऽनवगमान्नाऽर्थस्य स्वरूपहानिरित्याह शब्देति ॥ २१७ ॥

अत्रैव दृष्टान्तमाह चक्षुरादेरिति। चक्षुराद्यभावे रूपादिर्न प्रकाशत इति चक्षुरादिपिधानेन रूपस्य तिरोभावः न तु स्वरूपविनाश इति ॥ २१८ ॥

भवतु वा ताद्रूप्यप्रतीतिः, तथापि न मिथ्यात्वं नित्यं, ताद्रूप्यादर्थस्येत्याह सम्बन्धस्येति । सम्बन्धस्तावन्नित्यः, तादात्म्यमेव च भवतां शब्दार्थयोः सम्बन्ध इति तादात्म्यमेव नित्यं भवति । अरूपत्वमशब्दरूपत्वं "नित्यं यदि च गोत्वादी" त्यत्र गोत्वादिजातीनां शब्दरूपत्वाऽङ्गीकारेण मिथ्यात्वं परिहृतम्, इदानीं तु व्यक्तेरिति न पौनरुक्त्यम् । ननु न प्राक्सम्बन्धज्ञानात्ताद्रूप्यं प्रतीयत इति कथं ताद्रूप्यस्य नित्यत्वमत आह युगपदिति। तदापि कैश्चित्ताद्रूप्यं प्रतीयते न तु कदाचिदपि सर्वेषामन्यरूपप्रतीतिरिति ॥ २१९ ॥

शङ्कते तदाकार इति । परिहरति द्वये सतीति ॥ २२० ॥

तत्र निर्णयमाह सदसद्भावयोरिति ॥ २२१ ॥

---

□ एवं तावत् शब्दसमारोपं निराकृत्य इदानीं तद्विपरिवर्तनं निराकरोति ।

∴ इदानीमभ्युपगम्य शब्दाध्यासं विकल्पस्य प्रामाण्यं दर्शयति ।

△ तदाकारत्वमस्ति नास्ति चेति नोपपद्यते, विद्यमानस्य तु शक्त्यशक्तिभेदादुपलंभानुपलंभौ युक्तौ । शक्तिसदसद्भावौ अपि तदाधारभेदादुपपन्नावेवेति विद्यमानैव तदाकारता अशक्तै र्नानुभूयत इति निर्णयः ।

१. 'स्वभावनाशो'—ग

२. 'बोधनम्'—ख, 'दर्शनम्—ग

श्लो०वा०—*यथाऽन्धाऽनन्धयोः पार्श्वे रूपस्येत्यभिधास्यते।
‡ तेनाऽर्थे ध्वन्युपायस्य तद्धीर्नाऽन्यस्य जायते ॥ २२२ ॥
देवदत्तादिशब्दे तु सम्बन्धाद्यत्वदर्शनात् ।
अर्थस्याऽनित्यताख्यं च ताद्रूप्यस्याप्यनित्यता ॥ २२३ ॥
तत्राप्यौत्पत्तिकी शक्तिस्तद्रूपप्रत्ययं प्रति ।
ग्राह्यग्राहकयोरिष्टा नियोगस्य त्वनित्यता ॥ २२४ ॥

न्या०र०—अत्रैव दृष्टान्तमाह यथेति ।

संबन्धपरिहारेऽभिधास्यतइति । उपसंहरति तेनेति । विद्यमानमेव शब्द-सम्बन्धित्वं शब्दात्मकत्वमर्थस्य येन वृद्धव्यवहारेऽवगतं स ध्वन्युपायः शब्दोपायस्तस्यैव तदात्मकत्वधीर्नाऽन्यस्येति ॥२२२॥ चोदयति देवदत्तेति ॥२२३॥

तेन तत्राऽतदात्मकस्य तादात्म्यप्रतीतेर्मिथ्यात्वमिति तदेतत्केषांचिन्मतेन परिहरति तत्रापीति ।

तत्राप्यर्थस्य यावत्सद्भावं ताद्रूप्यमस्त्येव, ततस्तद्ग्राहकशक्तिः शब्द-

---

* रूपस्य ग्रहणे ग्रहीतृभेदात् शक्ताशक्तत्वं यथेत्यर्थः । इतिरिदमर्थे ।

‡ शक्ताशक्तत्वे विभजते—तेनेति । येनेयं शक्तितो व्यवस्थोपपत्तिमती तेन शब्दोपायकस्य ग्रहीतुः शब्दाकारा धीर्नेतरस्येति विवेकः ।

देवदत्तादिशब्दे तु—अत्र चोदयति—देवदत्तादीति । तु शब्दः पूर्वोक्तनिवृत्तौ । नित्यस्तुस्यादितिवत् । यदेतदुक्तं प्रागपि शब्दाकार एवासावर्थ इति तदव्यापकं, देवदत्तादीनां कल्पनास्वसम्भवात् तत्र हि आदिमान् सम्बन्धः । अर्थोऽपि देवदत्तादिरनित्यः । अतः पूर्वापरयोः कोट्योः प्रसंख्यानात् ताद्रूप्यं शब्दरुपत्वमनित्यम् । अतोऽवश्यमेव तत्रातदाकारं तदाकारतया कल्प्यत इति मिथ्यात्वमिति ।

तत्राप्यौत्पत्तिकी :—परिहरति—तत्रापीति । देवदत्तशब्दोऽपि देवा एनं देयासुरित्याशिषा लब्धमर्थं निजयैव शक्त्या वदति । एवं चैत्रादिशब्दा अपि नक्षत्रग्रहादिनिमित्ता गवाश्वादिशब्दवत् नित्यसम्बन्धा एवेति तद्वदेव नातदाकारता तद्रूपप्रत्ययं प्रतीति, देवैर्दत्तो योऽर्थः स तस्यार्थः अतस्तदर्थरूपप्रत्ययं प्रति ग्राह्यग्राहकयोर्वाच्यवाचकयोरौत्पत्तिकी एव शक्तिः, नियोगमात्रं तु यदभिनवे पिण्डे तदनित्यम् । न च तदनित्यतया शब्दार्थसम्बन्धस्यानित्यता भवति । शब्दस्यातदर्थत्वादिति ।

श्लो०वा०—तत्र सर्वैर्[1]ताद्रूप्यं* प्राङ्नियोगात्प्रतीयते ।
तेनेष्टमेव मिथ्यात्वं कैश्चिदध्यासकल्पने ॥ २२५ ॥

卐 यदा तु[2] यादृशः पिण्डः पूर्वं शब्दात्प्रतीयते ।
तादृशस्मरणे हे[3]तुःशब्दस्तत्र यथार्थता ॥ २२६ ॥

न्या०र०—स्याऽर्थस्य च तद्रूपग्राह्यताशक्तिर्नित्यैव । यस्तु तत्र पिण्डशब्दप्रयोगस्तन्मात्रं समवायाऽपेक्षत्वादनित्यमिति ॥ २२४ ॥ अन्येषां मतमाह तत्रेति ।

अविद्यमानमेव ताद्रूप्यं समयवशात्पश्चात्प्रतीयते, न तु प्रागस्ति, प्रमाणाभावादत एव पश्चादपि नास्त्येवेति मिथ्यैव तत्र शब्दविकल्पोऽध्यासपक्ष इति । ॥ २२५ ॥ परमार्थतस्त्वध्यासाऽभावान्नास्त्येव मिथ्यात्वमित्याह यदा त्विति ।

सम्बन्धाऽवगमवेलायां ततः प्राक्काले च यादृशमर्थरूपं तादृशमेव शब्दः स्मारयति न त्वात्मानमर्थेऽध्यस्यतीति । कथं तर्हि गौरयं शुक्लो गच्छतीति

---

* तत्रसर्वैरताद्रूप्यमिति । यत्र तर्हि पिण्डे नियोगवशादेव देवदत्तादिशब्दा अन्वर्था एव वर्तन्ते । डित्थादिशब्दाश्च अनुगमशून्याः तत्र कथं सत्यत्वं, तत्र हि शब्दात्मनैव अर्थो विकल्प्यते न त्वर्थसमवायि किञ्चिद् विशेषणमस्ति । सैव च नामकल्पनं मिथ्या इत्यापतितं तदिह एकेषां मतेनाभ्युपगमेनैव उत्तरमाह—तत्रेति ।

卐 स्वमतेन परिहारमाह—यदात्विति । सत्यमतद्रूप एवासौ पिण्डः परस्तादपि न शब्दाकारेणावसीयते । किन्तु तदवस्थैव संज्ञा, यादृशोऽसावर्थः पूर्वमवगतस्तादृशस्यैव तस्य स्मरणे हेतुः । अतो नान्यदन्याकारेण प्रतिपन्नमिति कुतो मिथ्यात्वम् । कथं नु नामकल्पनायां डित्थोऽयमिति सामानाधिकरण्यबुद्धिः । अर्थसमवायिना हि विशेषणेन नीलोत्पलादिषु सामानाधिकरण्यं दृष्टम् । एकान्तभिन्नगोचरयोस्तु शब्दार्थबुद्ध्योः कथं सामानाधिकरण्यमिति वक्तव्यम् । अतो भ्रांतिरेवेयम् । मैवम् । उक्तं हि—'नात्र शब्दाकारं वस्तु चकास्ती'ति । डित्थोऽयमिति नायमर्थः डित्थशब्दात्मकोऽयमिति नहीयमीदृशी प्रतिपत्तिरिति । अपि तर्हि डित्थ इति नामास्येति । अतो न नामकल्पना भ्रान्तिरिति ।

१. 'र्नै'—ग
२. 'च'—ख.
३. 'हेतुशब्दस्तत्र'—ख.

श्लो०वा०—*नियोगात्परतो वापि शब्देन व्यज्यतामियम्[1]।
तद्ग्राह्यशक्तिरर्थस्य, पारूप्यं न तावता ॥ २२७ ॥
सर्वाऽऽकारपरिच्छेद्यशक्तेऽर्थे वाचकेऽपि वा ।

न्या०र०—डित्थोऽयमिति च सामानाधिकरण्यं, जातिशब्दस्तावज्जातिं स्मारयित्वा तया तादात्म्येन व्यक्तिं बोधयन्नुपस्थितव्यक्तिबोधकेनाऽयमित्यनेन सामानाधिकरण्यं भजते, तथा गुणशब्दः क्रियाशब्दश्च, डित्थशब्दोऽपि यस्य पिण्डस्य वाचकत्वेन प्रागवगतस्तं स्मारयित्वा तत्तादात्म्येन पुरःस्थितं पिण्डं विकल्पयति न तु स्वात्मना, न हि डित्थोऽयमित्यस्याऽयमर्थः डित्थशब्दोऽयमिति, किं तर्हि डित्थ इति नामास्येत्यर्थः, योऽसौ चैत्रे मास्यस्माभिरुज्जयिन्यामुपलब्धो डित्थः सोऽयमिति, तेनात्रापि न शब्दस्वरूपमर्थस्य विशेषणं किं तु पूर्वाऽनुभूतार्थस्मरणोपयोग्येव, तत्रापि शब्देन पूर्वाऽवगतव्यक्तितादात्म्येन पुरःस्थिता व्यक्तिर्विशेष्यतइति विनैवाऽध्यासेन सामानाधिकरण्यं विशेषणविशेष्यभावश्चाऽर्थमुखेनैव सम्भवतीति निष्प्रमाणकोऽध्यास इति ॥ २२६ ॥

ननु[2] स्मार्यत्वशक्तिरेवार्थस्य डित्थादौ नास्ति समयात्प्रागदर्शनात्, तत्कथं तेनार्थः स्मार्यतेऽत आह नियोगादिति ।

स्मार्यत्वशक्तिरर्थस्य प्रागपि विद्यमानैव नियोगेन समयेन व्यज्यते वा, शब्दात् क्रियते वा, न तु त[3]द्रूपताऽर्थस्य[?]यतोऽयं न [4]स्मार्येत, नियोगशब्देन प्रयोगवाचिना तत्कारणं समयो लक्ष्यतइति । ॥ २२७ ॥

ननु यस्यैव कस्यचिच्छब्दस्य यस्मिन्नेवाऽर्थे समयः क्रियते स एव तं स्मारयति, तत्कथं प्रागपि विद्यते शक्तिरित्युच्यते,ऽत आह सर्वेति ।

---

* अन्यन्मतम्—प्रागपि नामनियोगान्नामाकारग्राह्यशक्तिरर्थस्यासीदिति । अत्यन्तासत्यगगनकुसुमवद् भावयितुमशक्यत्वात् । नियोगे तु कृतेऽसौ शक्तिरभिव्यज्यते परम् । अतः प्रागपि तद्रूपसद्भावेऽस्ति प्रमाणमिति न पारूप्यं, तदेतदाह—नियोगादिति ।

१. 'त्यज्यतां मिथः'—ग, 'व्यज्यतां मिथः'—क,

२. स्मार्यशक्ति—क,

३. तद्रूपता क्रियतेऽर्थस्य—ग,

४. न स्मार्यते—ख,

श्लो०वा०—‡ सर्वाऽऽकारा¹ऽर्थविज्ञानसमर्थे नियमः ²कृतः ॥ २२८ ॥

☉ तत्र शब्दार्थसम्बन्धं प्रमातुः स्मरतोऽपि या³ ।
बुद्धिः पूर्वगृहीताऽर्थ⁴सन्धानादुपजायते ॥ २२९ ॥

चक्षुषा सन्निकृष्टेऽर्थे नाऽप्रत्यक्षमसौ भवेत् ।
विविक्ता एव तेऽप्यर्थाः स्मृतिप्रत्यक्षगोचराः ॥ २३० ॥

स्मर्येते शब्दसम्बन्धौ मा भूत् प्रत्यक्षता तयोः ।
तदप्रत्यक्षभावेन न त्वर्थस्यापि वार्यते ॥ २३१ ॥

गृहीतमपि गोत्वादि स्मृतिस्पृष्टं च यद्यपि ।
तथापि ‡‡व्यतिरेकेण पूर्वबोधात् प्रतीयते ॥ २३२ ॥

न्या०र०–सर्वाः शक्तयो विद्यन्तएवेति न कश्चिद्दोषः ॥ २२८ ॥

विद्यमानास्वेव सर्वासु नियता काचिदेव व्यवहारनियमार्थं समयेनाऽभिव्यज्यते इत्येवं जात्यादिविकल्पानां मिथ्यात्वं निरस्तम्, इदानीं स्मृतिसंभेदे कथं प्रत्यक्षत्वमित्याशङ्कयाह तत्रेति सार्द्धेन । शब्दार्थसम्बन्धं स्मरतोऽपि प्रमातुरित्यन्वयः ॥ २२९ ॥ कथं नाऽप्रत्यक्षमत आह विविक्ता इति ॥ २३० ॥ विविक्तत्वमेव दर्शयति स्मर्येतेइति ॥ २३१ ॥

एकमेव ज्ञानं संस्कारेन्द्रियाभ्यां जायमानं शब्दतत्संबन्धयोः स्मरणम्, अर्थरूपे त्विन्द्रियसंनिकृष्टे प्रत्यक्षमिति ॥ २३२ ॥ नन्वर्थोऽपि गोत्वादिः पूर्वगृहीत एव स्मर्यतइति कथं प्रत्यक्षत्वप्रामाण्यसिद्धिरिति । किं पुनरधिकं तद्दर्शयति व्यक्तीति ।

---

‡ एतदेव प्रपञ्चयति—सर्वाकारेति । अस्ति हि सर्वशब्दपरिच्छेद्यताशक्तिरर्थस्य । यत्र हि डित्थडवित्थयोरन्यतमः शब्दो नियुज्यते स एव तं गमयति । शब्दोऽपि सर्वाकारार्थविज्ञानसमर्थ एव यत्रैव नियुज्यते तमेव गमयति । तदेवमनियमप्रसक्तौ नियममात्रं नियोक्त्रा पित्रादिना क्रियते ।

☉ एवं तावत् सर्वप्रकारं पाररूप्ययुक्तिरुत्सारिता । इदानीं स्मृतिसंकरेण अप्रामाण्यसंभावनां वारयति—तत्रेति सार्धेन ।

‡‡ व्यतिरेकेण आधिक्येनेत्यर्थः ।

१. सर्वाकार परि०—ख,

२. कुतः—ख,

३. वा,—क,

४. 'ऽर्थसम्बन्धादु,'—क,

लशो०वा०—'व्यक्तिकालादिभेदेन तत्राऽस्त्यवसरो मितेः[2]।

(1) यः पूर्वाविगतोंऽशोऽत्र स न नाम प्रतीयते ॥ २३३ ॥
इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम्।
न हि स्मरणतो यत्प्राक्तत्प्रत्यक्षमितीदृशम् ॥ २३४ ॥
वचनं राजकीयं वा वैदिकं वाऽपि [3]विद्यते।
न चापि स्मरणात्पश्चादिन्द्रियस्य प्रवर्तनम् ॥ २३५ ॥
वार्यते केनचिन्नाऽ[4]स्तस्तत्तदानीं प्रदुष्यति।
तेनेन्द्रियार्थसम्बन्धात्प्रागूर्ध्वं वाऽपि यत्स्मृतेः ॥ २३६ ॥
विज्ञानं जायते सर्वं प्रत्यक्षमिति गम्यताम्।
'विमनस्का यदा केचित्स[5]म्बद्धमपि चेन्द्रियैः ॥ २३७ ॥

न्या०र०—व्यक्तयन्तरेऽवगतं सामान्यं व्यक्तयन्तरसम्बन्धितयाऽवगम्यते, पूर्वेद्युरवगतो देवदत्तः परेद्युः प्रथमक्षणे निर्विकल्पकेनाऽवगतः स द्वितीयक्षणे सविकल्पकेनाऽवगम्यतइति सिध्यति प्रामाण्यमिति ॥ २३३ ॥

ननु गृहीतमपि गृह्यतइति कथं प्रामाण्यमत आह य इति। तस्मिन्नंशे मा भूत्प्रामाण्यम्, अगृहीतकालान्तरसम्बन्धाऽपेक्षमेव तु प्रामाण्यमिति। कथं पुनः स्मरणोत्तरकालं भवत्सविकल्पके प्रत्यक्षं, न हि निर्विकल्पकस्य तथात्वं दृष्टमत आह न हीति ॥ २३४ ॥

स्यादप्येवं यदि स्मरणेनेन्द्रियव्यापारो दूष्यते बाध्यते वा, न तु तदस्तीत्याह न चेति ॥ २३५ ॥

उपसंहरति तेनेति ॥ २३६ ॥

ननु यदि जात्याद्याकाराः परमार्थतोऽर्थे सन्ति, ततः सर्वेऽप्यव्यवहितसम्बन्धाः, किमिति न तैरर्थं विकल्पयति, तेन वासनामात्रनिबन्धना भ्रान्तिरेवेयमत आह विमनस्का इति ॥ २३७ ॥ द्वयेन।

---

(1) अभ्युपगम्य ग्रहणं स्मरणं च गोत्वादेरधिकग्रहणेन स्मरणादुत्तारयति, तदाधिक्यं दर्शयितुमाह व्यक्तिकालेत्यर्धेन। तदेव विस्पष्टयति—यः पूर्वमित्यर्धेन।

१. 'व्यतिरेकादि'—ख,
२. 'तत्राऽस्त्यभ्यधिको मितेः—क,
३. 'गृह्यते'—क,
४. 'नापि' क
५. 'सम्बन्ध' ख,

श्लो०वा०—न बुध्यन्ते तथा [1]चाऽन्ये सादृश्यादिविमोहिताः ।
तत्र योऽर्थं विवेकेन कौशलात्सदृशेष्वपि ॥ २३८ ॥
सूक्ष्मं वाऽपि प्रपद्येत तस्य भ्रान्ति नं तावता' ।
यथा[2] षड्जादिभेदेन गाने लौकिकवैदिके ॥ २३९ ॥
विवेकेनावगच्छन्ति येषां तत्संस्कृता मतिः ।
गानमात्रं विजानन्ति तत्रा[3]ऽनधिकृतास्तु ये ॥ २४० ॥
तदज्ञानान्न मिथ्यात्वं वक्तुं शक्यं विवेकिनाम् ।
'ते हि षड्जादिशब्देभ्यो विनाऽप्येषां विविक्तताम् ॥ २४१ ॥
[4]'यथावदधिगच्छन्ति' तद्वद्गोत्वादिवस्त्वपि ।
संकीर्णमर्थमात्रं तु बुध्यन्तेऽभ्यासवर्जिताः ॥ २४२ ॥
विवेकं प्रतिपद्यन्ते ये शब्दस्मृतिसंस्कृताः ।
'यथा रूपादिमत्यर्थे यस्यैवाऽस्ति यदिन्द्रियम् ॥ २४३ ॥
स तन्मात्रं गृहीत्वाऽन्यन्न गृह्णात्यनुमा [5]नतः ।
[6]तथा विवेकहेतूनां यदा यं प्रतिपद्यते ॥ २४४ ॥

न्या०र०—विमनस्कतया स्थूलदर्शितया वा सादृश्यादिविमोहिता यदि न जानन्ति, तावता नैव प्रणिहितचेतसां सूक्ष्मग्रहणशक्तिशालिनां वाऽवगतिर्भ्रान्तिर्भवतीति । अत्रैव दृष्टान्तमाह यथेति ॥ २३९ ॥ द्वयेन ।

यद्यप्यसंस्कृता गानमात्रं प्रतिपद्यन्ते तथापि विश्वावसुशास्त्रसंस्कृतानां विवेकप्रतिपत्तिर्न मिथ्येत्यर्थः । ननु वास्तवो भेदोऽप्यस्तीति वक्तुं न शक्यते, न हि षड्जादिशब्दभेदं मुक्त्वा गानस्य कश्चित्स्वगतो विवेकोऽस्त्यत आह ते हीति ॥ २४१ ॥ पादत्रयेण ।

दार्ष्टान्तिके योजयति तद्वदिति । एतदेव विवृणोति संकीर्णमिति । अभ्यासः शब्दस्मरणमिति ॥ २४२ ॥ किमिति पुनर्विकल्पयन्तोऽपि कदाचित् केनचिद्विकल्पयन्ति न सर्वैः सर्वदा,ऽत आह यथेति ॥ २४३ ॥ द्वयेन ।

---

१. 'किञ्चित्' क,
२. 'तथा' क,
३. 'तत्रनाधि' क,
४. 'यथावदव'—क,
५. 'त्यनुपायतः'—क,
६. 'तदा'—ख,

श्लो०वा०—तदुपेये तदा ज्ञानं वर्तते तदनुग्रहात्[1] ।

तेन यावत्प्रमातॄणां विवेकोपायदर्शनम् ॥ २४५ ॥

न स्यात्तावद्भवेत्तेषां विज्ञानं निर्विकल्पकम् ।

तस्माद्यत्र 'प्रकल्प्येत वस्तु वस्त्वन्तरात्मना ॥ २४६ ॥

प्रमाणाभासता तत्र न स्वधर्मविकल्पने[2] ।

प्रत्यक्षत्वमतः सिद्धं सामान्यस्य तथैव च ॥ २४७ ॥

'सम्बन्धस्येति तत्पूर्वमनुमानादि जायते ।

सर्वं चाप्यनुमानादि प्रत्यक्षे निर्विकल्पके ॥ २४८ ॥

न प्रवर्ततइत्येतद[4]नुमानेऽभि[5]धास्यते ।

नन्वेवं सति याऽप्यग्ने[6]र्दू[6]राद्प्यौष्ण्यकल्पना ॥ २४९ ॥

साऽपि प्रत्यक्षमेव स्या[7]द्यथा गोत्वादिबुद्धयः ।

न्या०र०—विवेकहेतूनां शब्दानामित्यर्थः । तेन शब्दस्मरणव्यवस्थया व्यवस्थेति । यस्तु न कंचिदपि शब्दं स्मरति तस्य निर्विकल्पकमेव भवतीत्याह तेनेति ॥ २४५ ॥

प्रकृतं सविकल्पकस्य प्रामाण्यमुपसंहरति तस्मादिति ॥ २४६ ॥

सति चैवं लिङ्गलिङ्गिसामान्ययोः तत्सम्बन्धस्य च प्रत्यक्षत्वादुपपन्नं प्रत्यक्षपूर्वकमनुमानादीनामित्याह प्रत्यक्षत्वमिति ॥ २४७ ॥

ये तु शाक्याः सविकल्पकस्य प्रत्यक्षत्वं नेच्छन्ति, तेषामनुमानादेरुत्पत्तिर्न सिध्यति, इत्यनुमानवादे वक्ष्यतइत्याह सर्वमिति ॥ २४८ ॥

यदुक्तमिन्द्रियव्यापाराऽनुपरमात् सविकल्पकमपि प्रत्यक्षमिति, अत्र चोदयति नन्वेवमिति ॥ २४९ ॥

---

१. 'विकल्प्येत'—ख,

२. 'विकल्पनात्'—क,

३. 'सम्बन्धस्येव'—ख,

४. अनुमाने हि साध्यते क. ।

५. 'हिसाध्यते' क,

६. दूराद्दृष्टौ, क.

७. 'स्याद गोत्वादिमतयो यथा' क, ख

श्लो०वा०–*प्रत्यासन्नतरं गोत्वे प्रत्यक्षत्वेन संमतम् ॥ २५० ॥
विज्ञानं नाऽन्यदस्तीति प्रत्यक्षमिदमेव नः ।
तत्राऽप्यक्षैरसंबन्धं मन्वानस्योपजायते ॥ २५१ ॥
यदा बुद्धिस्तदा नैव प्रत्यक्षत्वेन कल्प्यते ।
स्पर्शनेन तु संबन्धे प्रत्यक्षत्वेन जायते ॥ २५२ ॥
मतिरौष्ण्ये, [1]परोक्षेयं चक्षुषाऽग्नौ प्रकाशिते ।
तस्माद्यदिन्द्रियं यस्य ग्राहकत्वेन कल्पितम् ॥ २५३ ॥
तेनैव सति संबन्धे प्रत्यक्षं नाऽन्यथा भवेत् ॥ २५३½ ॥

न्या०र०—परिहरति प्रत्यासन्नेति ॥ २५० ॥

अत्राऽग्नित्वेन प्रत्यक्षेणौष्ण्यमनुमीयते, न तु तदेव प्रत्यक्षं गोत्वे तु वस्त्वन्तरम् इन्द्रियव्यापारात्प्रत्यासन्नं प्रत्यक्षं नास्ति यतो गोत्वमनुमीयेत, गोत्वमेव प्रत्यक्षम् इति । यदा तु गोत्वेऽप्यपरोक्षाभावात् अक्षैरसंबन्धं मन्वानस्य शब्दविशेष्यादिना गोत्वबुद्धिस्तदा नैव प्रत्यक्षमित्याह तत्रेति ॥ २५१ ॥

कस्मात्पुनरनुपरतेन्द्रियव्यापारस्यैव जायमानम् औष्ण्यज्ञानं प्रत्यक्षं भवत्यत आह स्पर्शनेनेति ॥ २५२ ॥

न हि दूरादग्निमध्यक्षयतो यदौष्ण्यज्ञानं तत्स्पर्शनवेलायामिवाऽपरोक्षमतो नेन्द्रियव्यापारजं गृहीतसंबन्धस्यैव जायते नान्यस्येत्यानुमानिकमेव न प्रत्यक्षमिति । तेनाऽऽत्मीयेन्द्रियाऽनुपरम एव प्रत्यक्षत्वं नेन्द्रियान्तराऽनुपरम इत्याह तस्मादिति ॥ २५३ ॥

तदेव च तस्यात्मीयं यतो यस्यापरोक्ष्यं, न हि चक्षुषा स्पर्शनस्यापरोक्ष्यं भवत्यतो नौष्ण्यस्य चक्षुरात्मीयमिति ।

---

* अग्निसंवेदन एव तत्रेन्द्रियव्यापार उपक्षीणः । अग्नित्वादेव व्याप्तिबलेनानुमानिकोष्णविकल्पो जायते । गोत्वे तु नेन्द्रियव्यापारतः प्रत्यासन्नमर्थान्तरं प्रत्यक्षत्वेन सम्मतं किञ्चिदस्ति, येन तदेव प्रत्यक्षं नेतरदित्युच्यते । अतो गोत्वमेव प्रत्यक्षमित्यभिप्रायः ।

१. 'परोक्षोऽयं, क, ख,

श्लो०वा०—एवं समानेऽपि विकल्पमार्गे
यत्राऽक्षसम्बन्धफलाऽनुसारः ।
प्रत्यक्षता तस्य तथा च लोके ॥
‡ विनाऽथदो[1] लक्षणतः प्रसिद्धम् ॥ २५४ ॥

॥ इति श्रीकुमारिलभट्टपादविरचिते श्लोकवार्तिके प्रत्यक्षसूत्रं चतुर्थम् ॥



न्या०र०—उपसंहरति एवमिति ॥२५४॥ गोत्वोष्णत्वयोर्विकल्पगम्यत्वे तुल्येऽपि यत्र गोत्वे अक्षसंबन्धफलमापरोक्ष्यं तत्प्रत्यक्षं, नेतरत आपरोक्ष्यम्, एवं हि प्रत्यक्षं लक्षणमनपेक्ष्यैव लौकिका मन्यन्त इति ॥ २५४ ॥

इति पार्थसारथिमिश्रविरचिते न्यायरत्नाकरे चतुर्थम् प्रत्यक्षसूत्रं संपूर्णम् ।

---

१. 'अत' क, 'अतो' ख,

‡ कथं पुनः समानजन्मनोरुष्णाग्निविकल्पयोरेकं प्रत्यक्षमितरच्चानुमानिकम्, एवं हि प्रत्यक्षं लक्षयता लौकिकमेव प्रत्यक्षं लक्षितं भवेदत आह—एवमिति । नेदमलौकिकं यत्र ह्यपरोक्षावभासबुद्धिः तत् प्रत्यक्षमिति लक्षणात् विनापि लौकिका मन्यन्ते । अक्षसम्बन्धोऽपि चापरोक्षावभासौपायिकतयैव लक्षणकारैरपि प्रत्यक्षलक्षणत्वेनाश्रीयते, न स्वरूपेण । अतो यत्राग्नावक्षसम्बन्धफलमपरोक्षावभासित्वमनुस्त्रियते तस्य प्रत्यक्षता, नेतरस्येति सिद्धम्.।

सू०—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्याऽनपेक्षत्वात् ॥ ५ ॥

भा०—अभावोऽपि नास्ति, यतः—औत्पत्तिक इति नित्यं ब्रूमः। उत्पत्तिर्हि भाव उच्यते लक्षणया। अवियुक्तः शब्दार्थयोर्भावः सम्बन्धो, नोत्पन्नयोः पश्चात् सम्बन्धः। औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः तस्य अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य। कथम्? उपदेशो हि भवति। उपदेश इति विशिष्टस्य शब्दस्य उच्चारणम्। अव्यतिरेकश्च ज्ञानस्य। न हि तदुत्पन्नं ज्ञानं विपर्येति। यच्च नाम ज्ञानं न विपर्येति, न तच्छक्यते वक्तुं, न एतदेवमिति। यथा विज्ञायते न तथा भवति, यथैतन्न विज्ञायते, तथैतदिति। अन्यदस्य हृदये, अन्यद्वाचि स्यात्। एवं वदतो विरुद्धमिदं गम्यते, अस्ति, नास्ति चेति। तस्मात् तत् प्रमाणमनपेक्षत्वात्। न ह्येवं सति प्रत्ययान्तरमपेक्षितव्यं, पुरुषान्तरं वापि। स्वयं प्रत्ययो ह्यसौ। बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्यते बदरायणं पूजयितुं, नात्मीयं मतं पर्युदसितुम् ॥ ५ ॥

श्लो०वा०—प्रत्यक्षादौ निषिद्धेऽपि ननु लोकप्रसिद्धितः।
धर्माऽधर्मौ प्रमास्येते ब्राह्मणादिविवेकवत्* ॥ १ ॥

न्या०र०—एवं प्रत्यक्षाद्यनिमित्तत्वं प्रतिपाद्याऽभावगम्यत्वं धर्मस्याशङ्क्य तन्निराकरणपरतया औत्पत्तिकसूत्रं भाष्यकारेणाऽवतारितम् "अभावोऽपि नास्ति, यत औत्पत्तिक" इत्यादिना, एतदाक्षिपति प्रत्यक्षादाविति ॥ १ ॥

---

* अत्र भाष्यकारेण प्रत्यक्षाद्यनिमित्तत्वे प्रतिपादिते सदुपलम्भकप्रमाणप्रत्यस्तमयादभावप्रमेयतां धर्मस्य आशङ्क्य तन्निराकरणपरतया औत्पत्तिकसूत्रमवतारितम् अभावोऽपि नास्ति, यतः "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्याऽनपेक्षितत्वात्" इति। तच्च चोदनैवेत्यवधारणं चाक्षिपति—'प्रत्यक्षादाविति।' अयमर्थः—भावगोचरनिखिलप्रमाणाभावे हि अभावः प्रमाणम्। न चेह,तथा, लोकप्रसिद्धेरेव भावात्। न च सा न प्रमाणं, ब्राह्मणादिवर्णविवेकस्य तदधीनत्वात्। इतरथा तदभावात्। न खलु सुनिपुणमपि विलोकयमाना वयं क्षत्रियादिविलक्षणं ब्राह्मणशब्दवाच्यं पिण्डानुगतमपरं रूपमपरोक्षमीक्षामहे। तदवश्यं वर्णविवेकाय लोकप्रसिद्धिः स्वतन्त्रा

श्लो०वा०—'धार्मिकाऽधार्मिकत्वाभ्यां पीडाऽनुग्रहकारिणौ ।
प्रसिद्धौ हि' तथा चाह पाराशर्योऽत्र वस्तुनि ॥ २ ॥
इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।
आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ॥ ३ ॥
'निर्मूलाऽसंभवादत्र प्रमाणैः सैव मृग्यते ।
कुतः पुनः प्रवृत्तेति' प्रत्यक्षादि तु वारितम् ॥ ४ ॥
न चैतानि परित्यज्य पृथग् लोके प्रमाणता ।
'संसारमोचकादेश्च हिंसा [1]पुण्यत्वसंमता ॥ ५ ॥
न पश्चा[2]त्पुण्यमिच्छन्ति केचिदेवं [3]विगानतः ।

न्या०र०—शब्दाऽतिरिक्तसमस्तसदुपलम्भकप्रमाणास्तमये† ह्यत्राऽभावशङ्कानिराकरणाय शब्दप्रामाण्यावतारणं युक्तं, न चेह तथाऽस्ति, ब्राह्मणादिविवेकइव लोकप्रसिद्धेः सद्भावादिति । तामेव दर्शयति धार्मिकेतिह्यन्तेन ॥ २ ॥

लोकप्रसिद्धिगम्यत्वं धर्माऽधर्मयोर्भगवता व्यासेनाऽपि दर्शितमित्याह तथा चेति । व्यासवचनमुदाहरति इदमिति ॥ ३ ॥

इदं प्रपातडागादिकं पुण्यम्, इदमागारदहनादिकमपुण्यमित्येवमुपकाराऽपकारविषये धर्माऽधर्मपदद्वये यावच्चाण्डलप्रसिद्धे सत्यल्पं शास्त्रप्रयोजनमिति । परिहरति निर्मूलेति पादत्रयेण ॥ ४ ॥

प्रसिद्धिर्हि प्रज्ञानं, न सा निर्मूला संभवतीति तस्या मूलं निरूप्यते, किं भ्रान्तिमूलेयम्, उत प्रत्यक्षादिमूला, किं वा चोदनामूलेति ।

ननु यत्किंचन मूलं समीचीनमेव कल्प्यं कथमिवाऽभावाशङ्का,ऽत आह प्रत्यक्षेति । न चाऽसंभावितमूलं शक्यते कल्पयितुं, तदिह प्रत्यक्षादिचतुष्टये निराकृते द्वयमेवाऽवशिष्यते, अतो युक्तमभावनिराकरणाय शब्दप्रामाण्यावतारणमिति ॥ ४ ॥ न च प्रत्यक्षादिपरित्यागेन स्वयमेव प्रसिद्धेः प्रामाण्यं भवतीत्याह न चेति ॥ ५ ॥

---

प्रमाणमास्थेया । अपि च सकलशब्दार्थावधारणमेव तदायत्तं, तामन्तरेण प्रमाणान्तरासम्भवात् । अतो निषिद्धेऽपि प्रत्यक्षादौ नाभावशङ्का । न च चोदनैवेत्यवधारणोपपत्तिरिति ।

† प्रमाणप्रत्यक्षसमये इति क. । प्रमाणमन्यस्तमये ख. ।

१. धर्मत्व क० ।

२. 'तत्पश्चात्'—ख० ।

३. 'विजानतः' ख० ।

श्लो०वा०—म्लेच्छाऽऽर्याणां प्रसिद्धत्वं न धर्मस्योपपद्यते' ॥ ६ ॥

ॐ न चाऽऽर्याणां विशेषोऽस्ति यावच्छास्त्रमनाश्रितम् ।
तन्मूलाऽर्थप्रसिद्धिस्तु तत्प्रामाण्ये स्थिते भवेत् ॥ ७ ॥
‡ तस्मादभाववक्तृस्थौ धर्माऽधर्मौ न शक्नुयात् ।
चोदना चेत्समुद्धर्तुं ग्रस्तौ तेनैव पश्यताम् ॥ ८ ॥
❋ उपदेशो हि भवति ज्ञानं तस्येति योज्यते ।
ज्ञायते येन तज्ज्ञानमेकाधिकरणत्वतः ॥ ९ ॥
* औत्पत्तिकीगरा दोषः कारणस्य निवार्यते ।
अबाधोऽव्यतिरेकेण, स्वतस्तेन प्रमाणता ॥ १० ॥
सर्वस्याऽनुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ।
चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः ॥ ११ ॥
वाक्यान्तरे समर्थेऽपि किमर्थं विधिराश्रितः ।

न्या०र०—ब्राह्मणादिविवेकस्तु प्रत्यक्ष एवेति वक्ष्यते इति । अव्यवस्था च प्रसिद्धिरिति न तन्निमित्तत्वं धर्मस्य संभवतीत्याह **संसारेति** सार्द्धेन । ननु 'शास्त्रस्था वा तन्निमित्तत्वा' *दित्येवं व्यवस्था सिध्यत्यत आह **तन्मूलेति** ॥ ७ ॥

उपसंहरति **तस्मादिति** ॥ ८ ॥ पश्यतामित्यनादरे षष्ठी । "औत्पत्तिकः संबन्धो नित्यो निमित्तम्" इत्युक्त्वा "उपदेशो हि भवती" †ति हेतुरुक्तः, स चायं सौत्रेण ज्ञानपदेनोपस्कृत्य व्याख्यातव्य इत्याह **उपदेश इति** ॥ ९ ॥

शब्दवाचकस्योपदेशशब्दस्य ज्ञानशब्देन कथं सामानाधिकरण्यम्, इत्यत आह **ज्ञायते इति** । तदनेनाऽज्ञानरूपमप्रामाण्यं निरस्तमिति । कारणदोषाऽधीनं चाऽप्रामाण्यमौत्पत्तिकशब्दान्निरस्तमित्याह **औत्पत्तिकेति** ॥ १० ॥

बाधाऽभावस्त्वव्यतिरेकशब्देनेत्याह **अबाध इति** । एवं चाऽनपोदितं

---

ॐ स्वाभाविककृष्णमृगचरणोपलक्षितार्यावर्तनिवासिनश्चार्यशब्दवाच्याः ।

‡ सकलभावप्रमाणनिराकरणात् शङ्किताभावनिराकरणेन चोदनैव धर्माधर्मयोः प्रमाणमित्युपपन्नम् ॥

❋ ननु उपदेशोग्रन्थसन्दर्भात्मा ज्ञानं चार्थावग्रहः । कथमनयोः सामानाधिकरण्यमत आह—ज्ञायत इति । भावसाधनोहि ज्ञानशब्दो न उपदेशशब्देन सामानाधिकरण्यं लभते । अयं तु ज्ञायतेऽनेनेति करणसाधन इति युक्तं सामानाधिकरण्यम् ।

* कथं पुनरुपदेशो धर्मे प्रमाणमत आह—औत्पत्तिकेति ।

श्लो०वा०–साध्यसाधनसंबन्धः सर्वाख्यातेषु विद्यते[1] ॥ १२ ॥
ऽसर्ववाक्येषु चाख्यातं तेनाकाङ्क्षानिवर्तनात् ।
ऽप्रवृत्तिसिद्धिरिच्छातः [2]प्रतिषेधात्तु वर्जनम् ॥ १३ ॥
विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते ।
[3]श्रुतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत् ॥ १४ ॥
विधौ तु तमतिक्रम्य स्वर्गादिः साध्यतेष्यते ।
तत्साधनस्य धर्मत्वमेवं [4]सति च लभ्यते ॥ १५ ॥

न्या०र०–स्वारसिकं प्रामाण्यमित्याह **स्वत इति**। तदिदं तत्प्रमाणमित्यनेन सूत्रावयवेनोक्तमिति । अर्थे उपलब्धइत्यस्य प्रयोजनमाह **सर्वस्येति** ॥ ११ ॥

ननु चोदनायाः प्रामाण्यं प्रतिज्ञातं, तत्कथमुपदेशस्य साध्यते, ऽत आह **चोदनेति**। अत्र चोदयति **वाक्यान्तरे इति** ॥ १२ ॥

वाक्यान्तरसामर्थ्यमेव दर्शयति **साध्येति**। श्रेयःसाधनं हि धर्मः, तच्च भावनाद्वारं, सर्वाऽऽख्यातेषु च भावना विद्यते, सर्ववाक्येषु चाऽऽख्यातमस्ति, तदधीनत्वादाकाङ्क्षापूरणस्य, अतो विनाऽपि विधेः स्वर्गयज्ञादीनां साध्यसाधनसंबन्धसिद्धेर्विध्याश्रयणमनर्थकमिति । सिध्यत्यपि साध्यसाधनसंबन्धे पुरुषप्रवृत्तये विधिरिति चेत्तत्राह **प्रवृत्तिसिद्धिरिति** ॥ १३ ॥

विधिरपि हि न बलात्प्रवर्त्तयति, किं तु श्रेयःसाधनत्वं गमयति, अत एव स्वेच्छया प्रवृत्तिः, सा च विनाऽपि विधिना सिध्यतीति । स्यादेतन्न ब्राह्मणं हन्यादित्यादिषु निवृत्तिसिद्धये विधिरिति, तत्राह **प्रतिषेधादिति**। नञ इत्यर्थ इति । परिहरति **विधाविति**। कथं न लभ्यतेऽत आह **श्रुतेति**। असति विधौ समानपदश्रुत्या धात्वर्थ एव भावनांशे निपतेत्, विप्रकृष्टस्वर्गादिबाधेन, अतो न यागादेः समीहितसाधनत्वं स्यादिति ॥१४॥ विधौ तु सति तेन पुरुषप्रवर्त्तनात्मकेन समानप्रत्ययोपात्तेन धात्वर्थादपि संनिकृष्टतरेणाऽवरुद्धा भावना धात्वर्थमुल्लङ्घ्य विप्रकृष्टमपि स्वर्गादिकमेव भाव्यतया गृह्णाति, साधनतया च यागादिकमिति सिध्यति यागादेः श्रेयः-साधनतया धर्मत्वमित्याह **विधाविति** ॥ १५ ॥

---

१. 'गम्यते'–क० । २. 'प्रतिबन्धान्निवर्तनम्'–ख० ।
३. श्रुतः स्वर्गादि–ख० । ४. सति तु–क० ।
ऽ अनर्थको विधिप्रामाण्यप्रतिपादनप्रयासः । अपौरुषेयः शब्दः धर्मे प्रमाणम् इत्येतावदेव वचनीयमित्यभिप्रायः ।

श्लो०वा०—†स्वप्रत्ययान्तरापेक्षा स्यादनाप्तनरोक्तिषु ।
आप्तोक्तिषु नरापेक्षा[1] नोभयं चोदनासु नः ॥ १६ ॥

## इति श्रीकुमारिलभट्टपादविरचिते श्लोकवार्तिके औत्पत्तिकसूत्रं पञ्चमम् ॥

न्या०र०—अनपेक्षत्वादिति सूत्रपदं व्याचष्टे स्वप्रत्ययेति ॥ १६ ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे औत्पत्तिकसूत्रं पञ्चमं सम्पूर्णम् ।

## अथ वृत्तिकारग्रन्थः ।

भा०—वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयञ्चकार, तस्य निमित्तपरीष्टिरित्येवमादिम् । न परीक्षितव्यं निमित्तं, प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि, तदन्तर्गतं च शास्त्रम्, अतस्तदपि न परीक्षितव्यम् । अत्रोच्यते । व्यभिचारात् परीक्षितव्यम् । शुक्तिका हि रजतवत् प्रकाशते यतः, तेन प्रत्यक्षं व्यभिचरति, तन्मूलत्वाच्चानुमानादीन्यपि, तत्रापरीक्ष्य प्रवर्तमानोऽर्थाद् विहन्येत, अनर्थञ्चाप्नुयात् कदाचित् ॥५॥

अथ वृत्तिकारग्रन्थः ।

श्लो०वा०—आदिशब्दो मकारान्तो लुकि क्लेशेन संगतिः ।
नञ्ध्याह्रियते सूत्रे संकरात् परिचोदना ॥ १७ ॥

अथ वृत्तिकारग्रन्थः ।

न्या०र०—"वृत्तिकारस्त्वन्यथेमं ग्रन्थं वर्णयाञ्चकार, तस्य निमित्तपरीष्टिरित्येवमादि"मिति भाष्यम् । तत्रादिशब्दं केचित् लुप्तमकारं पठन्ति, तत् दूषयति आदिशब्द इति ॥ १७ ॥

कारणमाह लुकीति । सामान्यविवक्षायां हि नपुंसकता वक्तव्या, ग्रन्थात्मके तूपात्ते विशेष्ये सामान्यविवक्षा क्लिष्टेति । "न परीक्षितव्यं निमित्त"‡मिति निमित्तसूत्रव्याख्यानपरं भाष्यमयुक्तं, सूत्रे नञोऽश्रुतत्वादत आह नञिति ।

ननु "व्यभिचारात्परीक्षितव्यं निमित्तं, शुक्तिका हि रजतवत्प्रकाशते यतस्तेन प्रत्यक्षं व्यभिचरती"$ति चोद्यभाष्यमयुक्तम्, आभासस्य ह्यत्राऽयथार्थत्वलक्षणो व्यभिचारो न प्रत्यक्षस्येति, अत आह—संकरादिति पादत्रयेण । प्रत्यक्षस्याऽभासाद् विविक्तलक्षणमजानन् उभयोरक्षतत्वेन संकीर्णत्वादाभासस्य व्यभिचारेऽपि प्रत्यक्षस्य व्यभिचारं मत्वा सति व्यभिचारात्परीक्षणं चोदितवानिति ।

---

१. परापेक्षा—ख ।

† चोदनायाः प्रामाण्यमुपपन्नमित्यभिप्रायः ।

भा०—नैतदेवं, यत् प्रत्यक्षं, न तद् व्यभिचरति, यद् व्यभिचरति, न तत्प्रत्यक्षम्। किं तर्हि प्रत्यक्षम्। तत्सम्प्रयोगे पुरुषस्य इन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम्। यद्विषयं ज्ञानं तेनैव सम्प्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म सत्प्रत्यक्षम्। यदन्यविषयज्ञानमन्यसम्प्रयोगे भवति, न तत् प्रत्यक्षम्। कथम्पुनरिदमवगम्यते, इदं तत्सम्प्रयोगे, इदमन्यसम्प्रयोगे इति। यत् न अन्यसम्प्रयोगे, तत् तत्सम्प्रयोगे, एतद्विपरीत मन्यसम्प्रयोगे इति। कथं ज्ञेयम्? यच्छुक्तिकायामपि रजतं मन्यमानो रजतसन्निकृष्टं मे चक्षुरिति मन्यते। बाधकं हि यत्र ज्ञानमुत्पद्यते, नैतदेवं, मिथ्याज्ञानमिति तत् अन्यसम्प्रयोगे। विपरीतं तत्सम्प्रयोगे इति।

श्लो०वा०—ᛟप्रमाणलक्षणाऽज्ञानाद् व्यभिचारात्परीक्षणम्'।
'नैतत्प्रत्यक्ष†मित्येवमपरीक्षोपसंहृता' ॥ १८ ॥
तत्राऽन्यस्याऽयथार्थत्वं प्रत्यक्षे तु यथार्थता।
यदाभासं हि विज्ञानं तत्संयोगे तदिष्यते ॥ १९ ॥
* संपूर्णं लक्षणं ह्येतत् तत्सतोर्व्यत्ययः कृतः।

न्या०र०—"यत्प्रत्यक्षं न तद्व्यभिचरति, यद्व्यभिचरति न तत्प्रत्यक्ष" मिति परिहारभाष्यं, तत्पूर्वया परीक्षया संबन्धव्यमित्याह **नैतदि** ॥ १८ ॥

भाष्यार्थं दर्शयति **तत्रेति** ॥ १९ ॥

अतः शुक्तिरजतप्रकाशनेऽन्यस्याऽऽभासस्याऽयथार्थत्वं न प्रत्यक्षस्येति पुनः-प्रत्यक्षस्याभासाऽसंकीर्णं लक्षणं तत्कथनार्थं सूत्रम्—सत्संप्रयोगे पुरुषस्येन्द्रियाणामिति। तस्यार्थमाह **यदाभासमिति**। ननु लक्षणपरत्वं सूत्रस्य ग्राह्यविशेषणाऽनुपादानादतिव्याप्तिनिरस्तं, तत्कथं तदधिक्रियते, ऽत आह **संपूर्ण-मिति** । २० ॥

---

१. न तत्प्रत्यक्षमि. क,—ख। २. उपसंहृतम्—ख,

ᛟ परीक्षिसूत्रेण परीक्षा प्रतिज्ञाता, प्रत्यक्षसूत्रेण उपपाद्य उपसंहृतेत्यभिप्रायः।

* यथाश्रुते हि सूत्रे इन्द्रियसम्प्रयोगजत्वमात्रं प्रत्यक्षलक्षणम्। तच्च आभासेऽपि अविशिष्टमित्यतिप्रसज्यते। व्यत्ययस्तेन तु तदा बुद्ध्याकारपरामर्शनाद् भासमानाकारेन्द्रियसम्प्रयोगे या बुद्धिः सा प्रत्यक्षमित्युपस्कारे शुक्तिरजतज्ञाने भासमानेन्द्रियसम्प्रयोगाभावान्न प्रत्यक्षमतिप्रसज्यते इति।

श्लो०वा०–शोभनार्थस्तु सच्छब्दो ॐयद्वा ऽध्याहारकल्पना ॥ २० ॥

अर्थापत्त्येतरेषां च प्रत्यक्षाऽऽभासलक्षणम् ।

* बाधकज्ञानलाभो हि पूर्वाऽबाधे[1] न संभवेत् ॥ २१ ॥

स चाऽस्तीत्यवबोधत्वे सति नाऽन्योन्यसंश्रयम् ।

न चाऽनागतबाधे[2] च पूर्वेणात्मा हि लभ्यते ॥ २२ ॥

न्या०र०–कथमिति आह तत्सतोरिति । प्रत्यक्षविशेषणस्यार्थमाह शोभनेति । यद्वा यथावस्थितावेव सत्तच्छब्दावविचाल्यैव तच्छब्दान्तरग्राह्यविशेषणोपादानायैवाऽध्याहर्त्तव्यमिति आह यद्वेति ।

नन्वाभासस्यापि लक्षणं वक्तव्यं, न हि तस्मिन्नज्ञाते तद्विविक्तं प्रत्यक्षं ज्ञायते, ऽत आह अर्थापत्त्येति ॥ २१ ॥

"तत्संप्रयोगजं प्रत्यक्षाभासं ज्ञायते एवेति कथमन्यसंप्रयोगजत्वं ज्ञायत" इत्याशङ्क्य "बाधकज्ञाना" दित्युक्तं भाष्ये, तदयुक्तं, केन हि विशेषेणोत्तरस्य बाधकत्वं न पूर्वस्याऽत आह बाधकेति । अस्ति च तस्यात्मलाभ इत्याह सचेति ॥ २२ ॥

इतिहेतोरुत्तरस्य बोधकत्वमिति । ननु मिथ्यासतः पूर्वस्योत्तरेण बाधः, बाधाच्च मिथ्यात्वमितीतरेतराश्रयम्, अत आह अवबोधत्व इति । अवबोधकं

---

ॐ पुनरपि च ईदृशं यत् तत्सम्यक् प्रत्यक्षमिति तदपेक्षा विद्यत एवेति व्यत्यये अपरितुष्यन् प्रकारान्तरमाह—यद्वेति । द्वयोरपि तत्सतोरत्राध्याहारः । तत्र भासमानाकारपरामर्शार्थोऽध्याहृतस्तच्छब्दः । परस्तु प्रयक्षरूपपरामर्शार्थः । सच्छब्दस्तु सम्प्रयोगसन्निधिपठितस्तद्विशेषणार्थ एव । अध्याहृतस्तु शोभनार्थ इति विवेचनीयम् ।

* अत्र भाष्यकारेण कथं तदतद्योगजत्वविवेकोऽवगम्यत इत्याशङ्क्योक्तं— 'बाधकं हि यत्र ज्ञानमुत्पद्यते नैतदेवमिति तदन्यसम्प्रयोगे, विपरीतस्तत्सम्प्रयोगे' इति तदयुक्तम् । किं हि कारणं यदुत्तरेण पूर्वंबाध्यते, पूर्वेणैव जघन्यमुत्तरं बाध्यत इति युक्तमत आह बाधकेति । तद्धि बाधकं यदन्याऽबाधकमात्मानमेव न लभते, तथाचोत्तरम् । अतस्तत् पूर्वं बाधत इति युक्तम् । जघन्यमपि पूर्वानपेक्षं बलवदिति षष्ठे वक्ष्यते । यत्र पूर्वापेक्षमुत्तरं, तत्र पूर्वं बलवदिति तृतीय उक्तमिति ।

१. 'बाधे न'–ख० ।

२. बोधेन ।

भा०—प्राग्बाधकज्ञानोत्पत्तेः, कथमवगम्यते, यदि न तत्काले सम्यग्ज्ञानस्य मिथ्याज्ञानस्य वा कश्चिद् विशेषः। यदा हि चक्षुरादिभिरुपहतं मनो भवति, इन्द्रियं वा तिमिरादिभिः, सौक्ष्म्यादिभिर्वा ह्यो वा विषयः, ततो मिथ्याज्ञानम्। अनुपहतेषु हि सम्यग् ज्ञानम्। इन्द्रियमनोऽर्थसन्निकर्षो हि सम्यग्ज्ञानस्य हेतुः। असति हि तस्मिन् मिथ्याज्ञानम्। तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः। दुष्टेषु हि ज्ञानं मिथ्या भवति। कथमवगम्यते। दोषापगमे सम्प्रतिपत्तिदर्शनात्। कथं दुष्टाऽदुष्टावगम इति चेत्, प्रयत्नेनान्विष्यन्तो न चेद् दोषमुपलभेमहि, प्रमाणाभावाददुष्टमिति मन्येमहि। तस्मात् यस्य च दुष्टं करणं, यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनप्रत्ययो, नान्य इति ॥

श्लो०वा०—निमित्तदोष[1]भेदेन पश्चाद्यत्राप्यबाधनम्।
भवत्येव हि तत्रापि नरान्तरविपर्ययः ॥ २३ ॥

न्या०र०—हि मिथ्यात्वस्योत्तरं न जनकं, येनेतरेतराश्रयं स्यात्, तेन दुष्टकारणादेव भूतस्य मिथ्यात्वस्योत्तरेणाऽवबोधान्नेतरेतराश्रयं, न च पूर्वमिथ्यात्वावगमापेक्षमुत्तरस्य जननम्, अतो नेतरेतराश्रयमिति।

यत्तु पूर्वमेव किं न बाधकमित्युक्तं, तत्राह न चेति। पूर्वोत्पत्तिवेलायामनागतमुत्तरम् असत्त्वादशक्यं बाधितुं, जाते तूत्तरे जायमानेनैव तेन पूर्वं बाधितम् असत्त्वात्कथमुत्तरस्य बाधकं स्यात्, उत्तरं तु पूर्वस्मिन्नुपजायते तद्बाधेन जायत इति युक्तम् इति ॥ २२ ॥

"प्राग् बाधकज्ञानोत्पत्तेः कथं मिथ्यात्वमवगम्यत" इति चोदयित्वा "यदा चक्षुरादिभि" रित्यादिना भाष्येण तत्रापि कारणदोषज्ञानाऽवगम्यं मिथ्यात्वमित्युक्तं, तद्दर्शयति निमित्तेति ॥ २३ ॥

पश्चाद्यत्राप्यबाधनं तत्रापि निमित्तदोषबोधेन मिथ्यात्वं गम्यतइति। यदि त्ववश्यं विपर्ययेण प्रयोजनं सोऽप्यस्त्येव दिङ्मोहादौ नरान्तराणामित्याह भवत्येवेति। एतच्चाऽभ्युच्चयमात्रं न त्ववश्यमेतदादर्तव्यं, विनाऽपि विपर्ययेण कारणदोषज्ञानमात्रेणैव शक्यं मिथ्यात्वमवगन्तुं, यादृशस्य ज्ञानस्य व्यभिचारो दृष्टः तादृशे ज्ञाने निश्चयरूपे ज्ञातेऽपि विनाऽपि बाधकेन विचिकित्सा जायते, यथा दूराद्देवदत्तोऽयमिति सहसा निश्चित्य पुनः संशेते, संशयाच्च निश्चये प्रतिबद्धे सति मिथ्यात्वं, तन्नियतदोषदर्शनादनुमीयमानं निश्चयेन न प्रतिबध्यते, एवं च शाक्याद्यागमानां कारणदोषादेवाऽप्रामाण्यसिद्धिरिति ॥२३॥

---

१. 'दोष बोधेन'–ख०।

श्लो०वा०—सर्वेषां सर्वदा यत्र धीः स्यात्तत्र न बाधनम् ।
न हि कारणदुष्टत्वबुद्धिस्तत्र बलीयसी ॥ २४ ॥
† जात्यादिषु यदा जाता बुद्धिः पश्चादसंभवात् ।
नाश्यते युक्तिभिस्तत्र व्यक्तमन्योन्यसंश्रयम् ॥ २५ ॥
*. स्वतःप्रामाण्यतश्चात्र निर्णयोऽस्तित्वबोधनात् ।
तद्रूपप्रत्ययोत्पत्तेस्तदसद्वादिनामपि ॥ २६ ॥

वृत्तिकारग्रन्थः समाप्तः ।

न्या०र०—यदि साक्षाद्विपर्ययाऽभावेनाऽऽनुमानिकबाधात् प्रत्यक्षाऽऽभासत्वं भवति ततो जात्यादिज्ञानानामपि व्यतिरेकादिविकल्पाऽक्षमतया बाधादाभासता स्यादत आह सर्वेषामिति ॥ २४ ॥

अथ न बाधः, अत आह न हीति । यादृशस्य व्यभिचारो दृष्टः तादृशे विचिकित्सा भवति, न चालोके जाग्रतः प्रत्यासन्नविषयं गोत्वादिजातिज्ञानं कदाचिदपि दृष्टव्यभिचारम्, अतस्तस्मिन् दृढरूपे जायमाने तद्विरुद्धं यौक्तिकं कारणदोषज्ञानं नात्मानं लभते दुर्बलत्वादिति ॥ २४ ॥

सोऽयमितरेतराश्रयस्य व्यक्तो विषय इत्याह जात्यादिष्विति ।

मिथ्यात्वे ह्यवगतेऽवगतिबाधः, ततश्च तदवगम इति ॥ २५ ॥

नन्वमिथ्यात्वेऽपि तुल्यमितरेतराश्रयं, बाधाभावाधीनममिथ्यात्वं, तदधीनश्च बाधाऽभाव इत्यत आह स्वत इति ॥ २६ ॥

सद्भावबोधस्तावज्जात्यादिषु जायते, तस्य च स्वतः प्रामाण्यन्यायादेवाऽमिथ्यात्वं निर्णीयते न बाधाभावमपेक्षते । निर्णीते चाऽमिथ्यात्वे तद्विरोधादेव न बाधोत्पत्तिः संभवति, निर्विगानं च सद्भावबोधनं तदपलापवादिनामप्युत्पद्यमानत्वादिति ॥ २६ ॥

इति न्यायरत्नाकरे वृत्तिकारमतम् ।

---

† बाह्यागमानामपि कारणदोषावधारणादेव मिथ्यात्वावधारणम् । नहि तदर्थाः साक्षाद्बाध्यन्ते । पौरुषेयत्वात् कारणदोषाशङ्कयैव मिथ्यात्वं भवतीति युक्तमेव द्वैविध्यम् ।

* ननु मा बाधि जात्यादिज्ञानम् ! प्रमाणत्वं तु तस्य कथं, प्रमाणतदाभाससाधारणं हि ज्ञानत्वम् । अतो व्यभिचारदर्शनात् संशयो युक्तः । वृत्त्यादिविकल्पाश्च अप्रामाण्यमनापादयन्तोऽपि तद्वत् प्रामाण्यं विघ्नन्ति । अत आह—स्वत इति ।

# अथ निरालम्बनवादः

भा०—ननु सर्वं एव निरालम्बनः स्वप्नवत् प्रत्ययः, प्रत्ययस्य हि निरालम्बनता स्वभाव उपलक्षितः स्वप्ने, जाग्रतोऽपि स्तम्भ इति वा कुड्य इति वा प्रत्यय एव भवति, तस्मात् सोऽपि निरालम्बनः।

श्लो०वा०—'प्रमाणत्वाऽप्रमाणत्वे पुण्यपापादि तत्फलम्।
विध्यर्थवादमन्त्राऽर्थनामधेयादिकल्पना ॥१॥
सर्वेषु लक्षणेष्वेवं स्वप्रमाणगणैः स्थितिः।
वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता ॥२॥
कर्मभ्यः[1] फलसम्बन्धः पारलौक्यैहलौकिके[2]।
सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु ॥३॥
तस्माद्धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसंमतैः।
अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति' ॥४॥ॐ

## अथ निरालम्बनवादः।

न्या०र०—"ननु सर्वं एव निरालम्बनः स्वप्नवत् प्रत्यय" इत्यादिना वाह्यार्थसद्भावं प्रतिपादयति भाष्यकारः, तस्य स्वतन्त्रोपयोगं [3]दर्शयति प्रमाणत्वेति-चतुर्भिः ॥१-४॥ यदि सर्वा बुद्धयो बाह्यार्थशून्याः स्वांशपर्यवसायिन्यो भवेयुः, ततो योऽयं

---

१. 'कर्मिभ्यः'—क, धर्मेभ्यः—ख,.

२. 'लौकिकः'—क,

३. स्वशास्त्रोपयोगमिति पाठः।

ॐ 'स्वर्गकामोयजेते' ति स्वर्गकामो यागं कुर्यादिति पूर्वः पक्षः, यागेन स्वर्गं कुर्यादिति सिद्धान्त इति सोऽपि नार्थशून्यासु बुद्धिषु सिध्यति। कर्मभ्यश्च दर्शपूर्णमासकारीर्यादिभ्यः परलोके इहलोके भवत्स्वर्गवृष्ट्यादिफलसम्बन्धो बाह्याश्रय एव, असति तस्मिन् द्वैविध्यानुपपत्तेः। अतः सर्वमिदं बाह्यार्थसिद्धावसत्यामयुक्तमापद्येतेति, तदुपपादनाय धर्मार्थिभिर्मीमांसकैर्लोकप्रसिद्धैः प्रत्यक्षादिभिः प्रमाणैः पूर्वोत्तरपक्षविभागेनार्थस्य सदसद्भावयो र्यत्नः कार्यः। पूर्वपक्षविशुद्धा हि बुद्धिः सिद्धान्तकरी भवति। अतोऽनुमानेनैवार्थापह्नवपूर्वपक्षं कृत्वा प्रत्यक्षेण तत्सद्भावसिद्धान्तो दर्शयितव्यः। सर्वश्चायं प्रयासः सकललौकिक-वैदिकक्रियास्प्रति तत्सिद्ध्यर्थमिति यावत्। अन्यथा सर्वार्थक्रियाणामुच्छेदो भवेत्। अतः प्रयोजनवद् बाह्यार्थप्रतिपादनम्।

श्लो०वा०—*यदा संवृतिसत्येन सर्वमेतत् प्रकल्प्यते ।
ज्ञानमात्रेऽपि कस्माद्वो वृथाऽऽग्रहो[2]ऽर्थकल्पने ॥५॥
संवृतेर्न तु सत्यत्वं सत्यभेदः कुतो न्वयम् ।
सत्यं चेत् संवृतिः केयं मृषा चेत् सत्यता कथम् ॥६॥ॐ
सत्यत्वं न च[3] सामान्यं मृषार्थपरमार्थयोः ।
विरोधान्न हि वृक्षत्वं सामान्यं वृक्षसिंहयोः ॥७॥‡

न्या०र०—चोदना धर्मे प्रमाणम् अन्यदप्रमाणं, तत्संयोगजं प्रत्यक्षम् अतत्संयोगजमाभासं, ज्योतिष्टोमादि पुण्यं ब्रह्महत्यादि पापं, [1]तदुभयविलक्षणमभ्युदयप्रत्यवायात्मकं तेषां फलं, विधेरर्थः प्रवर्त्तनम्, अर्थवादस्य प्ररोचनमर्थः, मन्त्राणामनुष्ठेयप्रकाशनं, नामधेयानां गुणफलविधानार्थत्वविचार, आदिशब्दोपात्तश्च स्मृत्याचारप्रामाण्याऽप्रामाण्यविचारः, तथा शब्दान्तरश्रुतिलिङ्गश्रुत्यर्थादिभिः कर्मभेदशेषत्वक्रमनियमाः, वचनव्यक्तिभेदेन वाक्यार्थचिन्ता, कर्माणि कानिचिदामुष्मिकस्वर्गफलानि, कानिचिदनियतफलानि, कानिचिदैहिकवृष्ट्यादिफलानीत्यादिव्यवहारः, स सर्वश्चोदनादीनामभावादयुक्तः स्यात् । अतोऽवश्यं धर्माथिभिः पुरुषैः सुगताऽऽशीविषोपसृष्टमाहार्यानिकविषचिकित्सया बाह्यार्थसद्भावे लोकसम्मतप्रमाणादौ बाधनेन यत्नः कर्त्तव्यः क्रियां प्रति, क्रियाऽनुष्ठानं, तत्सिद्धयर्थमित्यर्थः ॥१॥४॥

---

१. पापमित्येतदुभयलक्षणमिति पा० ।
२. 'ग्राहो'—क, ख, ३. 'तु'—ख
* ज्ञानमात्रपक्षे हि बौद्धानामिव सर्वोऽयं प्रमाणादि–व्यवहारः सिध्यत्येवेति शङ्क्यते ।
ॐ संवृतिसत्येन सर्वमिदं बौद्धैराश्रीयते इति सत्यम् । परं नैतद्युक्तम् । यः खल्वयं सत्यभेदो बौद्धैराश्रितः संवृतिसत्यं परमार्थसत्यमिति, नायमुपपद्यते । संवृतेः सत्यत्वाभावात् । मिथ्यापर्यायो हि संवृतिशब्दः । कथं तस्य सत्यशब्दसमभिव्याहारः- इति पूर्वोक्तशंका निरासः । न हि अयमक्षशब्द इव संवृतिपरमार्थयोः साधारणः सत्यशब्दः । अतः सत्यभेदानुपपत्तिः ।
‡ विरोधादेव च मृषार्थपरमार्थयोः सामान्यमपि सत्यत्वं नाभ्युपगन्तुं शक्यम् । समानानां भावः सामान्यम् । कुतस्तस्य विरोधिनोरवकाशः । नहि भवति धर्माधर्मयोर्धर्मत्वमधर्मत्वं वा सामान्यम् । अन्यमात्रयोरपि तत्परामर्शाभावात् दुरुपगमं सामान्यं वृक्षसिंहयोरिव वृक्षत्वम् । किं पुनर्विरोधिनोस्तत् । अत्र चाक्षादिव साधारणशब्दता पूर्वं सत्यशब्दस्य निराकृता, इह गवादिवत् सामान्यशब्दतेति विवेचनीयम् ।

श्लो०वा०—तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः ।
वञ्चनार्थ उपन्यासो लालावक्त्राऽऽसवादिवत् ॥८॥*
नास्तिक्यपरिहारार्थं[1] संवृतिः, कल्पनेति च ॥
कल्पनाऽपि स्वभिन्नस्य नैव निर्वस्तुके भवेत् ॥९॥‡

न्या०र०—चोदयति यदेति । शाक्याः प्राहुः,
द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके संवृतिसत्यं च सत्यं च परमार्थतः ॥ इति । (म० शा० २४—८)

तेन तद्वदेव भवतामपि संवृतिसत्येन [2]बोधेन वा पूर्वोक्तसमस्तव्यवहारसिद्धेः पारमार्थिकार्थसद्भावकल्पने वृथैवाऽभिनिवेश इति ॥५॥

परिहरति संवृतेरिति । मिथ्यापर्यायस्य संवृतिशब्दस्य न सत्यशब्देन सामानाधिकरण्यं, न हि सत्यस्य मिथ्यात्वपरमार्थरूपेण भेदो ऽस्ति, परमार्थस्य हि सत्यशब्दो वाचकः, न त्वक्षादिशब्दवदनेकार्थ इति । एतदेव विवृणोति सत्येति ॥ ६ ॥

सत्यं नाऽनेकार्थः सत्यत्वमेव वदति, तत्तु मृषाऽर्थे [3]ऽप्यनुगतमिति तद्वचनेन संवृतिशब्देन सामानाधिकरण्यं सिध्यति, अत आह सत्यत्वमिति । कारणमाह विरोधादिति । मृषात्वविपरीतं सत्यत्वं कथं तत्राऽनुवर्त्ततेति । अत्रैव दृष्टान्तमाह न हीति ।७॥

तेन मिथ्यावचनोऽप्ययं संवृतिशब्दो बौद्धैः स्वनास्तिक्यपरिहाराय लोकं वञ्चयितुं-प्रयुक्तो लालायामिव वक्त्रासवशब्द इत्याह—तुल्यार्थत्वेऽपीति संवृतिरन्तेन ।

काल्पनिकेनैव बाह्येन सर्वव्यवहारसिद्धिरित्यपि बौद्धानां कल्पनावाचोयुक्तिवद्वञ्चनार्थैव, न हि निर्वस्तुके जगति अभिन्नस्य चिन्मात्रस्य विचित्रव्यवहाराय भेदकल्पना सम्भवतीत्याह कल्पनेति ॥ ८ ॥ ९ ॥

---

१. 'हासा'—क, ख, २. बाधेनेति, पा० । ३. मृषात्वे इति पा० ।

* अतो लोकं वञ्चयितुं मिथ्यापर्यायोऽपि संवृतिशब्दो बौद्धविदग्धैरनुद्वेगकरतया मिथ्यात्व एव विवक्षिते स्वनास्तिक्यपरिजिहीर्षया प्रयुक्तो लालायामिव वक्त्रासवशब्दः ।

॥ कल्पनावाचोयुक्तिरपि स्वनास्तिक्यपरिहारार्थमेव तैराश्रिता ।

‡ क्वचित् हि भिन्नमेव किञ्चित् रूपान्तरं कल्पनास्पदं भवति शुक्ताविव रजतरूपम् । यस्य तु न किञ्चित् भिन्नमस्ति, तत् केन रूपेण कल्प्यताम् । अतः कल्पनामात्रकल्पितेन बाह्येन सर्वलौकिकव्यवहार इत्यपि निर्वस्तुके जगति अभिन्नस्य चिन्मात्रस्य कल्पनाया भेत्तुमशक्यत्वात् दुर्भणम् ।

श्लो०वा०—*तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः ।
तत्सत्यमन्यन्मिथ्येति[1] न सत्यद्वयकल्पना ॥१०॥
स्व[2]प्नादिभोगवच्चापि योपभोगत्व[3]कल्पना ।
तन्निवृत्त्यर्थमेवेह परमार्थे प्रय[4]त्यते ॥११॥‡
न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित्प्रवर्तते ।
यादृच्छिकत्वात्स्वप्नस्य तूष्णीमास्येत पण्डितैः ॥१२॥●
परमार्थफला[5]ऽवाप्तिमिच्छद्भिस्तेन यत्नतः ।
प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्यव[6]स्तुषु ॥१३॥

न्या०र०—उपसंहरति **तमादिति** । यत्खलु परमार्थतो नास्ति तन्नास्त्येव, न तु सत्यम् । यदेव परमार्थतोऽस्ति तदेव सत्यं नाऽन्यत् तद्धि मिथ्यैव, कथं सत्यं स्यान्न तु सत्यद्वयमस्तीति ॥१०॥

किं च संवृतित्वे प्रपञ्चस्य स्वप्नसुखोपभोगवत् स्वर्गाद्युपभोगो ऽपीत्याश्रीयेताऽतस्त-न्निराकरणाय परमार्थे प्रयतितव्यमित्याह **स्वप्नादीति** ॥११॥

तत्तुल्यत्वे वा को दोषोऽत आह **न हीति** । किमिति न प्रवर्त्ततेऽत आह **यादृच्छिकत्वादिति** । अनिरूपितनिमित्तं हि स्वप्नसुखं, न तदभिसंधाय प्रवृत्तिः सम्भवतीति । तेनाऽर्थस्य पारमार्थिकत्वसिद्धयर्थं बाह्यविषयत्वं प्रतीतेः साधयितव्यमित्याह **परमार्थेति** ॥१२॥१३॥

---

१. 'मिथ्यैव'—क, २. 'स्वप्नोपभोगः—ख, ३. 'गस्य'—क,
४. 'स्य'—ग ५. 'फलप्राप्ति'—ख, ६. 'वस्तुनि'—ख

* ननु त्रिधैव तत्त्वं विभजामहे सत्यम्, असत्यम्, संवृतिसत्यं चेति । संवृतं हि नात्यन्तमसद् भवति, व्यवहाराविसंवादात् । नापि सदेव, प्रमाणान्तरविरोधाज्जात्यादिवत् । अतो न संवृतिः प्रमाणं, नाऽप्रमाणमिति विधान्तरमेवेदमिति युक्तस्तदाश्रयतया व्यवहार इत्यत आह—'तस्मादिति ।'

‡ अपिच स्वप्नावगता अपि अर्थाः केचित् शोकहर्षादिव्यवहारहेतवो दृश्यन्ते । अतस्तेऽपि सांवृता एव । तद्वच्च बाह्यार्थाभ्युपगमे स्वप्नादिभोगतुल्य एव शुभाशुभकर्मफलोपभोगो भवेत् । अतः तन्निवृत्त्यर्थमपि परमार्थसत्ये बाह्ये प्रयस्यते इत्याह—**स्वप्नादीति** ।

● कः पुनः स्वप्नतुल्यत्वे दोषः, अत आह—**नहीति** । किमिति न प्रवर्तते अत आह—यादृच्छिकत्वादिति । न हि स्वप्नसुखं मे भवतीति विद्वांसः प्रयस्यन्ति । यादृच्छिकं हि स्वप्नसुखमगणितसाम्परायिकैहिकनिमित्तं, न तत् प्रयस्यतो भवतीति बुद्ध्वा विद्वद्भिस्तूष्णीमुदासीनैरेवास्येत, न क्वचित् प्रयत्नः क्रियेतेत्यर्थः ।

श्लो०वा०—'तत्राऽर्थशून्यं विज्ञानं योगाचाराः समाश्रिताः ।
तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥१४॥
तत्र बाह्यार्थशून्यत्वं तुल्यं तावद् द्वयोरपि ।
निवृत्त्याऽस्य[1] ततो ज्ञाने तद्वत्संवृति[2]कल्पना ॥१५॥
तस्मात्साधारणत्वेन तन्मूलत्वेन चाप्ययम् ।
'बाह्यार्थसदसद्भावे यत्नो भाष्यकृता कृतः' ॥१६॥‡
'बाह्यार्थाऽप[3]ह्नवद्वै[4]तमेकोऽर्थस्य परीक्षणात् ।
प्रमाणमाश्रितश्चैकस्तत्रास्तां यः प्रमेयतः ॥१७॥
प्रमाण[5]स्थस्तु मूलत्वादिहेदानीं प[6]रीक्ष्यते' ।☉
प्रस्तुतः स द्विधा चात्र प्रथमं त्वनुमानतः ॥१८॥ॐ

न्या०र०—किमु पुनर्बाह्यस्यैव सद्भावः प्रतिपाद्यते न ज्ञानस्य, तदपि कैश्चिदपह्नुतम्, अत आह तत्रेति त्रयेण । ज्ञानापह्नववादिनोऽपि प्रथममर्थमपह्नुत्य निर्विषयज्ञानाऽनुपपत्तेः ज्ञानमपह्नुवते, तेनार्थापह्नवो द्वयसाधारणत्वात्, ज्ञानाऽपह्नवस्य च तन्मूलकस्य तन्निराकरणेनैव निराकरणसिद्धेस्तदेव निराक्रियत इति ॥१४॥१६॥

भाष्यकारेण प्रमाणशक्तिपरीक्षाद्वारेण बाह्याऽपह्नवो निराकृतः, न तु प्रमेयपरीक्षाद्वारा । तत्र कारणमाह बाह्यार्थेति सार्द्धेन । प्रमाणबलेनैव बाह्यार्थे व्यवस्थापिते यदिदमवयविनोऽवयवातिरेकेणाऽनुपलब्धेः परमाणूनां चाऽतीन्द्रियत्वान्न बाह्यं ग्राह्यं सम्भतीति चोद्यं, तत् प्रमाणबलेनैव निरस्तं भवतीति प्रमाणबलेनैव परीक्षितुं युक्तमिति । प्रमाणस्थोऽप्यपह्नवो द्विविध इत्याह प्रस्तुत इति ।

---

१. 'निवर्त्यर्थं'—ग, निवृत्त्यर्थं—ख, २. 'कल्पनात्'—ख,
३. 'पह्नवे'—क, ख, पह्नवे द्वैतमेका० ग०, ४. द्वैत'—ख,
५. 'णतस्तु'—ख, ६. 'विचार्यते'—ख,

‡ अत्र भाष्यकारेण बाह्यार्थसद्भाव एव पूर्वपक्षपुरस्सरं प्रतिपादितः । न तु ज्ञानसद्भावः । तत् कस्य हेतोः ? अस्ति हि तत्सद्भावविप्रतिपत्तिरपि । माध्यमिका हि ज्ञानमपि अपलपन्ति । अतस्तन्निराकरणमपि युक्तम् यत् पुनस्तदुपेक्ष्यैव बाह्यार्थापलापो निराक्रियते, तत्र कारणं वक्तव्यमत आह—तत्रेतित्रयेण ।

☉ इह शाबरे तन्त्रे । इदानीम् अस्मिन्नवसरे । प्रमाणस्थ एव बाह्यापह्नवो विचार्यते ।

ॐ ननु यदि प्रमाणस्थो विचारयितव्यः ततः प्रत्यक्षस्य मुख्यत्वात् तदनुसारेणैव विचारो युक्तः । बौद्धैरपि प्रत्यक्षसामर्थ्यादेवैकं तत्त्वमाश्रितम् । नैकस्मिन्नाकारे भासमाने द्वैतमात्मानं लभते इति हि मन्यन्ते । अनुमानन्तु भ्राम्यद्वः प्रत्युक्तमिति किं तत्पुरस्सरीक्रियते, अत आह प्रस्तुत इति ।

श्लो०वा०—प्रत्यक्षबाधे[1] तेनोक्ते पश्चात्तच्छक्त्यवे[2]क्षणात् ।
*'तत्राऽनुमानमाहेदं नन्वि'[3] त्य 'स्य च संगतिः ॥१९॥†
तत्संप्रयोगजं नाम[4] प्रत्यक्षमिति भाषितम् ।
तत्रेन्द्रियार्थसंबन्धभेदो न परमार्थतः ॥२०॥
कल्पितः संप्रयोगस्तु स्वप्नादावपि विद्यते ।
तदतद्योगजन्यस्य[5] विभागस्तेन दुर्लभः ॥२१॥
मिथ्यात्वं यद् द्विधैवोक्तं नान्यथेत्यत्र चोच्यते ।
सर्वस्यैव च मिथ्यात्वे किं विशिष्या[6]ऽभिधीयते ॥२२॥❀
स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात्तथा हि यः ।
प्रत्ययः स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा ॥२३॥◉
'सिद्धसाधनभा[7]वोंऽशे दृष्टान्ताभाव एव च ।
मा भूतामेवशब्दश्च व्यर्थोंऽशेषप्रसाधने ॥२४॥ॐ

न्या०र०—भाष्यतात्पर्यमाह तत्रेतीत्यन्तेन । का पुनरस्य संगतिः, तां द्वेधा दर्शयति अस्येत्यभिधोयते ऽन्तेन । पारमार्थिकं तत्संप्रयोगजत्वं न क्वचिदस्ति, काल्पनिकं त्वाभासेऽपि विद्यते, तदपि नाऽतत्सम्प्रयोगजं स्यात् । तथा सत्यमिथ्याविभागोऽप्ययुक्तः, सर्वस्य मिथ्यात्वादिति पूर्वोक्ताक्षेपेण सङ्गतिरिति ॥१७॥२२॥

---

१. 'बाधनेचोक्ते'—ख, २. 'पेक्षणात्'—क,
३. 'नन्वित्यस्य'—ख, ४. 'नान्यत्'—क, ख,
५. 'योगजत्वस्य'—क, ख, ६. 'विशेष्या'—क,
७. 'भावांशे'—ग

* अनुमानभाष्यमिदानीं प्रकृतसङ्गतिदर्शनार्थमवतारयति—'तत्रेति ।'

† सङ्गतिमाह—अस्येति दुर्लभ इत्यन्तेन । अयमर्थः—यत् सूत्रकारेण तत्संयोगजं प्रत्यक्षमुक्तं तदाक्षेपेणैव सङ्गच्छते । काल्पनिको हि अयमिन्द्रियार्थसम्प्रयोगः, इन्द्रियादेरभावात् । काल्पनिकश्च सकलमिथ्याज्ञानसाधारण इति तदतद्योगजत्व-विभागो न युक्त इति सूत्रोक्ताक्षेप इति ।

❀ स्वोक्ताक्षेपेण वा सङ्गतिरित्याह—मिथ्यात्वमिति । यदेतद् वृत्तिकारग्रन्थान्ते उक्तं—'यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचनप्रत्ययः नान्यः' इति तदनेनाक्षिप्यते । सर्वमिथ्यात्वे विशेषणोपादनवैयर्थ्यम्

◉ स्तम्भादिप्रत्यय इति धर्मिनिर्देशः, मिथ्येति धर्मवचनं, प्रत्ययत्वादिति हेतुः, तथा-हीति दृष्टान्तवचनम् ।

ॐ जाग्रद्बुद्धिविविक्षयैव भाष्यं व्याख्यातव्यम् इत्याह—सिद्धसाधनेति सार्धेन ।

श्लो०वा०—सर्व एवेति तेनात्र जाग्रद्बुद्धिपरिग्रहः[1]।
स्वांशाभ्युपगमाच्चापि वाह्यग्राह्यनिवारणम् ॥२५॥
प्रत्ययस्येति साध्यांशव्याप्तहेतु[1]निदर्शनम्।
हेतुश्चोपनयेनात्र जाग्रतोऽपीति दर्शितः ॥२६॥
विपक्षाभावतश्चात्र व्यतिरेको न कथ्यते।
सामान्यस्य च हेतुत्वा[2]त्कस्मात्पक्षैकदेशता ॥२७॥

इति पूर्वपक्षभाष्यव्याख्या।

न्या०र०—भाष्योक्तमनुमानमुपन्यस्यति स्तम्भादिति ॥२३॥

भाष्ये सर्वशब्दः स्वप्नादिप्रत्ययानपि पक्षीकरोतीति लक्ष्यते, तत्कथं स्तम्भादिप्रत्यय इत्युच्यते, तत्राह सिद्धसाधनेति सार्द्धेन। तेष्वपि हि पक्षीकृतेषु तस्मिन्नंशे सिद्धसाधनता दृष्टान्ताभावश्च स्याताम्। एवशब्दश्च नोपपद्येत। स हि येन सम्बध्यते तत्प्रतियोगिनं व्यवच्छिनत्ति। साकल्यवचनश्च सर्वशब्द इति तत्सवन्ध्येवशब्दो वैकल्यव्यवच्छेदार्थः। तेन जाग्रद्बुद्धिपरिग्रहार्थ एव शब्दः। न कश्चिदेव प्रत्ययो निरालम्बनः, किं तु सर्व एवेति।

एवं सर्वशब्दं विशेषपरं व्यवस्थाप्य धर्मवचनमपि निरालम्बनपदं बाह्याऽनालम्बनत्वेन व्यवस्थापनीयम्, अन्यथा बौद्धस्य स्वाऽभ्युपगतस्वांशालम्बनत्वविघातादिति आह स्वांशेति ॥२४॥२५॥

प्रत्ययस्येति भाष्यार्थमाह प्रत्ययस्येति।

ननु भाष्ये न कश्चिद्धेतुरुक्तः, यस्य [3]व्याप्तिर्निदिश्येतेत्यत आह हेतुरिति। उपनयो नामोदाहरणोपदर्शितसाध्यनियतस्य हेतोः साध्यधर्मिण्युपसंहारः, तदिह "प्रत्ययस्य ही"—त्यादिनोदाहरणीयस्य प्रत्ययस्य निरालम्बनत्वेन नियमं दर्शयित्वा "जाग्रतोऽपी" त्यादिना जाग्रद्बुद्धावुपसंहारः कृतः, तदेव प्रत्ययत्वं हेतुरुक्तं भवति। नावश्यं पञ्चम्यैव हेतुर्निर्देष्टव्यः। उदाहरणोपनयनिगमनैरपि ह्यविकलमेव साधनं, निगमनं च "तस्मात्तोऽपी" त्यनेन दर्शितमिति॥२६॥

ननु यन्निरालम्बनं न भवति तत्प्रत्ययो न भवतीति विपक्षाद्व्यतिरेकः किं नोक्तः, अत आह विपक्षेति। (न हि निरालम्बनज्ञानमात्रवादिनां तदतिरिक्तमस्ति तत्त्वं, तदभावादेव तत्र हेतोरप्रवृत्तेः किं व्यतिरेककथनेनेति।) ननु प्रत्ययो निरालम्बनः प्रत्ययत्वादित्युक्ते प्रतिज्ञार्थैकदेशता हेतोः स्यादत आह सामान्यस्येति ॥२७॥

॥ इति पूर्वपक्षभाष्य-व्याख्या ॥

---

१. 'तुर्निदर्शनम्'—ग, २. 'त्तस्यात्'—ग, ३. प्राप्तिरिति पा०।

भाष्य—उच्यते—स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यंसिष्यति। स्वप्नेऽप्येवमेव सुपरिनिश्चिताऽऽसीत् प्राक् प्रबोधनात् न तत्र कश्चिद् विशेष इति। न। स्वप्ने विपर्ययदर्शनात्। अविपर्ययाच्चेतरस्मिन्। तत्सामान्यादितरत्रापि भविष्यतीति चेत्। यदि प्रत्ययत्वाद् स्वप्नप्रत्ययस्य मिथ्याभावः, जाग्रत्प्रत्ययस्यापि तथा भवितुमर्हति। अथ प्रतीतिस्तथाभावस्य हेतुः, न शक्यते प्रत्ययत्वादयमन्यइति वक्तुम्। अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः। कुत इति चेत्। सनिद्रस्य मनसो दौर्बल्यात् निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ स्वप्नान्ते च सुषुप्तस्याऽभाव एव। अचेतयन्नेव हि सुषुप्त इत्युच्यते। तस्मात् जाग्रतः प्रत्ययो न मिथ्येति।

ननु जाग्रतोऽपि करणदोषः स्यात्। यदि स्यादवगम्येत। स्वप्नदर्शनकालेऽपि नावगम्यत इति चेत्, तत्र प्रबुद्धो हि अवगच्छति निद्राक्रान्तं मे मन आसीदिति।

श्लो०वा०—'जाग्रज्ज्ञाने[1] विशेषोऽयं यतः सुपरिनिश्चयः।
बाह्यालम्बनसंवन्धो न प्रसिद्धः परं प्रति ॥२८॥*
तस्माद्भाष्यकारेण दत्तमुत्तरमत्र तु।
विकल्पसमता वा स्याद्वैधर्म्यसमताऽपि वा' ॥२९॥

न्या०र०—"स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्येष्यती'ति सिद्धान्तभाष्यं, तदाक्षिपति जाग्रज्ज्ञान इति द्वयेन। योऽयं स्वप्नादिभ्यो जाग्रज्ज्ञानस्य सालम्बनत्वसाधनाय सुपरिनिश्चयरूपो विशेषोऽभिहितः, स यस्मात्सालम्बनत्वव्याप्ततया परेषामसिद्धः, तस्माद्विकल्पसमा वैधर्म्यसमा वा जातिरियं, प्रत्ययत्वे तुल्येऽपि यथा किंचित्सुपरिनिश्चितं किं चिन्न, तथा किं चिन्निरालम्बनं किं चित्सालम्बनं भविष्यतीति विकल्पसमा। यदि प्रत्ययत्वेन साधर्म्यान्निरालम्बनत्वं सुपरिनिश्चितत्वेन वैधर्म्यान्निरालम्बनत्वं न स्यादिति वैधर्म्यसमा। तदेतज्जा[2]त्युत्तरं, न साधनमिति ॥२८॥२९॥

---

१. 'जाग्रद्भावे'—क  २. तदेव तज्जात्युत्तरं साधनमिति पा०।

* अत्र सिद्धान्तिभाष्ये जाग्रतो हि बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यतो'ति। अनेन किल सुपरिनिश्चितत्वेन जाग्रद्धियां सालम्बनत्वं साध्यते। नच सुपरिनिश्चितत्वंबाह्यालम्बनसम्बद्धं परान् प्रति प्रसिद्धम्। अतो नानेनासिद्धावयवेनानालम्बनानुमानं पराणुद्यते, सप्रतिसाधनं वा भवति। तस्योभयप्रसिद्धावयवत्वात्। अस्य च तद्विपरीतत्वात्। अतो जात्युत्तरमेवेदं भाष्यकारेण दत्तमित्याक्षिपति—जाग्रज्ज्ञान इति द्वयेन।

श्लो०वा०—दुष्टत्वात्पूर्वपक्षस्य जात्युक्तिः कैश्चिदाश्रिता ।
प्रतिज्ञादोषमेवाहुः केचित्प्रत्यक्षबाधनम् ॥३०॥
शक्ष्यामो यदि विस्पष्टं स्वांशग्राह्यनिवारणम् ।
तदा ते शुद्ध एव स्यात्पक्षो ग्राह्यनिवारणः ॥३१॥
प्रत्यक्षादेश्च विषयो बाह्य एवाऽव[1]तिष्ठते ।
तन्निषेधकृतस्तस्य तेंभवेत् पक्षबाधनम् ॥३२॥*
सुनिश्चियेन चैतेषां बाधकप्रत्ययादृते ।
प्रमाणाभासता नास्तीत्येतस्मात्कथ्यते बलम् ॥३३॥
दुष्टज्ञानगृहीतार्थप्रतिषेधो हि युज्यते ।
गृहीतमात्रबाधे तु स्वपक्षोऽपि न सिध्यति ॥३४॥
अग्राह्यत्वाच्च भेदेन विशेषणविशेष्ययोः ।
अप्रसिद्धोभयत्वं वा वाच्यमन्यतरस्य वा ॥३५॥

न्या०र०—तत्र केषां चिन्मतेन समाधत्ते **दुष्टत्वादिति** । स्वमत आह **प्रतिज्ञेति** । नेदं सुपरिनिश्चितत्वं लिङ्गत्वेनोच्यते, किं तु सुपरिनिश्चितरूपा जाग्रतः प्रत्यक्षादिरूपा बुद्धिर्बाह्यं सुपरिनिश्चितं व्यवस्थापयन्ती तदभावप्रतिज्ञां बाधत इति । प्रत्यक्षग्रहणं सर्वप्रमाणोपलक्षणार्थं, सर्वाणि हि बाह्यं व्यवस्थापयन्तीति ॥३०॥

ननु नीलादिमात्रं प्रत्यक्षेण गृह्यते, तच्च ज्ञानरूपमपि सम्भवतीति नावश्यं बाह्यमेवेति कथं बाह्याऽभावस्य प्रत्यक्षबाधः, अत आह **शक्ष्याम इति** । स्वांशस्य ग्राह्यत्वाऽसम्भवे सिद्धे बाह्यग्राह्यनिवारणोऽपि पक्षः फलतः शुद्ध एव ग्राह्यमात्रनिवारणः स्यादित्यस्ति तदुपस्थापकप्रत्यक्षविरोध इति ॥३१॥

यद्वा यदा स्वांशस्य ग्राह्यत्वं निरस्तं तदा बाह्यस्यैव प्रत्यक्षादिभिर्ग्रहणाद्बाह्याऽभावपक्ष[2]स्याप्यस्त्येव प्रत्यक्षादिविरोध इत्याह **प्रत्यक्षादेरिति** ॥३२॥

सुपरिनिश्चितत्वं च भाष्ये प्रत्यक्षादीनां निरालम्बनाऽनुमानाद् बलीयस्त्वं कथयितुं, न तु लिङ्गत्वेनेत्याह **सुनिश्चयेनेति** ॥३३॥

एतदेव विवृणोति **दुष्टेति** ॥३४॥

स्वपक्षाऽसिद्धिमेव प्रपञ्चयितुमारभते **अग्राह्यत्वादिति** । प्रत्ययरूपधर्मिग्राहकस्य

---

१. 'वशिष्यते'—ग २. प्रत्यक्षस्यापीति पा० ।

* कथं पुनरत्र प्रत्यक्षबाधः । प्रत्यक्षं हि ग्राह्यमन्तरेण आत्मानमलभमानं तन्मात्रमवस्थापयति, न बाह्यम् । किं हि तस्य बाह्येन विना न सिध्यति । ग्राह्यश्च स्वांशो बौद्धैरभ्युपगत एव । अतो न बाह्यापह्नवे प्रत्यक्षत्वादिविरोधः, अत आह—शक्ष्याम इति द्वयेन ।

श्लो०वा०—वक्तृश्रोत्रोश्च यज्ज्ञानं विशेषणविशेष्ययोः ।
तन्निरालम्बनत्वेन स्ववाग्बाधो द्वयोरपि ॥३६॥
संभवो न च भेदस्य[1] विशेषणविशेष्ययोः ।
तस्मान्निरूपणं नास्ति प्रतिज्ञार्थस्य शोभनम् ॥३७॥
निरालम्बनता नाम न किञ्चिद्वस्तु गम्यते ।
तेन तद्व्यतिरेकादौ प्रश्नो नैवोप[2]पद्यते ॥३८॥*
'यद्यवस्तु कथं त्वस्मांस्त्वं बोधयितुमिच्छसि ।
बुध्यसे वा स्वबुद्धया त्वं, क[3]ल्पिता त्वथ साध्यते ॥३९॥†

न्या०र०—निरालम्बनरूपधर्मग्राहकस्य च प्रत्ययस्य निरालम्बनत्वात् अप्रसिद्ध-विशेष्यत्वम्, अप्रसिद्धविशेषणत्वम् अप्रसिद्धोभयरूपत्वं वा पक्षदोषः स्यादिति ॥३५॥

स्ववचनाविरुद्धश्चाऽयं पक्ष इत्याह वक्तृश्रोत्रोरिति । धर्मधर्मिविषयस्यापि वक्तृ-श्रोत्रोः प्रत्ययस्य निरालम्बनत्वेनाऽङ्गीकृतस्यैव धर्मस्य धर्मिणश्च बाधादुभयोः स्यात् स्ववाग्विरोध इति ॥३६॥

किं च विशेष्यात्प्रत्ययाद्विशेषणस्य निरालम्बनत्वस्याऽभेदे विशेषणत्वाऽनुपपत्तिः, भेदस्तु न सम्भवति, भेदग्राहिणः प्रत्ययस्य निरालम्बनत्वादित्याह सम्भव इति । उपसंहरति तस्मादिति ॥३७॥

चोदयति निरालम्बनतेति ॥३८॥

परिहरति यदीति पादत्रयेण । शङ्कते कल्पितेति ॥३८॥३९॥

---

१. 'बोधस्य'—क, ख, २. 'पयुज्यते'—ग, ३. 'कल्पयित्वाऽथ'—क,

* बौद्धानाम्प्रत्यवस्थानमिदम् । एवं हि मन्यन्ते—वस्तुनि व्यतिरेकादिविकल्पो युक्तः, न अवस्तुनि । यथाहुः—"वस्तुन्येष विकल्पः स्यात्" इति । नचालम्बनप्रतिषेधो वस्तुनः, किं तद्व्यतिरेकादिप्रश्नेन ।

† दूषणान्तरमाह—यदीति त्वमन्तेन । यदि तावदवस्तु, कथं तदस्मान् प्रतिबोध-यितुमिच्छा भवतः । स्वयं वा तद्विषया बुद्धिः । न हि अवस्तु बुद्धिविषयो भवति । तद्विषयत्वे च वस्तुत्वापातात् । अर्थक्रियालक्षणत्वाच्च सत्त्वस्य । तल्लक्षणत्वाच्च वस्तुत्वस्येति । यदि तूच्यते—यद्यपि निरालम्बनत्वं नाम न किञ्चित् परमार्थतोऽस्ति । तथापि तत्सत्त्वं कल्पयित्वाऽनुमानव्यवहारः क्रियते प्रतिमायामिव देवतात्वमाराधनादिव्यवहारः इति । तदयुक्तम् । असतः कल्पनायोगात् । अन्यत्र प्रसिद्धसद्भावा हि विष्ण्वाद्या देवता, युक्तं यदन्यत्र कल्प्यन्ते । अत्यन्ताप्रसिद्ध-सद्भावं त्वनालम्बनत्वं न गगनकुसुमादिवत् कल्पनामर्हति । तदेतदाशङ्कया सहाह—कल्पितेति ।

श्लो०वा०—असतः कल्पना कीदृक् क्लृप्तौ वस्तु प्रसज्यते ।
कथमिष्टमभावे चेद्वस्तु सोऽपीति वक्ष्यते ॥४०॥
तथा प्रत्यय इत्येष कर्म भावादि वा भवेत् ।
भावादिषु विरोधः स्यात्कर्म चेत्सिद्धसाधनम् ॥४१॥
प्रत्याय्यस्य हि रूपादेर्निरालम्बनतेष्यते ।
अविज्ञानात्मकत्वेन किञ्चिन्नालम्बते ह्यसौ ॥४२॥
कर्तृत्वे करणत्वे वा पक्षत्वं शब्दयोरपि ।
तन्निरालम्बनत्वेन पक्षाऽभावः प्रसज्यते ॥४३॥
*प्रत्याय्येन च भिन्नेन विना कर्त्राद्यसम्भवः ।
प्रत्यये तन्निमित्ते वा बाधः स्ववचनेन ते ॥४४॥
अथापि रूढिरूपेण प्रत्ययः स्यात्तथापि तु ।
ग्राहकं वस्तु सिद्धं नः प्रत्ययोऽन्यस्य वस्तुनः ॥४५॥
तमभ्युपेत्य पक्षश्चेदभ्युपेतं विरुध्यते ।

न्या०र०—दूषयति **असत इति** । कल्पना हि ज्ञानं, न च तुच्छस्य तद्विषयत्वाऽनुपपत्तिरित्याह **क्लृप्ताविति** । चोदयति **कथमिति** । अभावस्याऽवस्तुनोऽपि ज्ञानविषयत्वं दृष्टमिति । परिहरति **वस्त्विति** ॥४०॥

यश्चायं धर्मिवचनः प्रत्ययशब्दः स भावकर्मकर्तृकरणानामन्यतमं वदेत्, कर्तृभावादिषु स्ववाग्विरोधः, कर्मणि सिद्धसाधनमित्याह **तथेति** ।

सिद्धसाधनमेव विवृणोति **प्रत्याय्यस्येति** । कथमिष्यतेऽत आह **अविज्ञानेति** ॥४२॥

कर्तृकरणवचनत्वे तु धर्मधर्मिप्रतिपादकयोरपि शब्दयोर्विवक्षावशेन प्रतीतौ कर्तृकरणत्वसम्भवात्तयोरपि निरालम्बनत्वं स्यात् । शब्दस्य च निरालम्बनत्वमभिधेयशून्यत्वं नान्यत् । अतश्च पक्षस्यैवाऽभावः प्रतिज्ञातः स्यादित्याह **कर्तृत्व इति** ।

'भावादिषु विरोधः स्या'दिति यदुक्तं तद्विवृणोति **प्रत्याय्येनेति** । भावे तावत् प्रतीतिः प्रत्ययः, सा च वस्त्वन्तरप्रकाशस्वभावेति उद्दिष्टमात्रैव सालम्बना प्रतीतेति तन्निमित्तप्रत्ययशब्दे धर्म्युक्त्यैव निरालम्बनत्वस्य बाधः, तत्सालम्बनतयैव कर्तृकरणयोरपि तद्द्वारेण सालम्बनत्वात् स एव दोष इति ॥४४॥

यदि तु रूढ एव प्रत्ययशब्दः, तथापि स्ववाग्विरोध इत्याह **अथापीति** । कारणमाह **ग्राहकमिति** । प्रत्ययशब्दस्याऽर्थान्तरग्राहकवस्तुवचनता लोकसिद्धेति ॥४५॥

तादृशं च प्रत्ययमभ्युपेत्य निरालम्बनत्वसाधनेऽभ्युपगमविरोधोऽपीत्याह **तमिति** ।

---

* 'भावादिषु विरोधः स्यादि'ति यदुक्तं तद् विवृणोति—प्रत्याय्येनचेति ।

श्लो०वा०——विशेष्यस्याऽप्रसिद्धिश्च तवाऽस्माकमतादृशे ॥४६॥
आत्मधर्मस्वतन्त्रत्वकल्पनेऽपि तथा भवेत् ।
न च प्रत्ययमात्रत्वं किञ्चिदस्त्यनिरूपणात् ॥४७॥
शब्दाऽर्थमात्ररूपेण यथाऽन्येषां निरूपणम् ।
तथा च भवतो न स्याद्वाच्यभेदमनिच्छतः ॥४८॥*
[1]निरालम्बनता चापि[1] सर्वथा यदि साध्यते ।
विशेषणा[2]ऽप्रसिद्धिश्च दृष्टान्तश्च न विद्यते ॥४९॥
केन चिच्चेत्प्रकारेण निरालम्बनतोच्यते ।
रसज्ञानस्य रूपादिशून्यत्वात्सिद्धसाधनम् ॥५०॥
अथ बुद्धिर्यदाकारा तदालम्बनवारणम् ।

न्या०र०——ईदृशश्च प्रत्ययस्तवाऽसिद्ध इत्यप्रसिद्धविशेष्यता पक्षस्येत्याह **विशेष्यस्येति तवाऽन्तेन**। अतादृशे तु पक्षीकृतेऽस्माकमत्राऽप्रसिद्धविशेष्यत्वमित्याह **अस्माकमिति** ॥४६॥

किं चात्मधर्मो वा प्रत्ययः पक्षीक्रियते, स्वतन्त्रो वा ? पूर्वत्र तवाऽप्रसिद्धविशेष्यत्वम् उत्तरत्र ममेत्याह **आत्मधर्मेति**। न चाऽनिर्धारितविशेषं प्रत्ययमात्रं पक्षः, तस्याऽनिरूपणादित्याह **न चेति** ॥४७॥

नन्विदं सर्वसाधनेषु शक्यं वक्तुम्, अनित्यः शब्द इति किमाकाशगुणः शब्दः, किं वा वायवीय, इत्यपि सम्भवात् । अथ तत्र शब्दशब्दवाच्यं पक्षः, तदिहाऽपि प्रत्ययशब्दवाच्यमात्रं सम्भवत्येवाऽत आह **शब्दार्थेति**। न ह्यसाधारणाद् भिन्नं शब्दार्थमात्रं सामान्यं भवतामस्तीति ॥४८॥

एवं धर्मी विकल्प्य दूषितः, धर्ममपि निरालम्बनत्वं विकल्प्य दूषयति **निरालम्बनतेति**। स्वप्नादावपि देशकालान्तराऽवस्थितमस्त्येव बाह्यम्, सन्निहिततद्देशकालसंसर्गमात्रं तु नास्ति । तेनात्यन्तं निरालम्बनं न किं चिदप्यस्तीत्यप्रसिद्धविशेषणता पक्षस्य, दृष्टान्तस्य च साध्यविकलतेति ॥४९॥

कथं चिन्निरालम्बनत्वे तु सिद्धसाधनमित्याह **केन चिदिति**। रसज्ञानं रसालम्बनं रूपस्वरूपात्मना न विद्यत एवेति तदालम्बनत्वं तज्ज्ञानस्य नास्त्येवेति सिद्धसाधनमिति ॥५०॥

---

(१) 'चेह'—क (२) 'णप्रसिद्धि'—ग

* यथा शब्दार्थसामान्यरूपेण अन्येषां पक्षाणां निरूपणं भवति, नैवमिह भवतः सम्भवति । असाधारणरूपातिरेकिणः सामान्यात्मनो वाच्यस्य भवतामनिष्टत्वात् ।

श्लो०वा०—स्वाकारस्याऽभ्युपेतत्वात्तदभावो विरुध्यते ॥५१॥‡
वाह्याऽनालम्बनत्वे ऽपि बाह्य इत्य[1]ग्रहो यदि ।
स्तम्भादौ नैव तद्बुद्धिरित्येवं सिद्धसाधनम् ॥५२॥□
अथ[2] स्तम्भादिरूपेण निरालम्वनतोच्यते ।
संवेदनस्य दृष्टत्वात्तद्विरोधः प्रसज्यते ॥५३॥*
द्विचन्द्रादिषु तुल्यश्चेन्नेन्द्रियाऽप्राप्तितो हि नः ।
तत्राऽनालम्बनोक्तिः स्यान्नाऽर्थसंवित्त्यभावतः ॥५४॥
सर्वत्रार्थेन्द्रियाणां नः संयोगसदसत्तया ।
संवित्तौ विद्यमानायां सदसद्ग्राहिका[3] स्थितिः ॥५५॥卐

न्या०र०—अथ यदाभासा बुद्धिस्तस्याऽसत्त्वमुच्यते, ततः स्वांशस्य बोधाऽनभ्युपगमात् तदसत्त्वेऽभ्युपगमविरोध इत्याह अथेति ॥५१॥

यदि तु वाह्याऽनालम्बनत्वं साध्यते वाह्यं स्वातिरिक्तं नालम्बते बुद्धिरिति, तत्रापि यदि वाह्य इत्येवमग्रहणं[4] साध्यते, ततः सिद्धसाधनमित्याह बाह्येति ॥५२॥

स्तम्भादिरूपेण त्वनालम्बनत्वे संविद्विरोध इत्याह अथेति ॥५३॥

शङ्कते द्विचन्द्रादिष्विति । तुल्योऽयमनालम्बनत्वाभिमतेष्वपि द्विचन्द्रादिज्ञानेषु संविद्विरोध इति । परिहरति नेति । द्विचन्द्रबुद्धिरिन्द्रियाऽप्राप्तमर्थमविद्यमानमेव चन्द्रद्वित्वं गृह्णातीति कृत्वाऽनालम्बना, न तु संवित्त्यभावादिति ॥५४॥

पूर्वत्र [5]शुक्तिरजतसंवेदनेऽपीदृशमेवाऽनालम्बनत्वं न संविदभावादित्याह सर्वत्रेति ॥५५॥

---

१. 'त्याग्रहो'—क, ख,, २. 'तथा'—क, ग,
३. 'ग्राह्यता'—क, 'ग्राह्यना'—ख, ४. 'मग्रहणेसाध्ये सिद्धेति, पाठः,
५. सर्णत्रेति पाठः ।

‡ ननु यदाकारा बुद्धिस्तन्नालम्बते इति साधयिष्यामः, न सिद्धसाधनं भविष्यतीति, तदेतदाङ्कते—अथेति ।

□ ननु किमापाद्य दूषणोद्भावनम् । बाह्यानालम्बनत्वं हि नः पक्षः । अतो नाभ्युपेतबाध इत्यत आह—बाह्येति ।

* यदि तु स्तम्भानालम्बनत्वमेव साध्यते, ततस्तद्रूपसंवेदनस्य दृष्टत्वात् संविद्विरोध एवेत्याह—अथेति ।

卐 ननु एवं संवेदनानपह्नवे यथावभासम् अर्थस्य सत्त्वात् सदसद्विवेको न स्यात् अत आह—सर्वत्रेति ।

श्लो०वा०--भवतस्त्विन्द्रियादीनामभावाद् ग्रहणादृते ।
नालम्बनत्वे[1] हेतुः स्यान्निषेधोऽतो न युज्यते ॥५६॥
बहिर्भावाऽप्रसिद्धत्वात्तेनाऽनालम्बना मतिः ।
कथञ्चि[2]त्साध्यते नैष पक्षो हि ज्ञायते तदा[3] ॥५७॥
यथाऽन्यबोधनाशक्तेर्नाप्रसिद्धे विशेषणे ।
[4]पक्षसिद्धिस्त[4]थैव स्याद्विशेष[5]णविशेषणे ॥५८॥
नाऽप्रसिद्धे पदार्थे हि वाक्यार्थः संप्रतीयते ।
तत्पूर्वकत्वात्पक्षश्च वाक्यार्थः स्थापयिष्यते ॥५९॥
पर्युदासे निषेधे वा व्यतिरिक्तस्य वस्तुनः ।
प्रमेयत्वाद्यभेदेन जगतः सिद्धसाधनम् ॥६०॥
यदि चात्यन्त[6]भेदेन निरालम्बनतोच्यते ।
कथञ्चिच्चेद्विरुद्धचेत प्राक् पक्षः कल्पितेन ते ॥६१॥

न्या०र०--भवन्मते त्विन्द्रियादीनामभावात्तद्रूपग्रहणमेव तदालम्बनत्वं, तन्निषेधे च स्फुट एव तद्विरोध इत्याह भवत इति ॥५६॥

बाह्याऽनालम्बनत्वे बाह्य इत्यग्रहणे सिद्धसाधनमुक्तम्, अथ यद्वस्तुतो बाह्यं तदनालम्बनत्वं साध्यते, ततोऽप्रसिद्धविशेषणः पक्षः स्याद्, बहिर्भावरूपस्याऽर्थस्य भवतामप्रसिद्धत्वात्तद्विशिष्टेन निरालम्बनत्वेन विशिष्टः प्रत्ययो न साधयितुं शक्यत इत्याह बहिर्भावेति ॥५७॥

ननु विशेषणाऽप्रसिद्धिर्दोषः, न तु विशेषणविशेषणाऽप्रसिद्धिरत आह यथेति ॥५८॥

कथमन्यबोधनाऽशक्तिरत आह नाऽप्रसिद्ध इति । बहिर्भावादिपदार्थविशिष्टो हि पक्षः, स वाक्यार्थरूपत्वादप्रसिद्धेषु पदार्थेषु न ज्ञायत इति व्यतिरिक्तानालम्बनत्वं च साधयता यदि पर्युदासाङ्गीकरणेनाऽव्यतिरिक्तमालम्बत इति साध्यते, यदि वा प्रतिषेधाऽङ्गीकरणेन व्यतिरिक्तं नालम्बते इति साध्यते[7] द्वेधाऽपि सिद्धसाधनं, प्रमेयत्वरूपेण सर्वस्य सर्वस्मादव्यतिरेकादित्याह पर्युदासे इति । ॥६०॥

व्यतिरिक्तत्वं च यद्यात्यन्तिकं, तथापि तस्य क्वचिदप्यभावात् तदनालम्बनत्वे सिद्धसाधनमेवेत्याह यदि चेति । सिद्धसाधनमित्यतीतेनाऽन्वय इति । यदि तु कथं चिद्भिन्नं नालम्बत इत्युच्यते, ततः प्रमेयाकारस्य नीलादेः प्रमाणाकारस्य च संविद्रूपस्य काल्पनिकभेदाऽभ्युपगमात्तद्विरुद्धः पक्ष इत्याह कथं चिदिति ॥६१॥

---

१. त्व हेतुः'—क, २. 'कथञ्चेत्सा'—क, ख, ३. 'यदा'—क,
४. 'तवेहस्याद्'—क, ५. 'विशेषेण'—क,
६. 'भिन्नेन'—क, ७. इति द्वेधापीति पा० ।

श्लो०वा०—वस्त्वाद्याकारतश्चापि धीर्निरालम्बनेष्यते ।
ग्राहकाच्चेदभिन्नत्वं शक्तिभेदो विरुध्यते ॥६२॥
निरालम्बनबुद्धेश्च यद्युत्पत्तिः प्रसाध्यते ।
दृष्टत्वात्सेष्यतेऽस्माभिर्बाह्यग्राह्यविवर्जिता ॥६३॥
सम्यक्त्वं पुनरेतस्यास्त्वं नेच्छसि कथञ्चन ।
आत्मांशेऽवसिता ह्येषा मृगतृष्णादिबुद्धिवत् ॥६४॥
'चैत्रादिप्रत्ययानां च निरालम्बनता यदि ।
धर्मभूता न गृह्येत साधनोत्थि'तया धिया ॥६५॥
ततो विषयनानात्वात् प्रतियोग्यनिराकृता ।
रूपात् सालम्बनप्राप्तिः सती केन निवार्यते' ॥६६॥
यदि प्रत्ययशब्दोऽपि प्रत्ययत्वेन गृह्यते ।
संवित्त्यालम्बनत्वेन वार्यते, सिद्धसाधनम् ॥६७॥

न्या०र०—अन्यथा सिद्धसाधनं दर्शयति वस्त्विति । बुद्धिर्ह्यसाधारणेन संविद्रूपेणाऽर्थमालम्बते, व्योमादिसाधारणेन तु जडरूपेण वस्त्वाकारेणाऽनालम्बनैवेति । यदि तु ग्राह्यमेव पक्षीकृत्य ग्राहकादभिन्नमिति साध्यते, तथापि काल्पनिकाशक्तिभेदाऽभ्युपगमेन विरोधः, प्रमेयत्वाद्यभेदाच्च सिद्धसाधनमित्यभिप्रायेणाह ग्राहकादिति ॥६२॥

यदि तु सर्वप्रकाराऽसम्भवान्निरालम्बनबुद्ध्युत्पत्तिमात्रमेव चिकीर्षितं, तदस्तु नाम, सा तु बुद्धिर्बाह्यग्राह्यवर्जिता मिथ्याभूतेत्येतावदस्माभिरुच्यत इत्याह निरालम्बनेति ॥६३॥

त्वयाऽपि नाऽस्याः सम्यक्त्वमर्थान्तरालम्बनत्वमिष्यते, बुद्ध्यन्तरवदियमपि स्वांशपर्यवसायिन्येव, अन्यथा तत्रैव हेतुरनैकान्तिकः स्यादित्याह सम्यक्त्वमिति ॥६४॥

किं च, भवदीयसाधनोत्थिताऽनुमानबुद्धिरियं, साऽप्यात्मांशपर्यवसायिन्येवेति तया प्रत्ययान्तराणां धर्मतया निरालम्बनत्वं न गृहीतमिति प्रतियोगिभूतेन निरालम्बनत्वेनाऽनिराकृता सती स्वरसप्राप्ता सालम्बनता न केन चिद्वारिता स्यादित्याह चैत्रेति द्वयेन ॥६५॥६६॥

यदि धर्मिवचनेन प्रत्ययशब्देन स्वरूपपरेण प्रत्ययशब्दमेव पक्षीकृत्य तत्संवित्त्यालम्बनत्वं स्तम्भादीनां वार्यते, प्रत्ययशब्दो निरालम्बनः न किं चिदवलम्बते, न किं चिज्जानाति, ततः सिद्धसाधनम्, अचेतनत्वात्तस्येत्याह यदीति ॥६७॥

यदि तु बुद्ध्यनुत्पादकत्वं निरालम्बनत्व'वचनत्वं, तथा सत्यज्ञानात्सिद्धिः साध्य-

---

१. 'नोज्झितया'—क, २. निरालम्बनत्वमिति पा० ।

श्लो॰वा॰—बुद्ध्युत्पादनशक्तिश्चेद्वार्या, साध्यं न सिध्यति।
साधनस्य प्रयोगोऽत्र बोधकत्वाद्विना न ते ॥६८॥
'न चाऽभिधाऽ'स्त्यसंबन्धादृते भेदाच्च नास्त्यसौ।
न चासौ तद्गतं भेदं बोधयन्त्या धियः विना ॥६९॥
प्राश्निकैर्नाऽगृहीते च वाक्य'स्यावयवे पृथक्।
पक्षे हेतौ च दृष्टान्ते वादिनि प्रतिवादिनि ॥७०॥
साधनस्याऽप्रयोगः स्यादभ्युपेत्योच्यते यदि।
पूर्वाऽभ्युपगमेनैव प्रतिज्ञा बाध्यते 'ततः' ॥७१॥
'धर्माऽधर्मादिभेदे च नाऽसिद्धे परमार्थतः।
शिष्यात्मनोश्च धर्मादिरुपदेशोऽवकल्पते ॥७२॥
तदनुष्ठानतो 'बुद्धैरिष्टो भेदः' स्फुटं च तैः।
सूत्रान्तरेऽभ्युपेतत्वाद्भवेदागमबाधनम् ॥७३॥
सर्वलोकप्रसिद्धया च पक्षबाधोऽत्र ते ध्रुवम्।
कृत्स्नसाधनबुद्धिश्च यदि मिथ्येष्यते ततः ॥७४॥
सर्वाऽभावो यथेष्टं वा न्यूनता वाऽभिधीयते'।

न्या॰र॰—धर्मिणोर्न स्यादित्याह बुद्धीति। कारणमाह साधनस्येति। न हि धर्मिनिर्देशकस्य प्रत्ययशब्दस्याऽबोधकत्वे साधनप्रयोगः सम्भवतीति ॥६८॥

पूर्वाऽभ्युपगमविरुद्धश्चाऽयं पक्ष इत्याह न चेति त्रयेण। साधनवाक्यगतानां शब्दानां तद्वाच्यानां च मिथो भेदं सम्बन्धं, तथा प्राश्निकानां च साधनाऽवयवतद्वाच्य-पक्षादिवादिप्रतिवादिविषयं यत् ज्ञानं, तस्य सालम्बनत्वमङ्गीकृत्य साधनं प्रयोक्तव्यं, तदङ्गीकरणे च तेनैव प्रतिज्ञा बाध्येतेति ॥६९॥७१॥

किं च, धर्माऽधर्मोपदेशानुमितबुद्धाऽभिप्रायविरुद्धोऽयं बाह्यापह्नवः, न ह्यनभिप्रेते धर्मादिभेदे तदुपदेशोऽनुष्ठानमवकल्पत इत्याह धर्माऽधर्मेति भेदोऽन्तेन। शिष्यात्मनोश्च असिद्धे भेदइत्यनुषङ्गः। साक्षादेव बाह्यसद्भावः, स धर्मसमाख्याते सूत्रे बुद्धेनोक्तः, तेनापि बाधः पक्षस्येत्याह स्फुटमिति ॥७२॥७३॥

सर्वलोकप्रसिद्धस्य बाह्यस्याऽपह्नवस्तेनैव बोध्यत इत्याह सर्वेति। किं च त्वदीय-साधनगतपदार्थवाक्यार्थज्ञानानां सर्वेषां मिथ्यात्वे सर्वस्य साधनस्याऽभावो यथेष्टं पक्षा-दिन्यूनत्वं वा शक्यं वक्तुमित्याह कृत्स्नेति ॥७४॥

अमिथ्यात्वे तैरेव हेतुरनैकान्तिकः स्यादित्याह तेषामिति ॥७५॥

१. 'धार्थसंबंधा'—ग, २. 'वाक्येसा'—ग, ३. 'साध्यते'—ग,
४. 'बुद्धे'—ग, ५. 'न्यूनत्वाद्यभि'—क,

श्लो०वा०—तेषां सालम्बनत्वे वा तैरनैकान्तिको भवेत्[1] ॥७५॥
तदन्यस्य प्रतिज्ञा चेत्तदन्यप्रत्ययो मृषा।
तन्मिथ्यात्वप्रसङ्गे च सर्वं पूर्वं न सिध्यति ॥७६॥*
स्तम्भादिसाधनज्ञानैर्भेदो न हि यथा भवेत्।
यावद्यावत्प्रतिज्ञेयं तदन्यस्य प्रतीयते[2] ॥७७॥
तावत्तावत्परेषां स्यान्मिथ्यात्वादन्यबाधनम्।
विरुद्धाऽव्यभिचारित्वं बाधो वाऽप्यनुमानतः ॥७८॥
इत्थं सर्वेषु पक्षेषु वक्तव्यं प्रतिसाधनम्।
बाह्यार्थालम्बना बुद्धिरिति सम्यक् च धीरियम् ॥७९॥
बाधकाऽपेतबुद्धित्वाद्यथा स्वप्नादिबाधधीः।
साऽपि मिथ्येति चेद्ब्रूयात् 'स्वप्नादीनामबाधनात् ॥८०॥
न स्यात्[3] साधर्म्यदृष्टान्तो भवतः साधनेऽधुना'।
विज्ञानाऽस्तित्वभिन्नत्वक्षणिकत्वादिधीस्तथा ॥८१॥

न्या०र०—शङ्कते तदन्यस्येति। दूषयति तदन्येति। ततः किमित्याह तन्मिथ्यात्वेति। अन्यत्वग्राहिप्रत्ययमिथ्यात्वे हि सर्वं साधनं सिध्यतीति ॥७६॥

कथं न सिध्यतीत्यत आह स्तम्भेति। अन्यत्वज्ञानमिथ्यात्वे हि अन्यत्वं न स्यात्, तदभावे च स्तम्भादिज्ञानवदेव साधनत्वज्ञानस्यापि मिथ्यात्वात्साधनाऽसिद्धिरिति। यदि तु तदन्यत्वग्राहिप्रत्ययव्यतिरिक्तः प्रत्ययः पक्षीक्रियते, ततस्तद्व्यतिरेकग्राहिप्रत्ययस्य मिथ्यात्वात्सर्वस्य पूर्वस्याऽसिद्धिः, एवं ततः परमपि वक्तव्यमित्याह यावदिति।

ये चेमे प्रथमपक्षात्प्रभृति तदन्यप्रतिज्ञादिभिः पक्षा दर्शिताः, तेषु सर्वेषु विरुद्धाऽव्यभिचारित्वं हेतोरनुमानबाधो वा प्रतिज्ञायाः स्यादित्याह विरुद्धेति ॥७७॥७८॥

कथमित्याह इत्थमिति। तदेव दर्शयति बाह्याऽर्थेति। 'बाह्यार्थालम्बना बुद्धि' रित्यस्माद्वाक्याद्या बुद्धिः, सा समीचीना, बाधकाऽपेतबुद्धित्वात्, स्वाप्नादीनां या बाधिका धीर्जाग्रद्धीस्तद्वदिति। शङ्कते स ऽपीति। ततश्च साध्यवैकल्यमिति। दूषयति स्वप्नादीनामिति पादत्रयेण। दोषान्तरमाह विज्ञानेति। अथ साऽपि मिथ्येत्युच्यते, ततः

---

१. 'न्तिका'—क, २. 'प्रणीयते'—क, ३. 'तस्मात् साधर्म्य'—ग,

* यदि पक्षादिग्राहिव्यतिरिक्ता एव प्रत्यया निरालम्बनत्वेन प्रतिज्ञायन्ते, ततस्तद्व्यतिरेकग्राहिणः प्रत्ययस्य पक्षाद्यविषयत्वान्मृषात्वमापद्यत इत्याह—तदन्यस्येति। अभ्युपगमे दोषमाह—तन्मिथ्येति।

श्लो०वा० सम्यक् चेदभ्युपेयेत 'तदाऽनैकान्तिको भवेत् ।
तन्मिथ्याऽभ्युपपत्तौ च पक्षबाधः प्रसज्यते ।।८२।।
तथा च बद्धमुक्तादिव्यवस्था न प्रकल्पते ।
ततश्च मोक्षयत्नस्य वैफल्यं वः प्रसज्यते ।।८३।।
'विकल्पोत्पद्यमाना च ज्ञानास्तित्वादिधीर्यदि ।
मृषेष्टा, न च दृष्टाऽत्र प्रमाणान्तरतो गतिः ।।८४।।
प्रमाणाऽभावतस्तेन ज्ञानाऽस्तित्वादि दुर्लभम्' ।
'सर्वं चाप्यस्मदादीनां मिथ्या ज्ञानं विकल्पनात् ।।८५।।
सान्निध्यविप्रकृष्टत्वे सत्त्वासत्त्वे[2] च दुर्लभे ।
मिथ्याज्ञानाऽविशेषे ऽपि सांख्यादिपरिवर्जनात् ।।८६।।
बौद्धदर्शन एकस्मिन् पक्षपातो न युज्यते' ।
मृषात्वं यदि बुद्धेः स्याद्बाधः किं नोपलभ्यते ।।७८।।*

व्या०र०—पक्षीकृतस्य ज्ञानस्य तद्विशेषणानां च भेदादीनामभावः स्यादित्याह तन्मिथ्येति ।।७९।।८२।।

भेदाऽभावे च नित्यैकज्ञानवादिनामिव भवतामपि बद्धमुक्तव्यवस्थाऽनुपपत्तिरित्याह तथा चेति । एवं च मुक्तस्यापि बद्धादभिन्नस्य तद्वदेव बन्धाऽपरित्यागान्मोक्षयत्नोऽपि विफलः स्यादित्याह ततश्चेति ।।८३।।

यदि तु न ज्ञानानां मिथ्यात्वं किं तु सविकल्पकज्ञानानामेव; तेन ज्ञानास्तित्वादिधीरपि यदि विकल्पः स्यात्ततो मिथ्या स्यात्, सा तु निर्विकल्पिकेति, तत्राह विकल्पेति सार्द्धेन । सविकल्पकात्प्रमाणान्तरं निर्विकल्पकं, न तेन क्षणिकत्वाद्यवगन्तुं शक्यमिति । किं च, सर्वेष्वेषु तन्त्रार्थेषु सविकल्पकत्वादस्माकं ज्ञानं मिथ्यैव, न चेन्द्रियसंनिध्यसंनिधिकृतोऽर्थसदसत्त्वकृतो वा विशेषोऽस्ति, सर्वस्य मिथ्यात्वात् । एवं च सांख्यादितन्त्रसिद्धान्तपरित्यागेन बौद्धसिद्धान्ते पक्षपातो न युक्त इत्याह सर्वमिति द्वयेन ।

स्वप्नादिषु मिथ्यात्वं बाधनियतं दृष्टं, तदभावान्न जाग्रज्ज्ञानेषु तत्स्यादित्याह [3]मृषात्वमिति । तदभावेऽपि चेन्मिथ्यात्वं स्यात्ततः क्षणिकत्वादिज्ञानानामपि मिथ्यात्वात्स एव दोष इत्याह बाधादीति । किं च, स्वतः प्रमाणस्य प्रमाणभूतप्रतियोगिज्ञाना-

१. 'तथा'—ग, २. 'सत्ताऽसत्तेति'—क, ३. मिथ्यात्वमिति इति पा० ।
* अपिच बुद्धीनां मिथ्यात्वं मृगतृष्णादिज्ञानेषु बाधकेन व्याप्तमुपलब्धम् । न च जाग्रद्बुद्धयो बाध्यन्ते । अतो व्यापकनिवृत्त्या व्याप्यनिवृत्तिरित्यभिप्रायेणाह—मृषात्वमिति ।

श्लो०वा०—बाधाद्विनाऽपि तच्चेत्स्याद्व्यवस्थां न प्रकल्पते ।
प्रतियोगिनि दृष्टे च जाग्रज्ज्ञाने मृषा भवेत् ॥८८॥
स्वप्नादिबुद्धिरस्माकं तव भेदोऽपि किङ्कृतः ।
न चान्यत् प्रतियोग्यस्ति जाग्रज्ज्ञानस्य शोभनम् ॥८९॥
यद्दर्शनेन मिथ्यात्वं स्तम्भादिप्रत्ययो व्रजेत् ।
स्वप्नादिप्रतियोगित्वं सर्वलोकप्रसिद्धितः ॥९०॥
तदीयधर्मवैधर्म्याद्वाधकप्रत्ययो यथा ।
योगिनां जायते बुद्धिर्बाधिका प्रतियोगिनी ॥९१॥*
जाग्रत्स्तम्भादिबुद्धीनां ततः स्वप्नादितुल्यता ।
प्राप्तानां तामवस्थां च सर्वप्राणभृतामपि ॥९२॥
बाधोऽयं भविता तेन सिद्धा सप्रतियोगिता ।
इह जन्मनि केषाञ्चिन्न तावदुपलभ्यते ॥९३॥
योग्यवस्थागतानां तु न विद्मः किं भविष्यति ।
योगिनां चाऽस्मदीयानां[1] त्वदुक्तप्रतियोगिनी ॥९४॥

स्या०र०—धीनं मृषात्वं, तव तु सर्वामिथ्यात्ववादिदं बाधकमिदं बाध्यमिति भेदः किंकृतः, तदभावाच्च न स्वप्नप्रत्ययस्य मिथ्यात्वं स्यादित्याह प्रतियोगिनीति ।

ननु मा तावत्सिध्यतु स्वप्नप्रत्ययस्य मिथ्यात्वं, जाग्रज्ज्ञानस्य किं न भवत्यत आह न चान्यदिति । शोभनम्, प्रमाणमित्यर्थः । तदभावान्न मिथ्यात्वमिति । सम्वक्त्वं वा कथं, येन मिथ्यात्वं न स्या[2]दत आह स्वप्नादीति । स्वप्नादिप्रतियोगित्वं जाग्रज्ज्ञानस्य सर्वलोकप्रसिद्धम् । तदीयधर्मवैधर्म्यादबाध्यत्वादित्यर्थः । न ह्यबाध्यस्य मिथ्यात्वं भवति, यथा स्वापादुत्थितस्य साक्षाद्बाधकं नैतदेवमिति ज्ञानं, तथाऽन्या अपि जाग्रद्धियः स्वप्नगृहीतार्थविपरीतं गृह्णन्त्यः स्वप्नप्रतियोगिन्यो भवन्तीति ।

चोदयति योगिनामिति । योगिज्ञानेनैव जाग्रज्ज्ञानानां बाध्यत्वात् अबाध्यत्वहेतुरसिद्ध इति । ननु कतिपयानां योगिनां ज्ञाने[3] कथं सर्वलोकसिद्धस्य जाग्रज्ज्ञानस्य

---

१. 'स्मदादीनां' —क,

२. येन प्रतियोगित्वं न स्यादिति, येन स्वप्नप्रतियोगिता न स्यादिति वा क्वचित् पाठः ।

३. ज्ञानेन इति पा० ।

* सत्यं प्रतियोगिसापेक्षं मिथ्यात्वं, जाग्रद्बुद्धीनामपि भावनाबलनिष्पन्नप्रतियोगिज्ञानापेक्षया मिथ्यात्वं भविष्यति । सत्या हि सा विगलितनिखिलकल्मषस्य स्फुटा विकल्पप्रकाशा जायते । अतो युक्तं तदपेक्षया सांसारिकज्ञानानां मिथ्यात्वम् ।

श्लो०वा०—त्वदुक्तिविपरीता वा बाधबुद्धिर्भविष्यति ।
* ईदृक्त्वे योगिबुद्धीनां दृष्टान्तो न तवाऽस्ति च[1] ॥९५॥
दृष्टान्तस्त्वस्मदादीनां यो गृहीतः स विद्यते ।
अथ स्तम्भादिबुद्धीनां वदेत् सप्रतियोगिताम् ॥९६॥
बाध्यत्वं चाऽपि[2] बुद्धित्वान्मृगतृष्णादिबुद्धिवत् ।‡
इष्टं सप्रतियोगित्वं मृगतृष्णादिबुद्धिभिः ॥९७॥
तदात्मना च[3] बाध्यत्वं ग्राह्याऽन्तरतयाऽपि च ।
बाधकैश्चाप्यनेकान्तस्तदन्यत्वे च पूर्ववत् ॥९८॥
'मिथ्याधीप्रतियोगित्वं स्वप्नादाविव ते भवेत् ।
रागादिक्षययोगित्वनिमित्ताऽधिगतिस्तथा ॥९९॥

न्या०र०—बाध्यत्वम्, अत आह प्राप्तानामिति । परिहरति इहेति । नास्त्यत्र प्रमाणमित्यर्थः । तदभावेऽपि चेदुच्येत, तदस्माकमपि शक्यं, स्वाच्छन्द्यनियामकाऽभावादित्याह योगिनामिति । प्रतियोगिनी शुक्तिरियमिति, विपरीता नेदं रजतमिति, तदनयोरन्यतर[4]-विधोपनिपातिनी त्वदुक्त[5] बाह्याऽपह्नवबाधिकाऽस्मद्योगिनामस्ति बुद्धिरिति ।

यद्वा, नाऽवयोस्तुल्यत्वं भवति, योगिनां बाधकज्ञानसद्भावे तव दृष्टान्तो नास्ति, मम तु बाह्यत्वे[6] योगिनां रथ्यापुरुषस्यैव दृष्टान्तस्य लाभात्सम्भवत्यनुमानमित्याह ईदृक्त्वे इति । शङ्कते अथेति । ममाऽप्यस्त्येवाऽनुमानमिति । निराकरोति [7]इष्टमिति । सत्यबुद्धीनामपि मिथ्याबुद्धिभिः सप्रतियोगित्वमात्रमस्त्येव, मिथ्याज्ञानतद्ग्राह्ययोश्च बाधे सम्यग्ज्ञानतद्ग्राह्ययोरपि ज्ञानत्वेन ग्राह्यत्वेन च ताभ्यामभेदात्तेनात्मना ऽस्त्येव बाध्यत्वमिति । बाधकाभिमतैश्च योगिज्ञानैरनैकान्तिको हेतुरित्याह बाधकैरिति । तदन्यविशेषणे च पूर्ववद्दोष इत्याह तदन्यत्वे इति ॥८४॥९८॥

विशेषविरुद्धश्चाऽयं हेतुः, तद्धर्मविशेषविपर्ययसाधनत्वादित्याह मिथ्याधीति

---

१. 'हि'—क, २. 'बाह्यत्वं'—क, ख, ३. 'तद्रूपेण च'—क, ख,
४. अन्यतरविधेयनिपातिनीति पा० । ५. त्वदुक्तबाधिकेति पा० ।
६. बाह्यग्राह्यत्वे इति पा० । ७. दृष्टमितीति पा० ।
* भवतिचात्रप्रयोगः—योगिनः, त्वदुक्तविपरीतबुद्धिमन्तः, बोद्धृत्वात्, अद्यतनबोद्धृवत् इति ।
‡ एवं हि अत्रानुमीयते—जाग्रद्बुद्धयः, सप्रतियोगिन्यो बाध्या वा, बुद्धित्वात्, मृगतृष्णादिबुद्धिवत् ।

श्लो०वा०—यावान्विशेष इष्टश्चेत् सर्वाऽ[1]भावाद्विरुद्धता ।*
(ग)महाजनस्य वा बाधादिदानीं बाधबुद्धिवत् ॥१००॥
वाच्योऽनुमानबाधो वा यदि वा प्रतिसाधनम् ।
पूर्वसाधनदोषाश्च सन्धेयास्तस्य चाऽधुना ॥१०१॥
साध्याऽभेदादवाच्यत्वाद्धेतोर्नोभयसिद्धता ।
प्रत्ययत्वं च सामान्यं भिन्नाऽभिन्नं न विद्यते ॥१०२॥
भवतोऽत्यन्तभिन्नं च मत्पक्षेऽपि[2] कथञ्चन ।

न्या०र०—सार्द्धेन । स्वप्नबुद्धे[3]र्मिथ्याभूतया रागद्वेषयुक्तया योगिजाग्रद्बुद्धया सप्रतियोगित्वं दृष्टमिति जाग्रद्बुद्धीनामपि तादृश्यैव बुद्धया सप्रतियोगित्वं साधनीय[4]मिति "प्रतियोगिनी योगिनामधिगतिरमिथ्या, रागादिक्षयनिमित्ता, योगित्वनिमित्ता" इति यावान्विशेषो दृष्टस्तस्य सर्वस्य बाधा[5]द्विशेषविरुद्धो हेतुरिति ।

सप्रतिसाधनश्चाऽयं हेतुःप्रतिज्ञा वाऽनुमानविरुद्धेत्याह महाजनस्येति निरालम्बनाऽनुमानदोषाश्च सर्वेऽस्याऽनुसंधेया इत्याह पूर्वेति ।

तस्य पूर्वं धर्मधर्मिविकल्पेन दूषणमुक्तम्, अधुना दोषान्तरमुच्यत इत्याह तस्य चेति ॥९९॥१०१॥

कथमुच्यत इत्याह साध्याऽभेदादिति । यदि जाग्रत्प्रत्ययत्वं हेतुः, ततस्तस्य साध्यधर्मिणोऽनतिरेकात्स्वप्नज्ञानेष्वननुवृत्तेर्न निरालम्बनत्वेनाऽन्वयः शक्यते दर्शयितुं, स्वप्नप्रत्ययत्वं च जाग्रद्बुद्धिष्वभावादसिद्धत्वादेवाऽवाच्यम्, अनुगतं तु प्रत्ययत्वं सामान्यमुभयसिद्धं नास्तीति । सामान्याऽसिद्धिं प्रपञ्चयति सामान्यमिति । भिन्नाऽभिन्नं भवतोऽसिद्धम्, अत्यन्तं भिन्नं तव मम चोभयोरसिद्धमिति ।

---

१. सर्वबाधाद्—क, 'सर्वबाधाविरुद्धता'—ख, २. 'तु'—क,
३. स्वप्नबुद्धिर्हि इति पा० । ४. साधयन्नपि हेतुर्योगिनामधिगतिरिति पा० ।
५. बाधो नेति इति पा० ।
* अयं च धर्मविशेषबाधाद् विरोधोऽनुसन्धातव्यः ।
(ग) दूषणान्तरमाह—महाजनस्येति । अयमभिप्रायः—शक्यते हि प्रतिसाधनं वक्तुं, जाग्रद्बुद्धयः सत्याः इदानीं महाजनस्य अबाधात् पराभिमतयोगिबाधबुद्धिवत् । इदं च यदि बाध्यत्वानुमानेन तुल्यबलं ततः सप्रतिसाधनम् । अथ तु प्रसिद्धान्वयवत्वेन बलवत् ततोऽनुमानबाध इति । सर्वथा तावत् परसाधनं प्रतिबध्नातीत्यत्र तात्पर्यम् । योगिज्ञानेन बाधाद्धेतोरसिद्धिर्माभूदिति इदानीमित्याह । योगिनां बाधबुद्धेरप्यनागताया महाजनेनाबाधाद् व्याप्तिसिद्धिरिति ।

श्लो०वा०—सारूप्याऽन्यनिवृत्ती च नेत्येतत् सा¹धयिष्यते ॥१०३॥
तस्माद्धेतुर्न सामान्यमस्ति सिद्धं द्वयोरपि ।
ॐ विशेषयोश्च हेतुत्वं पक्षतत्तुल्यसंस्थयोः ॥१०४॥
न स्यादन्वयहीनत्वादतद्धर्मतयाऽपि च ।
न चाऽर्थहीना तद्बुद्धिर्हेतुत्वेन ²भविष्यति ॥१०५॥
आश्रयासिद्धिता चोक्ता विशेष्यस्याऽप्रसिद्धितः ।
तथा हेतोर्विरुद्धत्वं दृष्टान्ते साध्यहीनता ॥१०६॥
विशेषणाऽप्रसिद्धत्व³ विकल्पेनैव बोधिते ।
स्वप्नादिप्रत्यये बाह्यं सर्वथा न हि नेष्यते ॥१०७॥
सर्वत्रालम्बनं बाह्यं देशकालाऽन्यथात्मकम् ।
जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपि वा ॥१०८॥

न्या०र०—ननु जातिरूपं सामान्यमस्माभिर्नेष्यते, सादृश्याऽन्यनिवृत्तिरूपं तु किं न भवतीत्यत आह सारू³प्येति । जात्यभावे सादृश्याऽभावादुभयोरनुपपत्तिर्वक्ष्यत इति ॥ १०२॥१०३॥

उपसंहरति तस्मादिति । विशेषयोस्तु जाग्रत्प्रत्ययत्वस्वप्नप्रत्ययत्वयोः पक्षसपक्षगतयोरन्वयहीनत्वादपक्षधर्मत्वाच्चाऽहेतुत्वं पूर्वसंक्षिप्तं प्रपञ्चयति विशेषयोरिति । ननु प्रत्ययत्वादित्युक्ते अर्थशून्याऽपि तावदुत्पद्यते बुद्धिः, सैव हेतुर्भवत्वत आह न चेति । न ह्यर्थशून्या लिङ्गबुद्धिर्लिङ्गिज्ञानाय कल्पत इति । विशेष्याऽसिद्धिकथनेनैव हेतोराश्रयाऽसिद्धिरुक्तैवेत्याह आश्रयेति ।

यच्च पूर्वं विशेषणाऽसिद्धचर्थेन विकल्पेन सर्वथा निरालम्बनत्वं क्व चिदप्यप्रसिद्धमित्युक्तं, तेनैव स्वप्नप्रत्ययस्याऽपि तदभावात्साध्यवैकल्यं, तद्वदेव जाग्रद्धियामपि सर्वथा निरालम्बनत्वाऽभावसाधनाद्धेतोश्च विरुद्धत्वं युक्तमेवेत्याह तथेति । साध्यवैकल्यसाधनादेव हेतोर्विरुद्धता, विशेषणस्य चाऽप्रसिद्धिः साधिता भवतीति मत्वा साध्यवैकल्यमेव प्रपञ्चयति स्वप्नेति ॥१०४॥१०७॥

---

१. 'गमयिष्यते'—क, २. 'द्व्यर्थं'—क, ग, ३. सादृश्येतीति पा० ।

ॐ उपसंहरति—तस्मादिति । यदि तु मा भूत् सामान्यं, विशेष एव हेतुरुच्यते, तदयुक्तम् । अपक्षधर्मत्वात् अन्वयाभावाच्चेत्याह—विशेषयोरिति । द्वावत्र विशेषौ परिप्लवेते पक्षस्तत्तुल्यापरनामा सपक्षश्च । पूर्वत्र हेतोरन्वयाभावः । परत्रापक्षधर्मत्वम् । पूर्वंतु विशेषस्यैव हेतुत्वे साध्याभेदादवाच्यत्वमुक्तम् । इदानीं विकल्प्य दूषणान्तराभिधानमिति ।

श्लो०वा०—तद्देशो वाऽन्यदेशो वा स्वप्नज्ञानस्य गोचरः ।
*'अलातचक्रे ऽलातं स्याच्छीघ्रभ्रमणसंस्कृतम् ॥१०९॥
गन्धर्वनगरेऽभ्राणि पूर्वदृष्टं[1] गृहादि च[2] ।
पूर्वाऽनुभूततोयं च रश्मितप्तोपरं तथा ॥११०॥
मृगतोयस्य विज्ञाने कारणत्वेन[3] कल्प्यते ।
द्रव्यान्तरे विषाणं च शशस्यात्मा च कारणम् ॥१११॥
शशशृङ्गधियो' मौण्ड्यं निषेधे शिरसोऽस्य च ।
वस्त्वन्तरै[4]रसंसृष्टः पदार्थः शून्यताधियः ॥११२॥
कारणत्वं पदार्थानामसद्वाक्यार्थकल्पने ।

न्या०र०—किमिति नेष्यते, अत आह सर्वत्रेति । बाह्यमेव देशान्तरे कालान्तरे वाऽनुभूतमेव स्वप्ने स्मर्यमाणं दोषवशात्संनिहितदेशकालवत्तयाऽवगम्यते, अतोऽत्रापि न बाह्याऽभाव इति । नन्वननुभूतमपि क्व चित्स्वप्नेऽवगम्यते, अत आह जन्मनीति । अनन्तरदिवसाऽनुभूतस्य स्वप्ने वर्तमानवदवगमात् स्मृतिरेव तावत् स्वप्नज्ञानमिति निश्चीयते । अन्यत्रापि स्मृतित्वमेव युक्तम् । ततश्चाऽस्मिन् जन्मनि अननुभूतस्यापि स्वप्ने दृश्यमानस्य जन्मान्तरादावनुभवः कल्प्यत इति ।

एवं स्वप्नप्रत्ययस्य बाह्यालम्बनत्वं दर्शयित्वा जाग्रद्विभ्रमाणां बाह्यालम्बनत्वं दर्शयति अलातेति धियोऽन्तेन । अन्यत्र विद्यमानेनैव चक्रादिरूपेण विद्यमानमेवाऽलातादिकं शीघ्रभ्रमणादिदोषवशात्संसृष्टमवगम्यत इति । ननु शशविषाणं नास्तीति बुद्धेरभावाऽवभासिन्याः किं बाह्यमालम्बनं ? न तावदभावः, तस्य स्वातन्त्र्याऽभावात्, भावान्तराश्रितो हि सर्वोऽभावः, न च शशविषाणं नास्तीत्यत्र क्व चिद्देशे काले वाऽभावोऽवगम्यते, अतो ऽवश्यमत्र ज्ञानरूपस्यैव भावस्यालम्बनत्वमङ्गीकर्त्तव्यमत आह मौण्ड्यमिति । अस्य शशशृङ्गस्य निषेधे शृङ्गाऽभावज्ञाने शिरसो मौण्ड्यमालम्बनं, शिरोवर्तिन एवाऽवयवाः शृङ्गरूपेण परिणताः शृङ्गाऽभावात्मना ज्ञायन्ते, ततस्तदाश्रयोऽभावो न स्वतन्त्र इति । अतोऽत्रापि बाह्याऽभावालम्बनत्वान्न स्वांशालम्बनत्वमिति । चैत्रशून्यं गृहमिति शून्यबुद्धेस्तर्हि किमालम्बनमत आह वस्त्वन्तरैरिति ॥१०८।११२॥

---

१. 'पूर्वज्ञातं'—क,　　　　२. 'वा'—क,
३. 'करणत्वेन'—क,　　　　४. 'रैक'—क, ख,

* अन्तःकरणजन्मनः स्वप्नविभ्रमस्यालम्बनमुक्तम् । बाह्येन्द्रियजन्मनां विभ्रमाणामिदानीं बाह्यमालम्बनं दर्शयति—अलातेति धियोऽन्तेन ।

श्लो०वा०—अत्यन्ताऽननुभूतोऽपि बुद्ध्या योऽर्थः प्रकल्प्यते[1] ॥११३॥
तस्योत्पत्तौ कथञ्चित्स्युः पृथिव्यादीनि कारणम् ।
*एष प्रत्यक्षधर्मश्च वर्तमानार्थतैव या ॥११४॥
सन्निकृष्टार्थवृत्तिश्च न तु ज्ञानान्तरेष्वियम् ।
'कथमुत्पादयेज्ज्ञानं तत्राऽसंश्चेत्', कुतो न्वियम् ॥११५॥
अर्थस्याऽविद्यमानस्य विज्ञानोत्पत्त्यशक्तता ।
बाह्यालम्बनतायां नौ विवादोऽर्थस्य संनिधिः ॥११६॥
यदि नास्ति, किमेवं स्यादस्मत्पक्षनिवर्तनम् ।
'तस्माद्यदन्यथासन्तमन्यथा प्रतिपद्यते ॥११७॥

न्या०र०—अङ्गुल्यग्रादिवाक्यार्थज्ञानेऽप्यङ्गुल्यग्रादिपदार्था विद्यमाना एव पदसंनिधिदोषवशात्परस्परसंसृष्टतयाऽवगम्यमाना आलम्बनमित्याह कारणत्वमिति ।

यत्तर्ह्यत्यन्ताऽविद्यमानाऽननुभूतप्रकृत्याद्यालम्बनं सांख्यादीनां ज्ञानं, तस्याऽनालम्बनत्वमेव स्याद्, बाह्याऽभावादत आह अत्यन्तेति । पृथिव्यादिस्थूलप्रपञ्चस्य हेतुभूता सूक्ष्माऽवस्थैव तैः प्रकृतिरुच्येत, तेन तदवस्थाविशिष्टाः पृथिव्यादय एतद्बुद्धेरालम्बनम्, सूक्ष्मत्वेन तु परमाणूनजानन्तस्तद्व्यतिरेकेण सूक्ष्मत्वात्तत्रैव प्रकृत्यादिशब्दमुपचरन्तीति । ननु देशान्तरे कालान्तरे वा विद्यमानमपि बाह्यमत्र तावन्न विद्यते, अतः कथमालम्बनत्वमत आह एष इति ।

संनिहितवर्त्तमानविषयत्वनियमो हि प्रत्यक्षस्य धर्मः, न त्वाभासानामिति ।

शङ्कते कथमिति चेदन्तेन । उत्पादकस्यैवालम्बनत्वं तच्चाऽसतः संभवतीति । परिहरति कुत इति । न तावदुत्पादकत्वमेवालम्बनत्वम्, यद्यपि तथा स्यात्तथाप्यालम्बनहेतुत्वमसतोऽपि ज्ञानं प्रति सम्भवतीति दर्शनबलादङ्गीक्रियत इति । नन्वेवमपि सन्निहितं बाह्यमालम्बनभूतं नास्त्येव, सत्यम्, स त्वदोषः, असन्निहितस्यापि बाह्यस्यालम्बनत्वात्, तन्मात्रविषयत्वाच्चऽऽवयोर्विवादस्येत्याह बाह्येति ।

किमिदानीं निरालम्बनं ज्ञानं नास्त्येव, तथा चेल्लोकविरुद्धः स्यादत आह तस्मादिति पादत्रयेण । यस्मादेवं सर्वत्र बाह्यमस्ति, तस्माद्यदेव विज्ञानम्, अन्यथा = शुक्तिकादिरूपेण सन्तमर्थमन्यथा = रजतादिरूपेण गृह्णाति, तदेव निरालम्बनं ज्ञानं, न तु यदात्मालम्बनमिति । यर्त्तहि इह घटो नास्ति, इदं रजतं न भवतीत्यादिकमभावज्ञानं, तस्य किमालम्बनं, न ह्यभावाख्यमस्तीत्यत आह अभावेति । यदेवाऽन्यथासन्तमन्यथा

---

१. 'प्रकाश्यते'—क,

* नहि अवर्तमानघटविषयं वर्तमानघटज्ञानमुपलब्धम् अत आह—एष इति ।

श्लो०वा०—तन्निरालम्बनं ज्ञान'मभावालम्बनं च तत् ।
भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ॥११८॥
भवतां द्वयमप्येतद्दुर्निरूपं सहेतुकम् ।
*प्रतिज्ञादोषवच्चापि योज्या हेतोर्विरुद्धता ॥११९॥

न्या०र०—प्रतिपद्यते तन्निरालम्बनं तदेव अभावालम्बनं च । एतदुक्तं भवति, सर्वं हि वस्तु सदसदात्मकं, तत्र शुक्तिकारजतादिज्ञानं शुक्तिकाख्यं भावं शुक्तिकारूपेण सद्रूपं भावान्तरस्य रजतस्य यत्सद्रूपं रजतरूपं तेन रूपेण गृह्णद् भ्रान्तं भवति । नेदं रजतमिति त्वभावज्ञानं शुक्तिकारूपेण सन्तमेव भावं रजतस्य यदसद्रूपं तेनात्मना गृह्णदभावालम्बनमभ्रान्तं भवति । तेन भ्रान्तिज्ञानमभावज्ञानं चोभयमन्यथासन्तमर्थमन्यथारूपेण प्रतिपद्यते । तत्र भ्रान्तिरन्यस्य सद्रूपेणाऽन्यत्प्रतिपद्यते, अभावज्ञानं त्वन्यस्याऽसद्रूपेणाऽन्यत्प्रतिपद्यत इत्येव विशेष इति ।

नन्वभावमात्रमेवाऽभावज्ञानस्यालम्बनं न भावान्तरमत आह—भावान्तरमिति । रजतादेर्भावस्य यदभावाख्यं रूपं तन्न स्वतन्त्रमनिरूपणात्, किं तु भावान्तरमेव तत्, तद्धर्म इत्यर्थः । तेनाऽभावज्ञानस्यापि शुक्तिकादिभावान्तरं बाह्यमेवालम्बनमिति न स्वांशालम्बनत्वमिति । यद्वा 'अभावालम्बनं च त'दित्यत्र तच्छब्देनैतदेव परामृश्यते, अभावालम्बनमपि ज्ञानं तादृशमेव बाह्यभावालम्बनमेवेति । नन्वभावावभासिनः कथं भावालम्बनत्वमित्यत उक्तं भावान्तरमिति ॥११३॥११८॥

सर्वमिथ्यात्ववादिनां तु निरालम्बनत्वमभावालम्बनत्वं च द्वयमपि दुर्निरूपं हेत्वभावाद्, बाधकसत्यत्वे हि बाध्यमिथ्यात्वं, तस्यापि मिथ्यात्वे कुतस्तद्बाध्यस्य मिथ्यात्वं, ज्ञानरूपस्य च स्वरूपमेवावलम्बमानस्य कथमभावालम्बनत्वं, तदिदमाह भवतामिति ।

हेतोरिदानीं पूर्वोक्तादन्येन कारणेन विरुद्धतामाह प्रतिज्ञादोषवदिति । यथा ह्यप्रसिद्धविशेष्यत्वादिः प्रतिज्ञादोषो दर्शितस्तथैव हेतोरपि विरुद्धता दर्शयितव्या । हेतुर्हि सर्वप्रत्ययानां मिथ्यात्वं साधयन् धर्मधर्म्मितद्विशेषग्राहिप्रत्ययमिथ्यात्वसाधनेन तेषां विपर्ययं साधयन् विरुद्धः स्यादिति । दृष्टान्तस्यापि न केवलं साध्यविकलत्वं, किं तु सर्वे एव साध्यसाधनोभयव्याप्तिशून्यत्वादिदोषा वक्तव्या इत्याह दृष्टान्तेति । कथमित्याह

---

* इदानीं विरुद्धो हेतुरिति दूषणान्तरमाह—प्रतिज्ञेति । यथा धर्मधर्मिबोधकप्रत्ययनिरालम्बनत्वान्न धर्मो धर्मी नोभयमिति प्रतिज्ञादिदोषोऽभिहितः, तथा समस्तव्यस्तयो धर्मधर्मिणोर्व्याप्तिबलेन स्वरूपस्वविशेषौ विघ्नन् विरुद्धोऽपि प्रत्ययत्वं हेतुरिति ।

श्लो०वा०--समस्तव्यस्तधर्मादिस्व[1]रूपादिविपर्ययात् ।

दृष्टान्तदोषाः सर्वे च योज्या न ह्येकवस्तुनि ॥१२०॥

तत्र साध्यांशहेत्वंशव्याप्तधर्मादि[2] संभवः ।

*केचिद्वैधर्म्यदृष्टान्तो नास्तीत्यप्यनुयुञ्जते ॥१२१॥

तदभावादवृत्तेश्च नास्त्यत्राऽवसरस्तव ।

विधिरूपप्रतिज्ञायामेतद्वक्तुं हि शक्यते ॥१२२॥

तत्राऽवस्तुविपक्षे ऽपि प्रयोगस्य हि सम्भवः ।

न्या०र०--न हीति । न हि ज्ञानस्वलक्षणव्यतिरेकेण प्रत्ययत्वं, निरालम्बनत्वं, तयोश्च धर्मरूपा व्याप्तिरस्तीति ।

केचित्तु वैधर्म्योदाहरणमपि साध्यस्यावश्यंभावीति मन्वानास्तदभावाद् न्यूनं निरालम्बनसाधनमित्याहुः, तदुपन्यस्यति केचिदिति ॥११९॥१२१॥

ननु विपक्षाऽभावादेव हेतोरवृत्तिसिद्धेर्न वैधर्म्येण प्रयोजनमित्युक्तं, परैरप्युक्तं "तदभावात्तत्रावृत्तेर्नायं दोष" इति, तत्राह तदभावादिति । कथं नास्तीत्यत आह विधिरूपेति । वस्तुरूपे साध्ये सत्यवस्तुनो विपक्षत्वादवस्तुनि च हेतोर्व्यतिरेकसिद्धेर्वैधर्म्यवचनं निष्फलं स्यात्, अवस्तुरूपे तु निरालम्बनत्वे साध्ये वस्तुरूपसालम्बनत्वस्य विपक्षत्वात्तत्र हेतोर्वृत्तिसंभवात् तद्व्यतिरेको वक्तव्यः[3] एतदवचने वैकल्य[4] मेवेति ॥१२२॥

किं च, विधिरूपप्रतिज्ञायामपि वैधर्म्यप्रयोजनाऽभावमात्रं, शक्यं तु तत्राप्यवस्तुन्यपि विपक्षे वैधर्म्यं प्रयोक्तुमित्याह तत्रेति । प्रयोगमेव दर्शयति यस्मिन्निति । अनित्यः शब्द इति प्रतिज्ञायामिदं वैधर्म्यम्, अनित्यत्वं च न नित्यात्वाऽभावमात्रं, किंतु कादाचित्कत्वं विधिरूपमेवेति । प्रकृते तु निरालम्बनसाधने वस्तुनि विपक्षे सुतरां वैधर्म्यं वक्तव्यमेवेत्याह अत्र त्विति वाच्योऽन्तेन । यश्चापि वैयात्यातप्रतिषेधद्वयाश्रयणेन वैधर्म्यं वदेत् यन्निरालम्बनं न भवति तत्प्रत्ययोऽपि न भवतीति, तेन प्रतिषेधप्रतिषेधात् सालम्बनविधिरेव दर्शितो भवति । न च प्रत्ययातिरिक्ते वस्तुनि कस्मिंश्चिदसति तद्विधिः शक्यो दर्शयितुम्, अतो न्यूनमेवेदं साधनमित्याह यश्चापीति केन चिदन्तेन ।

---

१. स्व-स्वरूपाविप'—क, २. 'व्यापिध'—क,

३. वक्तव्यएवेति तद्वचने इति पा० । ४. वैक्लव्यमिति पा० ।

* वैधर्म्यदृष्टान्तन्यूनश्चायं प्रयोग इति केचिदनुयुञ्जत इत्याह—केचिदिति । द्वेधा हि दृष्टान्तवचनसमयः । केचिद् व्याप्त्या साधर्म्य उक्तेऽपि वैधर्म्यवचनं कार्यमिति मन्यन्ते । तदिद मेकेषां मतेन परिचोदितमिति केचिदित्युक्तमिति ।

श्लो०वा०—यस्मिन्ननित्यता नास्ति कार्यता ऽपि न विद्यते ॥१२३॥
तस्मिन् यथा खपुष्पादाविति शक्यं हि भाषितुम् ।
*अत्र त्ववस्तुसाध्यत्वं[1] वस्तुनश्च विपक्षता ॥१२४॥
तेन स्याद्व्यतिरेकोऽस्य वाच्यो, 'यश्चाऽपि दर्शयेत् ।
प्रतिषेधद्वयात्तेन विधिरेव प्रदर्शितः ॥१२५॥
न च शक्यो विधिर्वक्तुं वस्तुन्यसति केन चित्' ।
एवं स्थिते च सर्वज्ञनिषेधादावियं गतिः ॥१२६॥
प्रत्यक्षादेरसामर्थ्यं तदीयस्याऽस्मदादिवत् ।
वैधर्म्याऽसंभवेऽप्येतदन्ये त्वाहुरदूषणम् ॥१२७॥
विनैव तत्प्रयोगेण हेतुरैकान्तिको यतः ।
‡सर्वथा सदुपायानां वादमार्गः[2] प्रवर्तते ॥१२८॥

व्या०र०—नन्वेवं सर्वज्ञाऽभावसाधनेऽपि वस्तुस्वरूपस्य सर्वज्ञस्य विपक्षत्वात्तद्व्यतिरेको हेतोः पुरुषत्वादेर्वाच्यः, यः सर्वज्ञः स पुरुषो ऽपि न भवतीति, न चैवं शक्यं, सर्वज्ञस्य क्वचिदप्यभावादत आह एवमिति । बुद्धप्रत्यक्षमनागतादिविषयं न भवति, प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदिति । यत्त्वनागतादिविषयं तत्प्रत्यक्षमेव न भवति यथा शब्द इति । अन्ये तु वैधर्म्याऽवचनेऽपि निरालम्बनसाधनमविद्यमानदूषणमित्याहुरित्याह वैधर्म्येति ॥१२३॥१२७॥

कथमदूषणमत आह विनैवेति । किं च, विद्यमानोपायानामेव वादादिषु तिसृष्वपि कथास्वधिकारः शून्यवादी तु सर्वोपायरहितः कथमिहाऽधिक्रियेत, यो हि जात्यैवाऽन्धो

---

१. 'साध्यत्वाद'—क, ख, २. 'सार्थः'—क,

* अत्र प्रकृतसाधने वस्तुन आलम्बनाभावस्य साध्यत्वं वस्तुनश्च सालम्बनस्य विपक्षता । वस्तुनि च हेतुवृत्तेः सम्भवाद् विपक्षाद् व्यतिरेकः प्रयोजनवत्त्वाद् वाच्य एवेत्याह अत्रत्विति वाच्योन्तेन ।

‡ येषां हि साध्यसिद्धौ उपायान्तराणि प्रतिज्ञाहेतुदृष्टान्ताः सन्ति, ते वादमार्गेषु अधिकृताः । सौगतास्तु न कथात्रये । अतो न नाम वैधर्म्यवचनन्यूनता दूषणम् । अनुपायस्य हि कथं साध्यसिद्धिर्भविष्यति । वयं हि साधर्म्यात् साध्यसिद्धिं मन्वाना वैधर्म्यं नाद्रियामहे । सर्वापलापवादी तु वादे नाधिकृत एव । प्रदर्शनमात्रं हि वादग्रहणम् । तिस्रो हि कथा भवन्ति । वादो जल्पो वितण्डा चेति । शिष्यविषयो हि वादः । व्युत्थितं तु शिष्यमाणमर्थं प्रतिपादयितुं जल्पवितण्डे । तयोः स्वपक्षस्थापनाहीनं वचनं वितण्डा । तदत्र त्रयेऽपि शून्यवादिनोऽनधिकृता इति ।

श्लो०वा०—अधिकारो ऽनुपायत्वान्न वादे शून्यवादिनः ।
ननु सर्वं भवत्सिद्धं मयेदं साधनं कृतम् ॥१२९॥
किमर्थं मदसिद्धया त्वं विकल्प्याऽत्राऽऽत्थ[1] दूषणम् ।
*विप्रलिप्सुरिवाऽऽहैवं किमर्थं न्यायविद्भवान् ॥१३०॥
नाऽश्रौषीः साधनत्वं किं प्रसिद्धस्य द्वयोरपि ।
यो ऽपि तावत्पराऽसिद्धः स्वयं सिद्धोऽभिधीयते ॥१३१॥
भवेत्तत्र प्रतीकारः स्वतो ऽसिद्धे तु का क्रिया ।
तं साधयन् विरुन्ध्याद्धि पूर्वाऽभ्युपगतं नरः ॥१३२॥
असाधिते तु साध्याऽर्थो न तेन प्रतिपद्यते ।
☙पराऽसिद्धो न पर्याप्तः परेषां प्रतिपत्तये ॥१३३॥
तेनाऽसाधनता युक्ता, स्वतो ऽसिद्धे तु किङ्कृता ।
●द्वयोः सिद्धस्य हेतुत्वं नाऽदृष्टार्थोपदिश्यते ॥१३४॥

न्या०र०—बधिरो मूकश्च पङ्गुश्च भवति स कथं ज्योतिष्टोमेऽधिक्रियेतेत्याह सर्वथेति । चोदयति नन्विति । यदिदं मया साधनमुक्तं, तत्सर्वं भवतस्तावत्सिद्धं तत्किमर्थं मदसिद्धया बहुभिर्विकल्पैर्दूषणमुच्यत इति ।

सिद्धान्तवादी चैवंवादिनमुपालभते विप्रलिप्सुरिति ॥१२९॥१३०॥

कथं विप्रलिप्सा, अत आह नाऽश्रौषीरिति । भवद्वृद्धैरेव हि दिङ्नागाचार्यैर्वादिप्रतिवादिनिश्चितो हेतुः स साधनमित्युक्तं, तच्छ्रुत्वा कथमविप्रलिप्सुरेवं वदेदिति । किं च, प्रतिवाद्यसिद्धस्य वादिना साध्यमानस्य स्यादपि साधनता, वाद्यसिद्धस्य तु प्रतीकाराऽभावात्कथं स्यादित्याह यो ऽपीति । प्रतीकाराऽसम्भवमेव दर्शयति तं साधयन्निति ।

---

१. 'तद'—क, 'तदसिद्धयर्थं'—ख, २. 'ऽथ'—ख,

* मीमांसकः प्रक्षीणनिखिलकुहेतुजालमेवं वादिनमपहसति—विप्रलिप्सुरिति । न्यायवित् किलासि । किमस्मान् विप्रलब्धुमेवंविधं भाषसे । किं खलु कथासु अपि उभयसिद्धस्यसाधनत्वमिति ना ऽश्रौषीरिति ।

☙ परप्रतिपादनार्थं हि साधनवचनम् । न चासौ परो ऽसिद्धेन प्रतिपादयितुं शक्यते । अतः परासिद्धो न साधनमिति युक्तम् ! स्वाऽसिद्धस्य तु किंकृतमसाधनत्वमिति न विद्मः इति ।

● ननु उभयसिद्धो हेतुरिति भवद्वृद्धैरपि भाषितं तत् परित्यक्तम्, अत आह—द्वयोरिति । नायमदृष्टाय वृद्धोपदेशो दृष्टानुसारेण परासिद्धप्रतिषेधपरत्वमेवास्य निश्चीयते इत्याह—प्रत्येष्यन्तीति ।

श्लो०वा०—प्रत्येष्यन्ति स्वसिद्धेन साधनेन स्वयं यतः ।
वदेत् कथमसिद्धं चेत्, इत्यनेनापि किं तव ॥१३५॥
गृहीतमगृहीतं वा साध्यं वा साधनो ऽपि वा ।
मयोच्यते चेत्त्वत्सिद्धं[2] किं त्वं न प्रतिपद्यसे ॥१३६॥
यत्र स्यात् पुरुषाऽधीना बुद्धिस्तत्रेदमुच्यते ।
कुतो ऽस्य पूर्वविज्ञानमित्यत्रैतन्न युज्यते ॥१३७॥
यदि चैवं भवेदत्र प्रतिज्ञामात्रएव हि ।
मद्दोषाऽज्ञानमात्रेण प्रतिपत्तिर्भवेत्तव ॥१३८॥
यतस्तु साधनाऽपेक्षा तेनाऽस्यैव प्रमाणता ।
तत्स्मृत्युत्पत्तिमात्रे तु वाक्यव्यापार इष्यते ॥१३९॥
तस्माद्यथैव साध्यांशव्याप्तहेतुनिदर्शनात् ।
साध्यं गृह्णन्न वक्तारमपेक्षेत तथा भवान् ॥१४०॥
*यच्चापि भवतो ज्ञानं प्रत्यक्षादि[3] किमत्र ते ।

न्या०र०—पुनश्चोदयति पराऽसिद्ध इति । परप्रतिपत्त्यर्थं हि साधनं, तदस्य पराऽसिद्धिर्दोषो, न स्वाऽसिद्धिरिति । दिङ्नागवचनमपि न्यायमूलत्वात्प्रतिवादिसिद्धिपरमेव व्याख्येयमित्याह द्वयोरिति । शङ्कते वदेदिति ।

निराकरोति इतीति । एतदेव विवृणोति गृहीतमिति ॥१३१॥१३६॥

ननु पौरुषं साधनवाक्यं कथं वक्तुरप्रतिपन्नमेवाऽर्थं साधयति, अत आह यत्रेति । यत्र हि पुंवाक्यादर्थबुद्धिः तत्रैव वक्तुः पूर्वज्ञानहे[4]त्वन्वेषणं न त्वत्रेति ॥१३७॥

भवत्वत्रापि वाक्याऽधीनैव बुद्धिरिति चेत्तत्राह यदि चेति ॥१३८॥

यतस्तु प्रतिज्ञा[5]अव्यतिरेकिणं हेतुमपेक्षते, अतो ऽस्यैवात्र प्रमाणता न वाक्यस्येत्याह यतस्त्विति । कथं तर्हि वाक्यमत आह तदिति । यस्मादेव साधनस्य साध्यनियमस्मरणमात्रोपयोगि वाक्यं, तस्माद्यथैव स्वयमेव नियतहेतुदर्शनेन साध्यमनुमिमानो न वक्तृप्रामाण्यमपेक्षते, तथा ऽत्रापि नापेक्षितव्यमित्याह तस्मादिति ॥१३९॥१४०॥

---

१. 'साधनाऽपि'—ग, २. 'त्वसिद्धं'—ग,
३. 'दिः'—ग, 'देः'—क, ४. ज्ञानमूलान्वेषणमिति पा० ।
५. प्रतिज्ञा व्यतिरेके सा इति पा० । प्रतिज्ञाव्यतिरेकेणेति क्वचित् ।
* यदि तु सर्वप्रमाणेष्वेव पुरुषापेक्षा इष्यते सा तर्हि प्रत्यक्षेण अर्थमुपलभमानस्य प्राप्नोति । नच मत्प्रसिद्धा युक्तिः साध्यं वा यत् प्रत्यक्षेण परिच्छिद्यते । तत्रास्ति. यथात्र साध्यस्य निरालम्बनत्वस्य प्रत्ययत्वस्य हेतोः सिद्धिमिच्छसीत्याह—यच्चेति ।

श्लो०वा०—मत्प्रसिद्धा ऽस्ति युक्तिर्वा साध्यं वाऽत्र यथेच्छसि ॥१४१॥
तस्मान्न विदुषामेतदुत्तरं युज्यते यतः ।
तव हेतुरसिद्धो ऽयं मम तेन न साधनम् ॥१४२॥
'सत्यं यदि ममैवाऽत्र प्रतिपत्तिः फलं भवेत् ।
तदा त्वदप्रसिद्धे ऽपि हेतौ मां प्रति हेतुता ॥१४३॥
यदा तु ज्ञानमात्रत्वप्र[1]तिपत्तौ भवान् मया ।
पृष्टः को हेतुरत्रेति तदैवं[2] नोपपद्यते' ॥१४४॥
स्वयं न[3] ह्यगृहीतेन मत्प्रसिद्धेन वा भवान् ।
हेतुना साध्यमेतत्तु प्रतिपन्नः कथञ्चन ॥१४५॥
न च व्याप्रियते ऽन्यत्र वचनं प्राश्निकान् प्रति ।
स्वनिश्चयाय यो हेतुस्तस्यैव प्रतिपादनात् ॥१४६॥
मत्प्रसिद्धत्वमेतस्य कुतश्चाऽवगतं त्वया ।
कथं चेत्थं विवक्षा ते स्वयमर्थमजानतः ॥१४७॥
मयि जिज्ञासमाने ऽपि बुद्धिपूर्वाऽभिधायिनः ।
इति ज्ञात्वा च वो वृद्धैर्भाषितोभयसिद्धता ॥१४८॥

न्या०र०—एवं सत्यपि मत्प्रसिद्धिमपेक्षमाणः प्रत्यक्षेणाऽप्यर्थं प्रतिपद्यमानोऽपेक्षेतै-वेत्याह यच्चेति ॥१४१॥

तस्माद्वाद्यप्रसिद्ध्युपालम्भ उपहासास्पदमित्युपसंहरति तस्मादिति ॥१४२॥

तत्र परिहारमाह सत्यमिति द्वयेन। मत्प्रतिपत्तिमात्रफलत्वे साधनस्य स्यादेवं, भवता त्वयं सिद्धान्तो ज्ञानमात्रं सर्वमिति, तत्र को हेतुरिति पृष्टे नाऽहं जानामीत्युत्तरं बालभाषितं स्यादिति ॥१४३॥१४४॥

कथमित्याह स्वयमिति ॥१४५॥

भवदीयेनाऽपि 'परार्थमनुमानं तु स्वदृष्टार्थप्रकाशक'मिति लक्षणेन स्वप्रतिपन्नमेव प्राश्निकेभ्यः प्रतिपादनीयमित्याह न चेति। प्रतिपादनादन्यत्रेत्यन्वयः ॥१४६॥

किं च, मत्प्रसिद्धिरपि साधनस्य निरुपायेन भवता कथमवगम्यत इत्याह मत्प्रसिद्ध-त्वमिति। किं चाऽप्रतिप[4]त्त्या ऽर्थस्य भवतो विवक्षाऽपि निर्निबन्धनैव, तदभावाच्च साधनरचना दूरे निरस्तेत्याह कथमिति ॥१४७॥

जिज्ञासमाने ऽपीति। यद्यप्यहं जिज्ञासुर्न निग्रहपरः, तथापीति। अत एव दिङ्नागाचार्यैरप्युभयसिद्धिरादृतेत्याह इतीति ॥१४८॥

---

१. 'त्वं प्रतिपन्न'—क, २. 'तदैतन्नो'—क,
३. 'यन्न'—क, ख, ४. किंचाप्रतिपन्नार्थस्येति पा० ।

श्लो०वा०—तेन यद्वन्ममैतेन त्वमाधित्ससि हेतुना ।
साध्यज्ञानं, तथैवाहमज्ञानं तव दूषणैः ॥१४९॥
यथैव च भवानीदृक् साध्यमुक्त्वाऽस्य साधनम् ।
साध्याऽनुरूपमज्ञात्वा विहतः प्रतिपादनात् ॥१५०॥†
तथैव प्रतिपाद्यो ऽपि तादृक्साध्यबुभुत्सया ।
मन्वानः साधनं दुष्टं ततः साध्यं न बुध्यते ॥१५१॥
संवित्त्या[1] साधनं[2] मत्वा तत्सद्भावे दृढे [3]स्थिते ।
साध्यस्याऽसंभवादेव त्वदुक्तं नाऽवबुध्यते ॥१५२॥卐
तेनाऽऽश्रेयं न कर्तव्या मोहादपि मयेरिते ।
साधने साधनं ज्ञात्वा पर एवाऽवभोत्स्यते ॥१५३॥*

न्या०र०—यथा च तवाऽसिद्धेनापि मत्प्रसिद्धेन साधनेन साध्यज्ञानं ममाऽऽधातुमिच्छसि, तथा दूषणैरपि मत्प्रसिद्धैरेव साध्याऽज्ञानमाधास्यामीत्याह तेनेति ॥१४९॥

किं च, तवेव ममाऽपि सर्वमिथ्यात्वं प्रतिपद्यमानस्य साधनाऽसिद्धिरेव स्यात्, तत्सद्भावे वा न सर्वमिथ्यात्वं बोद्धुं शक्यमित्याह यथैवेति ॥१५०॥१५२॥

उपसंहरति तेनेति ॥१५३॥

हेतुप्रतिज्ञाविरोधाख्यस्य निग्रहस्थानस्य इदं निरालम्बनानुमानमुदाहरणं, यददर्शनेन शाक्यैर्दूषणत्वमस्य निरस्तमित्याह विस्पष्ट इति । 'प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोध' (न्या०सू०५–२–४) इत्यक्षपादेनोक्तम् । तत्र चोदाहरणं, नित्यः शब्दः सर्वस्याऽनित्यत्वादिति सांख्योक्तमनुमानं, सर्वस्य ह्यनित्यत्वं, तदन्तर्गतत्वात्तस्याऽप्यनित्यता स्यात्, तन्नित्यत्वे वा न सर्वस्याऽनित्यत्वमिति, तदिदं शाक्यैर्दूषितम्[4] । न हि सर्वस्याऽनित्यत्वं

---

१. 'सम्यक् च'—क, 'सम्यग् वा'—ख, २. 'मुक्त्वा'—, ३. 'सति'—ख,
४. प्रतिज्ञाहेतुविरोधरूपनिग्रहस्थानस्योदाहरणं यत्सांख्योक्तमनुमानं नैयायिकैः प्रदर्शितं तच्छाक्यैर्दूषितमित्यर्थः ।

† विज्ञानमात्रप्रतिज्ञार्थं च तद्व्यतिरिक्तो हेतुर्यथा वादिनो ऽप्रसिद्ध इति कृत्वा प्रतिवादिना विहतः, तथैव प्रतिपाद्योऽपि तादृक्साध्यबुभुत्सायां साध्यानुरूपं साधनमज्ञात्वा विहत इत्याह—यथैवचेति श्लोकद्वयेन ।

卐 विज्ञानव्यतिरिक्तंचेत् साधनमवबुध्यते, तदा द्वैतसद्भावादद्वैतहानिः इत्याह—संवित्त्येति ।

* अमुमेवार्थमुपसंहरति । यथोक्तमक्षपादेन—"प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः" इति ।

श्लो०वा०—विस्पष्टश्चाऽक्षपादोक्तो विरोधो हेतुसाध्ययोः ।
यमदृष्ट्वा परैरुक्तमदूषणमिदं किल ॥१५४॥†
ननु लोकप्रसिद्धेन पूर्वमेतेन हेतुना ।
साध्यसिद्धिर्ममाप्यासीत्परमार्थो ऽस्य नास्तिता ॥१५५॥
'यो ऽधुना परमार्थेन नास्तीत्येवं प्रकाशते'[1] ।
कथं पूर्वमसावासीदसंश्चेत्साधनं कथम् ॥१५६॥
साधनं चेदवश्यं च परमार्थाऽस्तिता भवेत्' ।
सिद्धिर्नाऽपरमार्थेन परमार्थस्य युज्यते ॥१५७॥
न दृष्टा शशशृङ्गादेः सम्यग्ज्ञानादिहेतुता ।
बाष्पादिना ऽ[2]प्यधूमेन मिथ्या वह्न्यादिबोधनम् ॥१५८॥

न्या०र०—सांख्यैर्हेतुत्वेनोक्तं, येन हेतुप्रतिज्ञाविरोधः स्याद्, वैधर्म्यदृष्टान्तस्त्वयम् । सर्वत्वं च सावयवत्वमभिमतम् । तत्र हेत्वभावेन साध्याऽभावस्य नियमो वक्तव्यः, अनित्यस्य सर्वत्वादिति । असुशिक्षितवैधर्म्यवचनत्वात्तु विपर्ययेणोक्तमिति । तदुक्तं 'दृष्टान्तोऽभिहितो ह्येष वैधर्म्येणाऽसुशिक्षितैः' इति । तदिदमुदाहरणदूषणमात्रेण प्रतिज्ञा-विरोधस्य निग्रहस्थानत्वं न दूषितं भवतीति किलशब्देन दर्शितम् । यद्यपि तदुदाहरणं भवति, तथापि भवदीयमेव निरालम्बनाऽनुमानमुदाहरणं भवति । सर्वनिरालम्बनत्वे हि प्रत्ययत्वग्राहिज्ञानस्यापि निरालम्बनत्वात्प्रत्ययत्वं न सिद्ध्येत्, तत्सिद्धौ वा न सर्वनिरा-लम्बनत्वम् ॥१५४॥

चोदयति नन्विति । प्रागस्मान्निरालम्बनाऽनुमानाल्लोकसिद्धा हेत्वादयः सद्रूपा एव, अतस्तैः सद्भिः पारमार्थिकं निरालम्बनत्वं साध्येत, तस्मिंश्च साधिते पश्चाद्धेत्वादीनाम-सत्त्वं भवदपि न साध्यसिद्धिं विहन्ति, तस्य प्रागेव सिद्धत्वादिति ॥१५५॥

परिहरति यो ऽधुनेति सार्धेन । न हि प्राक्सदेव हेत्वादिकं निरालम्बनाऽनुमानेन विनाश्यते, किं तर्हि प्रागप्यसदेव, पश्चात्तु तदवगम्यते, शुक्तेरिव रजतत्वम् । अतः पूर्वमसदेव, असत्त्वाच्च न परमार्थस्य साध्यस्य साधनमिति । कथमित्यत आह सिद्धिरिति ॥१५६॥१५७॥

कथं न युज्यते अत आह न दृष्टेति । किं च, विद्यमानादपि बाष्पाद् भ्रान्त्या धूमतया ऽवगतान्न परमार्थाऽग्निसिद्धिः, किमु अत्यन्ताऽविद्यमानादित्याह वाष्पादिनेति ॥१५८॥

---

१. 'प्रतीयते'—क, 'प्रकाश्यते'—ख, २. ह्यधूमेन'—ख,

† एतस्य प्रतिज्ञादोषस्य इदमुदाहरणं, यददृष्ट्वैवोदाहरणान्तरमक्षपादोक्तं दूषितं दिङ्नागेनेत्याह—यमदृष्ट्वेति ।

श्लो०वा०—तस्मादसत्यहेतोर्यापरमार्थे मतिस्तव ।
सा ऽप्यसत्या, न सत्यं हि सत्याऽऽभासेन गम्यते ॥१५९॥*
ये ऽपि रेखादयो दृष्टा वर्णानां प्रतिपादकाः ।
न ते स्वेनाऽपि[1] रूपेण परमार्थत्ववर्जिताः ॥१६०॥†
वर्णात्मना न सत्यांश्चेत्; सर्वभावेष्वयं विधिः ।
पदार्थान्तररूपेण न सत्यं किञ्चिदिष्यते ॥१६१॥‡
स्वरूपे विद्यमाने तु यदप्येवं प्रकाशते ।
स्वरूपाऽभावक्लृप्तौ तु न सत्यं नाप्यसत्यता ॥१६२॥

न्या०र०—उपसंहरति तस्मादिति । असत्येन हेत्वादिना परमार्थत्वसंमते निरालम्बनत्वे या मतिः सा मिथ्येति ॥१५९॥

ननु वर्णस्वरूपेणाऽपरमार्थैरपि रेखादिभिः परमार्थवर्णज्ञानं दृष्टमत आह येऽपीति ॥१६०॥

शङ्कते वर्णात्मनेति । परिहरति सर्वभावेष्विति । एतदेव विवृणोति पदार्थान्तरेति । एतदुक्तं भवति, यद्यपि रेखासु मकारोऽयमिति वर्णात्मकत्वं भ्रान्तं, तथापि न तेन रूपेण वर्णज्ञानोपायत्वं, यतो वर्णज्ञानं मिथ्या स्यात् । वर्णात्मके हि तदवगमे जाते पश्चान्न किं चिज्ज्ञातव्यमस्ति, यदसत्योपायतया पश्चान्मिथ्या स्यात् । अतः स्वरूपेणैव गमकता, तच्च सत्यमेवेति नोपायासत्यत्वम् । रेखास्वरूपेण तु वर्णस्वरूपमवगम्यमानं सम्बन्धग्रहण[3] समयवर्त्तितादात्म्यशिक्षाबलेन भ्रान्त्या तद्रूपतयावगम्यते इति नासत्याऽसत्यसिद्धिः ॥१६१॥

किं च, यदपि बाष्परेखादिकं, तदपि स्वरूपेण सत्यभूतेन पररूपेण वा[4] धूमादिरूपेणासत्येनावगम्यते । यत्तु स्वरूपेणैवात्यन्ताविद्यमानं न तत्स्वरूपेण प्रमाणं

१. 'वर्णादिः'—ख, २. 'स्वेनैव'—ख,
३. ग्रहणं इति पा० । ४. च इति पा० ।

* एवमद्वैतावगतावपि अविद्यावस्थायामुपायोपेयभावः पारमर्थिको भवत्येव, अद्वैतमेवावगम्यमानमुपायस्य भ्रान्ततामवगमयति, विद्यावस्थायान्तु प्रमाणप्रमेयप्रमातृप्रत्ययस्तमयान्नविघ्नः—किमेकमुतानेकम् इति । तदाह—तस्मादिति ।

† रेखारूपतया हि लिप्यक्षराणां वर्णावगतौ सम्बन्धग्रहणम्, तेन रूपेण सत्यत्वमेवेत्यर्थः ।

‡ यदा तु वर्णसामानाधिकरण्येन लिप्यक्षरावगतिः 'गकारोऽयमि'ति तदा तेषामसत्यता, तदा च तत्रैव प्रतीतेः पर्यवसानात् उपायोपेयभाव एव नास्तीत्याह—'वर्णात्मने'ति ।

श्लो०वा०—हेत्वादीनां तु भवतः स्वरूपेणाप्यसत्यता ।
तेन बाष्पादिवत्तेषामुपायत्वं न लेख्यवत् ॥१६३॥
उपायानां स्वरूपं हि संवृत्यात्मकमेव नः ।
तथा च सत्यतेष्टैव स्वरूपासत्यता कथम् ॥१६४॥
संवृत्या यत् स्वरूपं हि तद्वाङ्मात्रनिबन्धनम् ।
हेतुत्वं परमार्थस्य प्रतिपत्तुं न शक्नुयात् ॥१६५॥*
परमार्थाच्च लोकस्य न भेदे हेतुरस्ति ते ।
लौकिकोपायगम्यस्य केन स्यात् परमार्थता ॥१६६॥

न्या०र०—न[1] पररूपेण वा भ्रान्त्यावगम्यते, बुद्धयारोह एव तस्य न सम्भवतीत्याह स्वरूपे इति ॥१६२॥

ततः किमित्याह हेत्वादीनामिति । उपसंहरति तेनेति । नेत्युभयत्र सम्बध्यते । बाष्पादिवत् तेषां भ्रान्तिज्ञानहेतुत्वमपि न सम्भवति, नापि लेख्यवत्सम्यग्ज्ञानहेतुत्वमिति ॥१६३॥

चोदयति उपायानामिति । यद्यत्यन्तासन्तो हेत्वादयः स्युर्न स्युरुपायाः, ते तु सांवृतेन[2] रूपेण सत्या एवेति ॥१६४॥

परिहरति संवृत्येति । सांवृतं रूपं वाङ्मात्रनिबन्धनम्, असत्यापरपर्यायत्वात्संवृतेः । अतो नैवंविधेन हेत्वादिना परमार्थसाध्यसिद्धिः । पूर्वं धर्मधर्म्यादिव्यवहारः सांवृतेन बाह्येन सिध्यतीत्युपन्यस्य तन्निरस्तम् । इदानीं साधनव्यवहारौपयिकत्वमुपन्यस्यते निरस्यते चेति विषयभेदादपौनरुक्त्यमिति ॥१६५॥

किं च, लोकपरमार्थयोर्भेदो ऽपि तव न सिद्धयति, तद्ग्राहिज्ञानमिथ्यात्वादित्याह परमार्थाच्चेति । लोकशब्देन संवृतिरुच्यते इति । किं च सांवृतोपायगम्यस्य बाष्पावगताग्निवन्न परमार्थता स्यादित्याह लौकिकेति ॥१६६॥

संप्रति सर्वपूर्वोक्तपरिहारेण परः प्रत्यवतिष्ठते नन्विति । यथैव अविद्यमानैरेव बुद्धयारूढैर्घटादिभिरुदकाहरणादिव्यवहारः सुखोपभोगश्च स्वप्ने सिद्धयति, तथैव बुद्धयारूढेन धर्मधर्मिहेत्वादिविभागेनाऽनुमानाऽनुमेयव्यवहारः सेत्स्यतीति किं बाह्येनेति ।

किंनिबन्धनो बुद्धिभेदो यतो हेत्वादिविभागः, अत आह वासनेति । वासनाभेदाच्छब्दभेदाच्च हेत्वाद्याभासविकल्पविभागाः सम्भवन्ति, ततश्च हेत्वादिविभाग इति ।

---

१. ततः पररूपेणेत्यादि पा० । २. संवृत्तेनैवेति पा० ।
* सांवृतं हि रूपं वाङ्मात्रनिर्मितं, न परमार्थोपायो भवति ।

श्लो०वा०—नन्वसत्यपि वाह्ये ऽर्थे बुद्धयारूढेन सिध्यति ।
वासनाशब्दभेदोत्थविकल्पप्रविभागतः ॥१६७॥
*न्यायविद्भिरिदं चोक्तं धर्मादौ बुद्धिमाश्रिते ।
व्यवहारो ऽनुमानादेः कल्प्यते न वहिःस्थिते ॥१६८॥
अस्तीदं वचनं तेषामिदं तत्र परीक्ष्यताम् ।
भेदो ऽसतः कथं हि स्याद्बुद्धिशब्दप्रकल्पनात् ॥१६९॥ॐ
निर्वस्तुके कथञ्च [१]स्याद्विभागो[२] बुद्धिशब्दयोः ।
शब्दभेदो ऽपि भवतस्तदभावान्न [३]सिध्यति ॥१७०॥
'यदि वाऽविद्यमानो ऽपि भेदो बुद्धिप्रकल्पितः ।
साध्यसाधनधर्मादेर्व्यवहाराय कल्पते ॥१७१॥
ततो भवत्प्रयुक्तेऽस्मिन् साधने यावदुच्यते ।
सर्वज्ञो[४]त्पद्यते बुद्धिरिति दूषणता[५] भवेत्' ॥१७२॥

न्या०र०—शब्दग्रहणं चार्थनिराकरणपरतयाऽनास्थयोक्तं, परमार्थतस्तु ज्ञानमात्रवादिनो शब्दोऽपि नास्त्येव, वासनाभेदनिवन्धन एव तु विकल्पभेद इति ॥१६७॥

वृद्धानामप्यस्मदीयानामिदमेवाभिमतमित्याह न्यायविद्भिरिति । सर्व एवायमनुमानानुमेयव्यवहारो बुद्धयारूढेन धर्मधर्मिन्यायेन[६] न वहिः सत्तामपेक्षतइति दिङ्नागेनोक्तमिति ॥१६८॥

दूषयति अस्तीति । न हि शशविषाणादेवु द्धिनिबन्धनो भेदो दृष्ट इति ॥१६९॥

निर्वस्तुके च जगति बुद्धिशब्दविभाग एव निर्निवन्धन इत्याह निर्वस्तुके इति । ज्ञानमात्रवादिनश्च शब्दाभावात् तद्भेदो बुद्धिभेदकारणं न सम्भवतीत्याह शब्दभेद इति ॥१७०॥

बुद्धिमात्रनिवन्धनत्वे च साधनस्य दूषणमप्यस्मदीयं तावन्मात्रेण सिद्धयतीत्याह यदि वेति द्वयेन । यावदुच्यते, दूषणमिति शेषः ॥१७१॥१७२॥

---

१. 'कथञ्चित् स्याः'—क, ग, २. 'त्प्रसवो'—क, ख, ग,
३. 'विद्यते'—क, ४. 'दृभिद्यते'—ख,
५. 'भाग्'—क, ६. धर्मधर्मिभागे इति पा० ।

* न्यायविद्भिः दिङ्नागाचार्यैरिदमुक्तं 'सर्व एवायमनुमानानुमेयव्यवहारो बुद्धयारूढेन धर्मधर्मिन्यायेन बहिः सदसत्त्वमपेक्षते ।'

ॐ नासतः शशविषणादेः शब्दनिबन्धनः तज्जनित—बुद्धिनिबन्धनो वा भेदो दृष्ट इति दुरुक्तमिदमपरेषां बुद्ध्यारूढेनानुमानानुमेयव्यवहारः ।

श्लो॰वा॰—यश्च मन्त्रस्त्वयोक्तो ऽयं धर्म्यादौ बुद्धिमाश्रिते ।
न बाह्यापेक्षता[1] स स्यादसिद्धयादौ मयेरिते ॥१७३॥*
बुद्धिप्रक्लृप्तिसिद्धिश्च भवता व्यवहारिणाम् ।
मदुक्तं दूषणं सिद्धं, त्वदुक्तं तु न साधनम् ॥१७४॥
'बाह्यार्थव्यवहारित्वा'ज्ज्ञानोत्पादे स्थितेऽपि नः ।
कथञ्चिन्न हि कल्प्येत व्यवहारोऽर्थवर्जितः ॥१७५॥
ननु यद्वन्मया हेतुर्नेष्यते दूषणं तथा ।
तेन मे दूषणाभावाददुष्टं साधनं भवेत् ॥१७६॥‡
नेदानीं दूषणैः कार्यं, साधनाभावतो यदि ।
त्वयैवास्मदभिप्रेता स्वपक्षासिद्धिराश्रिता ॥१७७॥
न चास्ति वासनाभेदो निमित्तासम्भवात्तव ।
ज्ञानभेदो निमित्तं चेत्, तस्य भेदः कथं पुनः ॥१७८॥

न्या॰र॰—दिङ्ना[2]गवचनमपि सर्व एवायं दूष्यदूषणव्यवहार इत्येवमूहेन प्रकल्पितव्यमित्याह यश्चेति ॥१७३॥

न चैवमावयोस्तुल्यत्वमित्याह बुद्धीति ॥१७४॥

कथं न साधनमत आह बाह्यार्थेति ॥१७५॥

चोदयति नन्विति ॥१७६॥

परिहरति नेदानीमिति ॥१७७॥

यश्च वासनाभेदो बुद्धिभेदनिबन्धनत्वेनोक्तः, सोऽपि निर्निबन्धन इत्याह न चेति । शङ्कते ज्ञानभेद इति । दूषयति तस्येति ॥१७८॥

पुनः शङ्कते वासनेति । दूषयति प्राप्तमिति । स्वाभाविको ज्ञानभेदो न वासनानिबन्धन इति चेत्तत्राह स्वच्छस्येति । स्वभावतः स्वच्छं चिन्मात्ररूपमविलक्षणमेव ज्ञानं,

१. 'त्वज्ज्ञानो'—ग,

२. "न बहिः सत्तामपेक्षते" इति दिङ्नागवचनं सर्वं एव दूष्यदूषणव्यवहारो न बाह्यसत्तामपेक्षते इत्येव योज्यं स्यादित्यर्थः ।

* शक्यते च वदितुमेवमपि सर्वं एवायं दूष्यदूषणव्यवहारो बुद्ध्यारूढेन दूष्यदूषणन्यायेन, न बहिः सदसत्त्वमपेक्षत इत्याह—यश्चेति ।

‡ यथा हि मे साधनमसिद्धम्, एवं दूषणमपीति न दुष्टंसाधनम् ।

श्लो०वा०—वासनाभेदतश्चेत् स्यात् प्राप्तमन्योन्यसंश्रयम्।
स्वच्छस्य ज्ञानरूपस्य न हि भेदः स्वतोऽस्ति ते ॥१७९॥
प्रमाणं वासनाऽस्तित्वे भेदे वापि न विद्यते।
कुर्याद् ग्राहकभेदं सा [1]ग्राह्यभेदस्तु किङ्कृतः ॥१८०॥
‡संवित्त्या जायमानां हि स्मृतिमात्रं करोत्यसौ।
क्षणिकेषु च चित्तेषु विनाशे [2]च निरन्वये ॥१८१॥
वास्यवासकयो श्चैवमसाहित्यान्न वासना।
पूर्वक्षणैरनुत्पन्नो वास्यते नोत्तरः क्षणः ॥१८२॥
उत्तरेण विनष्टत्वान्न च पूर्वस्य वासना।
साहित्येऽपि[3] तयोर्नैव सम्बन्धो ऽस्तीत्यवासना ॥१८३॥

न्या०र०—वासनानिबन्धनस्तु तस्य नीलादिरूपो भेदः। अत एव हि तुरीये सकल-वासनोच्छेदात्संविन्मात्ररूपेण ज्ञानमवतिष्ठतइति ॥१७९॥

प्रमाणमपि वासनातद्भेदयोर्नास्तीत्याह **प्रमाणमिति**। विद्यमानापि वासना पूर्व-गृहीतेऽर्थे ग्राहकभेदं ज्ञानान्तरमेव कुर्यान्न तु नीलादिकं ग्राह्यमाविर्भावयितुमलमित्याह **कुर्यादिति** ॥१८०॥

कथं न ग्राह्यभेदं करोतीति, तत्राह **संवित्त्येति**। पुर्वानुभवजनितसंस्कारो वासना, अतोऽसौ स्मृतिमेवानुभूते करोति, न सांवृतं घटादिकमत्यन्तागृहीतं ग्राहयतीति। इतश्चा-नुपपन्ना वासनेत्याह **क्षणिकेष्विति**। कारणत्रयं वासनाभाव उक्तं, तत्राऽसाहित्यं विवृणोति **पूर्वक्षणैरिति**। न हि युगपदविद्यमानयोरुभयोरेकेन इतरस्य वासना सम्भवति, सहभुवामेवा[4]गारागुरुधूमादीनां वास्यवासकभावदर्शनादिति। साहित्याभ्युपगमेऽपि ज्ञानानां मिथः सम्बन्धाभावान्न वासना सम्भवति, न वा ऽनन्तरक्षणवर्त्तित्वमेककालत्वं वा सम्बन्धः, तस्य सन्तानान्तरेषु ज्ञानान्तरेषु च साधारणत्वादित्याह **साहित्येऽपीति** ॥१८१॥१८३॥

---

१. 'कार्य'—ख, २. 'ऽपि'—ख,
३. 'च'—ख, ४. अङ्गारेति पा०।

स्वच्छस्य हि ज्ञानात्मनः स्वयमनुपलभ्यमानभेदस्यानादिवासनोपप्लावितनीलाद्या-कारकलुषितत्वमेव भेदकारणमिति-बौद्धैराश्रितम्, अतो दुरुत्तरमितरेतराश्रयम्।

‡ न ग्राह्यभेदे वासना कारणमित्यत्रोपपत्तिमाह—संवित्त्येति। स्मृतिहेतुर्हि वासना। नच अनुभूतात् स्मृतिरधिकं मात्रयापि गोचरयति। न च बहिरत्यन्तासन्तो भावाः क्वचिदपि गृहीतपूर्वा इति न तान् वासना स्मारयितुं प्रभवतीति।

श्लो०वा०—क्षणिकत्वाद् द्वयस्यापि[1] व्यापारो न परस्परम् ।
विनश्यच्च कथं वस्तु वास्यतेऽन्येन नश्यता ॥१८४॥
[2]अवस्थिता हि वास्यन्ते भावा भावैरवस्थितैः ।
अवस्थितो [3]हि पूर्वस्माद्भिद्यते नोत्तरो यदि ॥१८५॥
पूर्ववद्वासना तत्र न स्यादेवाविशेषतः ।
भङ्गुरे पूर्वसादृश्याद् भिन्नत्वाच्चाऽस्ति वासना ॥१८६॥*

न्या०र०—'क्षणिकत्वान्न वासने' त्येतद्विवृणोति क्षणिकत्वादिति । संयोगसमवायादि-व्यापारनिबन्धना वासना दृष्टेति ।

'निरन्वयविनाशित्वान्न वासने'त्येतद्विवृणोति विनश्यदिति । सावयवानां स्वरूपेण सतामेव वास्यवासकभावः, यथा धूमावयवानां सूक्ष्माणामगारे, चम्पकावयवानां च तैले संक्रान्तिरिति ॥१८४॥

किमिति न वास्यते, अत आह अवस्थिता इति । अवस्थितानां ह्यवस्थितैः संक्रान्तिर्वासना, न च निरन्वयविनष्टेषु पूर्वोत्तरेषु केन चिदंशेन संक्रान्तिः सम्भवति, अस्मत्पक्षे तु आत्मनः स्थिरत्वाद् द्वित्रक्षणवर्त्तिना ज्ञानेन सम्भवति वासनेति ।

चोदयति अवस्थित इति । यदुक्तम् 'अवस्थिता हि वास्यन्त' इति, तदयुक्तम् । अवस्थितत्वे हि पूर्वाऽपरकालयोरेकरूपत्वमङ्गीकरणीयम्, इतरथाऽवस्थितत्वानुपपत्तेः । ततश्च प्रागवस्थितरूपस्य पश्चादपि तद्रूपत्वाद्वासनाऽनुपपत्तिरविशेषात् । अथ विशेषान्तरं वासनाख्यमवस्थितएव धर्मिणि जायतइत्युच्यते, स खलु विशेषो धर्मिणो भिन्नश्चेद्धर्मिणस्तादवस्थ्यम्, अभिन्नत्वे तज्जनने धर्मिणोऽपि तदभिन्नस्य जननापत्तेरवस्थितत्वानुपपत्तिरिति । क्षणभङ्गुरत्वे तु सम्भवति वासनेत्याह भङ्गुरे इति । अवस्थिते च पूर्वाऽपरकालयोरेकरूपस्य रूपान्तरजननाऽनुपपत्तिः स्यात् । अस्मत्पक्षे तु पूर्वस्माज् ज्ञानक्षणादुत्तरक्षणस्य भिन्नत्वात्सादृश्याच्च युक्तैव वासना । ताद्रूप्यमेव च वासना । यथा लाक्षारसोपसिक्ताद्बीजपूरकुसुमात् तद्रूपं जायमानं फलं तद्वासितमित्युच्यते, तेन पूर्वमुत्तरमात्मसरूपं जनयद्वासयतीत्युच्यते, उत्तरं च वास्यते इति न पुनर्व्यापाराऽपेक्षा वासना, येन क्षणिकस्य न स्यात् । कार्यकारणत्वं च वास्यवासकयोः सम्बन्ध इति नाऽसम्बन्धदोष इति ॥१८५॥१८६॥

परिहरति नैतदिति । क्षणिकानां हि जनकत्वमेव न सम्भवति, नतरां सदृशजनकत्वमिति । यथा तावन्न जनकत्वं तथा दर्शयति पूर्वेत्त सार्धेन । न तावदनुत्पन्नं विनष्टं

---

१. 'द्वयोश्चापि'—क, २. 'अवस्यता हि'—क, ३. 'ऽपि'—क, ख,
* भङ्गुरवादिनामेव वासना उपपत्तिमती, न स्थिरवादिनाम् ।

श्लो०वा०—पूर्वज्ञानं त्वनुत्पन्नं कार्यं नारभते क्व चित् ॥१८७॥
'न विनष्टं, न[1] तस्याऽस्ति निष्पन्नस्य क्षणं स्थितिः ।
तेनोत्[3]पन्नविनष्टत्वान्नास्त्यारम्भक्षणोऽपि हि' ॥१८८॥
निरन्वयविन[4]ष्टत्वादानुरूप्यं कुतः पुनः ।
न तदीयो ऽस्ति[2] कश्चिच्च धर्म उत्तरबुद्धिषु ॥१८९॥
समानधर्मतां मुक्त्वा नाऽऽनुरूप्यं च विद्यते ।
'यदि स्यादानुरूप्याच्च वासना गोधियो यदा ॥१९०॥
हस्तिबुद्धिर्भवेत्तत्र वैलक्षण्यान्न वासना ।
ततः परं च गोज्ञानं निर्मूलत्वान्न सम्भवेत् ॥१९१॥*

व्या०र०—वा जनकम्, असत्त्वात्तस्य । न वोत्पन्नस्य, क्षणिकत्वात् । क्षणान्तरावस्थानं य[5]दा कार्यमारभते । पूर्वक्षणवर्त्तित्वमेव कारणत्वमिति चेन्न, गवाऽश्वयोरपि यादृच्छिकपौर्वापर्ये तत्प्रसङ्गात् । पौर्वापर्यंनियमस्तु भूयोदर्शनगम्यः । न च क्षणिकानां निरन्वयविनाशिनां च विशेषतः सामान्यतो वा भूयोदर्शनं सम्भवतीति न कार्यकारणभाव इति ॥१८७॥१८८॥

सादृश्यं तु सुतरां न सम्भवतीत्याह निरन्वयेति । कथं निरन्वयविनाशे सारूप्याऽनुपपत्तिरत आह न तदीय इति ॥१८९॥

तथापि कथमित्याह समानेति । अवयवादिसामान्यानुगमनिबन्धनं हि सादृश्यम् इति । न[6] च सरूपजनकत्वेन वासकत्वे विलक्षणाद्विलक्षणोत्पत्तिः स्यादित्याह यदीति द्वयेन ।

ननु सरूपमपि जनयता नावश्यमनन्तरमेव जनयितव्यं, परम्परयापि तज्जननाविरोधात्, तेन गवाकारं ज्ञानमश्वाकारविज्ञानमपि जनयत्तादृश्या वासनया कार्यं करोति, य[7]या च सह जनयति त[8]या पश्चात्तस्यां सन्ततौ कदा चिदपि गोज्ञानं जन्यते । सा ह्युत्तरोत्तरज्ञानसंक्रान्त्यैव शक्नोत्येव कालान्तरे ऽपि स्वोत्पादकसरूपं ज्ञानमुत्पादयितुम् ।

---

१. 'न नष्टं'—ख, २. 'न च'—ख,
३. 'त्पद्य'—ख, ४. 'विशिष्टत्वा'—क, 'विनाशित्वा'—ख,
५. कदा इति पा० । ६. किं च सरूपजनकत्वे विलक्षणाद्विलक्षणोत्पत्तिर्न स्यादिति पाठः ।
७. यथा च पा० । ८. तथेति पा० ।
* यद्यपि हि आनुरूप्याद् वासनेत्युच्यते तदा तर्हि गोबुद्धेरनन्तरं हस्तिबुद्धिरुत्पद्यते, तत्रैव वैलक्षण्याद् वासना न स्यात् । ततोऽपि परस्ताद् गोज्ञानं निर्बीजं न सम्भवेदिति ।

श्लो०वा०—सर्वं विलक्षणं ज्ञानं न स्यादेव विलक्षणात्[1]।
बाह्यार्थाऽनुग्रहाभावात्पारार्थ्येनावशीकृताः ॥१९२॥
निरन्वयविनाशिन्यः कुर्युः कार्यं कथं क्रमात्।
विनाशे कारणस्येष्टः कार्यारम्भश्च नाऽन्यथा ॥१९३॥ॐ
'तत्रैव ज्ञाननाशेन विनष्टाः सर्ववासनाः।
तेन सर्वाभ्य एताभ्यः सर्वाकारं यदुत्थितम्[2] ॥१९४॥

न्या०र०एवं नीलपीतादिज्ञानानि सर्वाण्येव स्वाऽनुरूपज्ञानजननसमर्थानि विचित्रवासनां कुर्वन्ति। तदेवं सर्वाणि ज्ञानानि सर्वाऽऽकारवासनायुक्तानि। कदा चित्तु का चित् वासना स्वकार्यं करोति, यथा भवन्मते वहुष्वर्थेषु पूर्वानुभूतेषु तद्विषयिका वासनाः सहस्रशः पुरुषे व्यवस्थिता अपि स्वप्ने जागर्यायां च कदाचित् काश्चित्स्मृतिं जनयन्ति तथा ऽस्माकमपि भविष्यतीत्यत आह बाह्यार्थेति। मत्पक्षे हि स्थायिन्यः सर्वा वासनाः पुरुषे अवस्थिता अपि बाह्यार्थानुग्रहात् सदृशदर्शनाऽदृष्टदेशकालाद्युद्वोधकक्रमात्पारार्थ्येनात्मार्थत्वेन च वशीकृतास्तदीयमनःप्रणिधानक्रमाद्युक्तं क्रमेण कार्यं कुर्वन्ति। भवतस्तु ज्ञानवासनातिरिक्तस्य कस्य चिदभावात् निरन्वयविनाशित्वाच्च वासनानां कथं किमपेक्षया क्रमारम्भः स्यादिति।

इतश्च न क्रमारम्भ इत्याह विनाशे इति। कारणविनाशानन्तरमेव कार्यमिति भवतां दर्शनमिति ॥१९०॥१९३॥

ततः किमित्याह तत्रेति सार्द्धेन। ज्ञानधारा हि सर्वा वासना ज्ञाननाशेन नश्यन्ति, अतः सर्वाकारमेकं ज्ञानं युगपज्जनयेयुरिति न क्रमारम्भसिद्धिरिति। अथ ज्ञाननाशेऽपि शक्तिपर्याया वासना न नश्येयुः ततः क्षणिकसिद्धान्तहानिः, अक्षणिकस्य च कार्याऽऽरम्भानुपपत्तिरित्याह यदीति।

शङ्कते वासनानामिति। क्षणिकानामपि वासनानां ज्ञानानामिव प्रवाहाङ्गीकरणात् कार्यारम्भः क्रमारम्भश्च युक्त इति ॥१९४॥१९६॥

---

१. 'नुगमाभा'—क, २. 'समुच्छ्रितम्'—क,

ॐ एता वासनाः क्वचित् आश्रिता न वा? यदि आश्रिताः, ज्ञानातिरिक्तस्य कस्यचिदभावात् तदाश्रिता वाच्याः। तत्र एक ज्ञाननाशे सकलतदाधारवासनाविनाशः। कारणविनाशादेव कार्यारम्भ इति वः सिद्धान्तः, प्रकारान्तरकारणत्वायोगात्। विनश्यदेव हि कारणं कार्यं जनयतीति युगपन्नश्यन्तीभिर्वासनाभिः सकृदेव सर्वाकारज्ञानमुत्थापितं तथावस्थितं च एकदैव एकक्षणे विनष्टमिति क्षणान्तरे न किञ्चित् भवेत्।

श्लो०वा०—ज्ञानमेकक्षणेनैव विनाशं गन्तुमर्हति' ।
यद्याश्रयविनाशेऽपि शक्त्यनाशोऽभ्युपेयते ॥१९५॥*
क्षणिकत्वं च हीयेत न चारम्भोऽन्यथा भवेत् ।
वासनानां प्रवाहेऽपि यदि ज्ञानप्रवाहवत् ॥१९६॥
वासनातस्ततो ज्ञानं न स्यात्तस्माच्च वासना ।
ॐकुर्यातां तुल्यमेवैते' नाऽन्योन्यं तु कदा चन ॥१९७॥
नान्यो विलक्षणो हेतुर्येनान्यादृक् फलं भवेत् ।
तस्मात्संवृतिसत्यैषा कल्पिता नास्ति तत्त्वतः ॥१९८॥
न चेदृशेन भावेन कार्यमुत्पद्यते क्व चित् ।†

न्या०र०—दूषयति वासनात इति । सर्वं हि कारणं सजातीयाऽऽरम्भकमिति वः सिद्धान्तः । घटो घटं पटः पटमित्यङ्गीकरणात् । ततश्च वासना वासनामेव कुर्यात् ज्ञानं च ज्ञानं, न तु वासनातो ज्ञानं ज्ञानाच्च वासनेति सिद्ध्येत्, ततश्च गवाकाराज् ज्ञाना-दुत्पन्नया वासनया परम्परया कालान्तरे गवाकारज्ञानसिद्धिरनुपपन्ना, ज्ञानमेव गवाकारं गवाकारज्ञानस्योत्पादकमिति उपपद्यते, ततो गोज्ञानादश्वज्ञानं न स्यादिति ॥१९७॥

ननु औत्सर्गिकं कारणस्य सजातीयारम्भकत्वं, विलक्षणसहकारिसमवधाने तु विजा-तीयमपि करोति, यथा मुद्गराभिघातसमवधाने घटः कपालम् । अतो ज्ञानमपि वासनां वासना च ज्ञानं कुर्यादित्यत आह नान्य इति । ज्ञानातिरिक्तस्याभावादिति । उपसंहरति तस्मादिति ॥१९८॥

भवत्विति चेत्तत्राह न चेति । उक्तमिदं न सांवृतं कार्यक्षममिति । यत्त्ववस्थितस्य भिन्नाभिन्ना वासना न सम्भवन्तीत्युक्तं तत्राह यस्य त्विति । यस्य मे ऽवस्थितपुरुषो ज्ञानाऽभ्यासपाटवादिना युज्यते सम्बध्यते तस्याऽसौ भिन्नाया एव वासनायाः समवायि-त्वेनाधारो भवतु, तत्समवायाच्च पूर्वाऽवासितस्यापि वासितत्वोपपत्तिः अभेदेन वा,

---

१. 'सदृशेचैते'—क,

* यदि तु आश्रयभूतज्ञानविनाशेऽपि शक्तिर्वासना न नश्यतीत्युच्यते, ततः क्षणिकत्व-सिद्धान्तहानिः । स्थिरस्य क्रमयौगपद्याभ्यामर्थक्रियानुपपत्तेः कार्यानारम्भप्रसङ्गः ।

ॐ सदृशमेव हि तदा ज्ञानवासने कार्यमारभेयाताम्—ज्ञानं ज्ञानं वासना वासनां, न पुनरन्योन्यमिति । ननु विजातीयकारणोपनिपाताद् विसदृशकार्योत्पादो भविष्यति इत्यत आह—नान्यइति । द्वयातिरिक्तवस्त्वभावादितिभावः ।

† अतः संवृतिसत्यरूप इव वासना कल्पिता न परमार्थतः काचिदस्ति इत्याह—तस्मादिति । नचैवं जातीयकं कस्मैचित् कार्याय घटत इति ।

श्लो०वा०—*यस्य त्ववस्थितो ज्ञाता ज्ञानाभ्यासेन युज्यते ॥१९९॥

स तस्य वासनाऽधारो वासना ऽपि स एव वा ।

कुसुमे बीजपूरादेर्यंल्लाक्षाद्युपसिच्यते ॥

तद्रूपस्यैव संक्रान्तिः फले[1] तस्येत्यवासना ॥२००॥

युक्त्या ऽनुपेतामसतीं प्रकल्प्य

यद्वासनामर्थनिराक्रियेयम् ।

आस्थानिवृत्त्यर्थमवादि [2]बौद्धै-

र्ग्राहं गतास्तत्र कथं चिदन्ये ॥२०१॥

इति औत्पत्तिकसूत्रे पञ्चमे निरालम्बनवादः ॥

न्या०र०—स एव तावद्वासना भवतु । तदाकारेण च तस्योत्पत्तिविनाशयोरपि सतो रूपान्तरेणाऽवस्थानान्न नित्यत्वहानिरिति ॥१९९½॥

यत्तु निर्दशितं लाक्षाऽवसिक्तं कुसुमं सरूपं फलं जनयतीति, तद् युक्तम्, तत्र हि लाक्षाऽवयवानां सूक्ष्माणां कुसुमात्फले सक्रान्तिर्न तु पूर्वज्ञानस्यांशः कश्चिदुत्तरेषु ज्ञानेषु अनुवर्तत इत्युक्ताद्[3]विशेषः । तदाह कुसुमे इति वासनाऽन्तेन । प्रकरणार्थमुपसंहरति इतीति । बौद्धमपि दर्शनं तात्पर्यतो नैवाऽवगतमेवंवादिभिरित्याह युक्त्या ऽनुपेतामिति ॥२००॥२०१॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे निरालम्बनवादः ।

---

* स्वमते इदानीं वासनामुपपादयति--यस्यत्विति । अवस्थितो हि ज्ञाता यज्ज्ञानाभ्यासेन वासनाधारो भवति तद् युज्यते । क्षणिकं तु न वासयितुं शक्यम् । न च तद्वासना प्रयोजनवती, क्वचिदुपयोगाभावात् । न च वासितः पूर्वावस्थातोऽत्यन्तं भिद्यते, येनान्यत्वं प्रतिपद्यते । न च प्राग्वदविशिष्टः, येन वासना न स्यात् । न च अवस्थान्तरोत्पादे अवस्थितत्वानुपपत्तिः, पूर्वापरयोरवस्थयोरनुगतस्य बोद्धुः प्रत्यभिज्ञानात् । तदिह अवस्थातद्वतोरभेदविवक्षायां पूर्वज्ञानाहितसंस्कारः पुमानेव वासना भवेत् । भेदविवक्षायां तु तदाधार इति ।

# अथ शून्यवादः ।

शा०—शून्यस्तु—कथम् ? अर्थज्ञानयोराकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः । अतस्तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति पश्यामः । स्यादेतदेवम्—यद्यर्थाकारा बुद्धिः स्यात्, निराकारा तु नो बुद्धिः; आकारवान् बाह्योऽर्थः; स हि बहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यते । अर्थविषया हि प्रत्यक्षबुद्धिर्न बुद्ध्यन्तरविषया । क्षणिका हि सा, न बुद्ध्यन्तरकालमवस्थास्यत इति ।

श्लो०वा०—*एवमुक्ते ऽनुमानस्य ज्ञानमाश्रित्य दूषणे ।
ज्ञानप्रवृत्त्यशक्त्या तु परः प्रत्यवतिष्ठते ॥१॥
'यत्तावन्मन्यमानेन प्रत्यक्षं भवतोच्यते ।
दूषणं तद्विरोधादि तदिदानीं परीक्ष्यताम् ॥२॥

न्या०र०—अत्र भाष्यं "शून्यस्तु, कथम्, अर्थज्ञानयोराकारभेदं नोपलभामहे, प्रत्यक्षा च नो बुद्धिरतस्तद्भिन्नमर्थरूपं नाम न किं चिदस्तीति पश्यामः" (शा०भा० १-१-५) इति । तदयुक्तम् । अत्र हि प्रकृतप्रत्ययशब्दाऽनुवृत्त्या प्रत्ययः शून्य इत्युच्यते । किं चेदं प्रत्ययस्य शून्यत्वमन्यदतोऽर्थविरहात् । यथा च समाप्तावुपसंहृतम् "अर्थरूपं न पश्याम" इति । तेनाऽर्थानालम्बनत्वमेवेदमुच्यते, तच्च निरस्तम्, अतः केन हेतुना पुनः प्रत्यवस्थानमत आह एवमिति । प्रत्यक्षादिज्ञानविरोधेन हि प्रागनुमानं निरस्तं, तस्य च बहिः प्रवर्त्तितु[1]मशक्तेर्न तद्विरोधो ऽनुमानस्य संभवतीति पूर्वोक्तविरोधपरिहारेण प्रत्यवस्थानमिति ॥१॥

प्रत्यक्षाऽशक्तिमेव दर्शयितुं परीक्षामवतारयति यत्तावदिति द्वयेन । यादृशं बाह्याऽर्थग्राहि प्रत्यक्षं मन्यमानेन मीमांसकेन तद्विरोधोऽनुमानस्योच्यते, तदेव किं बहिः

---

१. प्रवर्तयितुमिति पा० ।

* "शून्यस्तु । कथम् । अर्थज्ञानयोराकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः । अतस्तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति पश्यामः' इति भाष्यम् । तत्र यः शून्यः, येन च शून्यः तदुभयानुपादानात् शून्यस्त्विति प्रतिज्ञावचनमसङ्गतार्थम् । यदि तु पूर्वसाधनवाक्यगतप्रत्ययशब्दानुषङ्गेण शून्यः प्रत्ययः तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति चोत्तरग्रन्थानुसारेण अर्थेन शून्य इति व्याख्यायते, ततस्तेनैव गतार्थत्वमत आह—एवमिति । "शून्यस्तु" इति स एव निरालम्बनवादी नास्तिकः प्रत्यक्षादिविरोधदूषितस्वसाधनो दूषणपरिहारेण इदानीं पुनः प्रत्यवतिष्ठते । न त्वन्यः कश्चन अपरो बौद्धः ।

श्लो०वा०—[*]प्रवर्तितुं हि किं शक्तं स्तम्भाद्यर्थे बहिः स्थिते ।
अथ वाऽऽत्मांश एवैतद् ग्राह्ये क्षीणं न वस्तुनि' ॥३॥

तद्यद्येतेन बाह्योऽर्थो गृह्यते दूषणं ततः ।
त्वदुक्तं सर्वमात्मांशे ग्राह्ये तन्नोपपद्यते ॥४॥

तत्र तावदिदं सिद्धं सर्वप्राणभृतामपि ।
ग्राह्यत्वं नीलपीतादिदीर्घाद्याकारवस्तुनः ॥५॥

न चाऽप्याकारभेदेन ज्ञानज्ञेयाऽवधारणा ।
न चाऽन्यतरधर्मत्वं विस्पष्टं तत्र[1] गृह्यते ॥६॥

गृह्यमाणस्य चाऽस्तित्वं नाऽग्राह्यस्याऽप्रमाणकम् ।
तस्मादाकारवद् वस्तु ग्राह्यत्वाद्विद्यते ध्रुवम् ॥७॥

न्या०र०—प्रवर्त्तितु[2] शक्तं, किं वा ऽत्मांशपर्यवसायित्वान्न बहिर्वस्तुनि प्रवर्तत इति परीक्षितव्यमिति ॥२।३॥

किमर्था पुनरियं परीक्षा, अत आह तद्यदिति । बाह्यग्राहिणा हि प्रत्यक्षेण तदपह्नवाऽनुमानं बाध्यते, नाऽऽत्मांशपर्यवसायिना । तत्र यदि गृह्यमाणो नीलादिर्बाह्याकारः, ततो बहिः प्रवृत्तिशक्तं प्रत्यक्षम् । अथ ज्ञानस्य, ततः स्वांशपर्यवसायि । तेन कस्याऽयमाकार इति परीक्षणीयमिति ॥४॥

ननु सिद्धे ग्राह्यस्य सद्भावे तस्याऽर्थाकारत्वं ज्ञानाकारत्वं वा परीक्षितुं शक्यं, तत्सिद्धिरेव तु कुतः ? तत्राह तत्रेति । सर्वप्राणभृतामविवादसिद्धमिदं यन्नीलाद्याकारं किं चिद् वस्तु प्रकाशत इति ॥५॥

तथापि ज्ञानज्ञेययोरपि प्रकाशनादुभयमप्यङ्गीक्रियतां, किं परीक्ष्यते, अत आह न चेति । एकमेव नीलाकारं वस्तु प्रकाशते न द्वयमिति । तथापि यस्यैव प्रकाशने ऽर्थस्य ज्ञानस्य वाऽयमाकारः तस्यैवायमाकारो ऽस्तु, कः परीक्षावसरः ? अत आह न चेति । नाऽयमाकारो ऽर्थज्ञानयोरन्यतरधर्मतया निर्धारितो भासते, यतः परीक्षावसरो न स्यादिति ॥६॥

नन्वेकस्मिन्नपि प्रकाशमाने ऽन्यदप्रकाशमानमेव सिध्यति, तथा च सिध्यत्येव द्वैतमत आह गृह्यमाणस्येति । तस्मादेकस्यैव ध्रुवमस्तित्वं, द्वितीयं त्वस्ति नास्तीति परीक्षितव्यमित्याह तस्मादिति ॥७॥

---

१. 'तस्य'—क    २. प्रवर्तयितुमिति पा० ।

[*] कीदृशी पुनरियं परीक्षेति तत्स्वरूपं दर्शयति ।

श्लो०वा०—'अतः परीक्षमाणानां ज्ञानमाकारवद्यदि ।
तन्मात्रे च प्रमा क्षीणा ततो नास्त्यर्थकल्पना ॥८॥
यदि वा[1]ऽऽकारवत्ता स्याद्बाह्यस्यैवेह वस्तुनः ।
तदस्ति गृह्यमाणत्वात्तत्सि[2]द्धं वास्ति धीरपि' ॥९॥
किं तावदत्र युक्तं स्यात् ? ज्ञानमाकारवत्, कुतः ?
एकमाकारवद्वस्तु ग्राह्यमित्यध्यगीष्महि ॥१०॥
तद्यद्याऽऽकारवानर्थो बाह्यः कल्प्येत तस्य च ।
ग्राह्यत्वमन्यथा न स्यादिति ग्राहककल्पना ॥११॥
तेनाऽऽकारवतः क्लृप्ताद् ग्राह्यादाकारवर्जितम् ।
वस्त्वन्तरं [3]प्रकल्प्यं स्याद् ग्राहकं निष्प्रमाणकम् ॥१२॥
तस्याऽकल्पनमिच्छंश्चेदर्थे ग्राहकतां [4]वदेः ।
संज्ञामात्रे विसंवादः सिद्धा त्वेकाऽर्थकल्पना ॥१३॥

न्या०र०—तेन यदि परीक्षमाणा ज्ञानमेवाऽऽकारवदध्यवस्यामः । ततस्तन्मात्र एव प्रत्यक्षप्रमा क्षीणेत्यर्थकल्पनां विजहीमः, ज्ञानस्य हि स्वयं प्रकाशमानस्य नाऽर्थमन्तरेणाऽनुपपत्तिरिति सिध्यत्यद्वैतम् । अथ तु बाह्यस्यैवाऽयमाकारवत्तया प्रकाशस्त[5]त्प्रकाशमानत्वादस्ति, तस्य च जडत्वेन पराऽधीनप्रकाशत्वात्तत्प्रकाशोपपत्तये ज्ञानमपि कल्पयितव्यमिति सिध्यति द्वैतम् । तदिदमाह अत इति द्वयेन ॥८॥९॥

पूर्वपक्षं गृह्णाति किं तावदिति । ननु बहिरवभासमानस्य कथं ज्ञानाकारत्वमिति पृच्छति कुत इति । उत्तरमाह एकमिति । एकमेव हि नीलाद्याकारं वस्तु प्रकाशते न द्वयमित्येतावदधिगतवन्तो वयम्, अतस्तन्मात्रमेवाश्रयितव्यं न द्वयमिति ॥१०॥

तथापि कथं ज्ञानाकारतेत्याह तद्यदीति । अर्थस्य बाह्याकारत्वे तस्य जडस्य ग्राह्यत्वसिद्धये ग्राहकं ज्ञानमङ्गीकर्त्तव्यमिति ॥११॥

तत्र को दोषोऽत आह तेनेति । न हि क्लृप्तेनैवोपपत्तौ विना प्रमाणेनाऽक्लृप्तकल्पनं युक्तमिति ॥१२॥

शङ्कते तस्येति । ज्ञानवत् अर्थ एव स्वयंप्रकाशो ऽस्त्विति दूषयति संज्ञामात्र इति । एकमेव स्वयंप्रकाशं वस्त्विति मे मतं, तस्यार्थ इति संज्ञामात्रं भवतोच्यते, नाऽर्थे विशेषः कश्चिदिति ॥१३॥

---

१. 'त्वा'—ख २. 'सिद्धयैवा'— ३. 'पृथक् कल्प्यं'—ख
४. 'वद'—ख ५. तावत्प्रकाशेति पा. ।

श्लो० वा०—ग्राह्यग्राहकयोरेवं सर्वथा [1]प्रतिपाद्यते ।
बाह्याभ्यन्तररूपश्च [2]परिकल्प्यो मृषेष्यते ॥१४॥
[5]मत्पक्षे यद्यपि [3]स्वच्छो ज्ञानात्मा परमार्थतः ।
तथाऽप्यनादौ संसारे पूर्वज्ञानप्रसूतिभिः ॥१५॥
चित्राभिश्चित्रहेतुत्वाद्वासनाभिरुपप्लवात् [6] ।
स्वानुरूप्येण नीलादि ग्राह्यग्राहकदू[4]षितम् ॥१६॥

न्या० र०—एतदेव विवृणोति ग्राह्येति । ज्ञानं वा, भवत्वर्थो वा, सर्वथा सिद्धं तावद्ग्राह्यग्राहकयोरेकत्वं, तावदेव चाऽस्माभिः प्रतिपाद्यते नाऽन्यदिति । नन्वर्थो बाह्यः, विज्ञानं त्वान्तरं क्षणिकं, तत्कथं न वस्तुनि विशेषोऽत आह बाह्येति । एकमपेक्ष्येतरद् बाह्यं तदपेक्ष्य चान्यदान्तरम् । अद्वितीये तु वस्तुनि मृषैवाऽयं विभागः । स्वयंप्रकाशत्वे त्वयस्याऽपि क्षणिकत्वमेव, स्थायिनः सुषुप्त्यादावप्रकाशमानस्य स्वप्रकाशत्वाऽनुपपत्तेः । अतो वस्तुनि विशेषाऽभावात्संज्ञामात्रं विवाद इति ॥१४॥

यदि विज्ञानमात्रमेव तत्त्वं ततस्तस्य सच्चिन्मात्ररूपत्वान्नीलादेर्ग्राह्याकारस्य कथमाभासो नीलमिदमिति ? कदाचिच्चाऽस्मदर्थस्य ग्राहकाकारस्याऽहमिति ? अत आह मत्पक्षइति सार्द्धद्वयेन । अनादौ संसारे विचित्रग्राह्यग्राहकाकारबुद्धिजन्याभिर्विचित्राभिर्वासनाभिर्जन्यमानस्य स्वहेत्वानुरूप्येण विचित्रग्राह्यग्राहकाकारशबलस्य विभक्तस्य विचित्रोत्पत्तिसिद्धेर्न वैचित्र्यसिद्धयेऽर्थापेक्षा सम्भवति ।
यथाऽऽहुः—

अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥इति॥ (प्र० वा० २–३४)

तथा—

परिच्छेदान्तराच्चायं भावो बहिरवस्थितः ।
ज्ञानस्याभेदिनो भेदप्रतिभासोऽप्युपप्लवात् ॥इति॥ (प्र०वा०२-२१२)

उपप्लवाद् भ्रान्त्याकारसमारोपादित्यर्थः । ननु ज्ञानवैचित्र्याद्वासनावैचित्र्यं ततश्च वद्वैचित्र्यम्, इततीरेतराश्रयः स्यादित्युक्तं निरालम्बनवादे, अत उक्तमनादौ संसारइति । तद्विवृणोति अन्योन्यइति । शक्तिरिति वासनोच्यतइति । एकया वासनयैकं ज्ञानं जन्यते, तेनाऽप्यन्या वासना, तयाऽप्यन्यज् ज्ञानमिति नेतरेतराश्रयम् । न च सर्वाद्यस्य कथं सिद्धिरिति वक्तव्यम् । अनादित्वात्संसारस्येति ॥१५॥ ॥१७॥

---

१. 'प्रतिपद्यते'—ख,
२. 'परिकल्पो—ख,
३. 'स्वस्थो'—क,
४. 'रूषितम्'—कं, ख.
५. जन्यस्य ज्ञानस्येति पा. ।
६. प्लवः इति पां. ।

श्लो०वा०—प्रविभक्तमिवोत्पन्नं नाऽन्यमर्थमपेक्षते' ।
अन्योन्यहेतुता चैव ज्ञानशक्त्योरनादिका ॥१७॥
अनेककल्पनायाश्च ज्यायसी ह्येककल्पना ।
शक्तिमात्रस्य भेदश्च वस्तुभेदाद्विशिष्यते ॥१८॥
'तस्मादुभयसिद्धत्वाज् ज्ञानस्याऽऽकारकल्पना ।
ज्यायसी' भवतस्त्वर्थं कल्पयित्वा भवेदियम् ॥१९॥

न्या०र०—कल्पनालाघवादपि ज्ञानाकारतैव नीलादेर्युक्तेत्याह अनेकेति । ननु भवताऽपि ज्ञानवासनयोः कल्पनाभेदादस्त्येवाऽनेककल्पना, अत आह शक्तीति । ज्ञानस्यैव हि शक्तिमात्रं वासना, तन्मात्रकल्पना वस्तुभेदकल्पनाल्लघीयसी, ज्ञानशक्तिरूपस्य संस्कारस्याऽर्थवादिनाऽप्यभ्युपगमात् । सर्वं चेदं ज्ञानाऽतिरिक्तवासनाऽभ्युपगमेनोक्तम् । परमार्थतस्तु न ज्ञानातिरिक्तं किंचिदस्ति बौद्धानां ज्ञानान्येव तु समनन्तरप्रत्ययवशेन विचित्रनीलपीतादिरूपाणि जायमानानि कार्यकारणरूपाणि अनादिसंतानरूपेण प्रवहन्ति । नाऽर्थरूपमपेक्षन्तइति ॥१८॥

उभयवादिसिद्धत्वाच्च ज्ञानस्य तदाकारकल्पनैवाऽर्थाकारकल्पनातो ज्यायसीत्याह तस्मादिति सोत्यन्तेन । तस्मादर्थाकारकल्पनादित्यर्थः । भवतस्त्वर्थं कल्पयित्वाऽपि गरीयसीयं ज्ञानाकारकल्पनाऽवश्यमङ्गीकर्त्तव्येत्याह भवत इति । कारणमाह तदसिद्धाविति । नीलाद्याकाराऽप्रसिद्धौ हि संविन्मात्ररूपं ज्ञानं नीलादिकमर्थविशेषमुपस्थापयितुं न शक्नुयात् । न ह्यसति संविद्भेदे संवेद्यभेदः सम्भवति । नीलाद्याकाराऽभावे च संविदामभेदः[1] स्यात्, संविद्रूपस्य सर्वत्र समानत्वात् । नीलादिरूपेण त्वर्थसमानं ज्ञानं सरूपाऽर्थविषयं भवतीति युक्तम् । यदाहुः "न हि संवित्तिसत्तयैव तद्वेदना युक्ता, तस्याः सर्वत्राऽविशेषादविशेषप्रसङ्गात्, तां सारूप्यमाविशत्सरूपयितुं घटयेत् ।" इति ।

तथा—

तत्राऽनुभवमात्रेण ज्ञानस्य सदृशात्मनः ।
भाव्यन्ते नाऽऽत्मना येन प्रतिकर्म विभज्यते ॥ इति । (प्र. वा. २।३०२)

तत्रावश्यमर्थविशेषविषयत्वसिद्धये ज्ञानानामपि नीलाद्याकारवत्त्वमङ्गीकर्त्तव्यम् । यद्यपि स्वभावत एव संविदो व्यतिभिद्येरन्, तथाप्यसौ भेदो न नीलाद्युपरागमन्तरेण शक्यते निरूपयितुम् । न चाऽनिरूपितभेदाः संवेद्यभेदमलमुपस्थापयितुम् । न हि संविदस्तीत्येतावता नीलाऽवधारणं सम्भवति । तद्रूपस्य पीतादिसाधारणत्वात् । तस्माज् ज्ञानाकारो नीलादिर्नाऽर्थाकार इति ।

किं चैवमर्थाकारत्वे नीलस्य तेन ज्ञानेन विप्रकृष्टता भिन्नता स्यात्, ततश्च तेनाऽस्य

---

१. संविदो न भेद इति—पा,

श्लो०वा०—तदसिद्धावशक्तत्वात् तेनैवं विप्रकृष्टता ।
प्रत्यासन्नं च [1]सम्बद्धं ग्राह्यं मम भविष्यति ॥२०॥
*इतश्चाऽऽकारवज्ज्ञानं यस्मात्तद्व[2]त्प्रकाशकम् ।

न्या०र०—प्रकाशो न स्यादित्याह तेनेति । मत्पक्षे तु सम्भवति ग्राह्यत्वमित्याह प्रत्यासन्नमिति । प्रत्यासत्तिस्तादात्म्यं, ग्राह्यं मम भविष्यतीति वक्ष्यमाणेन सम्बन्धः । तदेवं प्रयोगः, नीलरूपं नीलवेदनादभिन्नं, तदुत्पत्तौ संवेद्यमानत्वात्तत्स्वरूपवत् । तद्भिन्नत्वेनाऽसंवेद्यमानत्वाद्वा । तत्स्वरूपवदभिन्नत्वे वा संवेद्यता न स्यात् पीतवदिति । तदनेन सम्वेदनादिति बौद्धोक्तो हेतुर्दर्शित इति ।

अपरमपि ग्राह्यलक्षणयोगादिति तदुक्तमेव हेतुं दर्शयति सम्बद्धमिति । मम विज्ञानसम्बद्धमेव नीलं तदात्मत्वात् । ततश्च युक्तं तस्य ग्राह्यत्वमिति । इदमेव हि ग्राह्यलक्षणं यत्तादात्म्यम्, तव त्वर्थान्तरत्वान्न तादात्म्यम् । न चाऽन्यो ऽपि कश्चिज् ज्ञानाऽर्थयोः सम्बन्धोऽस्ति यद्वशादर्थो ग्राह्यलक्षणमनुवर्त्तेत । तत्राऽसति सम्बन्धे ग्राह्यत्वाभ्युपगमे सर्वसंविदां सर्वविषयता स्यात्, तत्र सर्वः सर्ववित् स्यात् । हेतुत्वं ग्राह्यलक्षणमिति चेन्न, नेत्रादेरपि प्रसङ्गात् । ज्ञानाकाराऽर्पणक्षमत्वं हेतुत्वमिति चेन्न, प्रमाणाभावात् । न हि नीलोऽर्थो ज्ञाने नीलाकारमर्पयतीति किञ्चन प्रमाणमस्तीति । ज्ञानवैचित्र्यस्य समनन्तरप्रत्ययादेवोपपत्तेरिति वक्ष्यामः । सारूप्यं ग्राह्यत्वमिति चेत्, असन्निहितोऽपि नीलोऽर्थो नीलज्ञानस्य ग्राह्यःस्यात् । किंच, कथं चित्सारूप्यं सर्वज्ञानानां सर्वार्थैरविशिष्टं, सर्वेषां क्षणिकत्वात् । ततश्च सैव सर्वज्ञतापत्तिः । सर्वात्मना तु सारूप्ये ऽर्थवत् ज्ञानस्यापि जडत्वं स्यात् । यथाऽऽहुः—

एकदेशेन सारूप्ये सर्वः स्यात् सर्ववेदकः ।
सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेत् ॥ इति ।

सारूप्यतदुत्पत्तिभ्यां ग्राह्यत्वमिति चेत्, धारावाहिकेषु पूर्वमुत्तरस्य ग्राह्यं स्यात् । तस्मात्सर्वाबुद्धयः स्वात्मानमेवानुभवन्ति नान्यत् । स्वयमेव चानुभूयन्ते न बुद्धयन्तरेण । तस्यापि बुद्धयन्तरस्य स्वात्मपर्यवसायित्वात् । तथा ऽऽहुः—

नान्यो ऽनुभाव्यो बुद्ध्या ऽस्ति तस्या नाऽनुभवो ऽपरः
ग्राह्यग्राहकवैधुर्यात्ः स्वयं सैव प्रकाशते ॥इति॥ ॥१९॥२०॥ (प्र.वा. २।३२७)

---

१. 'संविद्धं'—क, २. 'द्वः'—ख,

* अपरमपि ज्ञानस्यैव आकारवत्तायां कारणमाह—इतश्चेति । युष्माकं मीमांसकानां तज्ज्ञानं प्रकाशकमिति सिद्धान्त इति । कस्य प्रकाशकमत आह—स्वयमिति । वाह्यस्य जडात्मनः स्वयं प्रकाशहीनस्य तदुपायतया सम्मतं, अन्यथा तत्प्रकाशायोगात् ।

श्लो०वा०—स्वयं प्रकाशहीनस्य बाह्यस्योपासनं[1] मतम् ॥२१॥
न चाऽगृहीते ज्ञानाख्ये[2] प्रकाश्योऽर्थोवधार्यते ।
तदधीनप्रकाशत्वाद्दीपाऽऽभासे[3] यथा घटः ॥२२॥
उत्पन्नेष्वपि चार्थेषु प्रकाशाभावतः[4] क्वचित् ।
प्रतिबन्धकयोगाद्वा संवित्तिर्नोपजायते ॥२३॥
ज्ञानस्योत्पद्यमानस्य प्रतिबन्धो न कश्चन ।
न चाऽप्रकाशरूपत्वं येनास्याऽग्रहणं भवेत् ॥२४॥
प्राक् चाऽर्थग्रहणादिष्टा तस्योत्पत्तिस्तदैव[5] च ।
संवेदनं भवेदस्य[6] न चेत् कालान्तरेऽपि न ॥२५॥
*किं हि तस्य भवेदूर्ध्वं; प्राक् च नासीत्, न येन तत् ।
पूर्वं गृहीतं; पश्चाच्च गृहीतमिति भाष्यते ॥२६॥

न्या०र०—इतश्च ज्ञानाकारो नीलादिक इत्याह इतश्चेति । इदमेव साधयितुमुत्पत्यवस्थायामेव ज्ञानं गृह्यतइत्येतत्तावत्साधयति यस्मादिति । भवतामपि हि ज्ञानं प्रकाशकमिति । कस्य प्रकाशकमिति तद्दर्शयति स्वयमिति । ॥२१॥

ततः किमित्याह न चेति । न ह्यगृहीतं प्रकाशकं प्रकाश्यं प्रकाशयति दीपप्रभावदिति । तदाहुः—

अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यतीति ॥२२

इतश्चोत्पत्तावेव गृह्यतइत्याह उत्पन्नेष्विति स्याऽन्तेन । प्रागेव तावदर्थग्रहणाज् ज्ञानोत्पत्तिर्भवतामिष्टा, अनुत्पन्नस्य ग्राहकत्वाऽयोगात् उत्पन्नाश्च भावा द्विधैव न गृह्यन्ते, प्रकाशकाभावात्, प्रतिबन्धकसद्भावाद्वा, यथा सन्तमसे कुडयव्यवाये वा घटः[7] । न च ज्ञानस्य प्रतिबन्धकमस्ति, न च प्रकाशकाभावः, स्वयं प्रकाशत्वात् । अतो ऽवश्यमुत्पत्तावेव ग्रहीतव्यमिति । यदि चैवमपि न गृह्यते, कालान्तरे ऽपि न गृह्येताऽविशेषादित्याह न चेदिति ॥२३॥२५॥

अविशेषमेव दर्शयति किं हीति ॥२६॥

---

१. पायसम्मतम्'—क, ख, २. 'ज्ञानांशे'—क, 'ज्ञानाख्यप्रकाशेऽ'—ख,
३. 'भ्यासे'—क, ४. 'प्रकाशाऽभावनं'—ख
५. ':सदैव च'—ख, ६. तस्य'—ख,
७. कुडयव्यवाये परः इति पा० ।
* किं पुनः कालान्तरे न ग्रहणमित्यत आह—किमिति । अगृह्यमाणे विशेषे प्रागग्रहणं परस्ताच्च ग्रहणं इत्यनुपपन्नम् ।

श्लो०वा०—ज्ञानान्तरस्य चोत्पत्तिं प्रकाशो न प्रतीक्षते ।
तस्य तस्याऽपि चाऽन्येन संवित्तावस्थितिर्भवेत् ॥२७॥
'ज्ञान[1]पृष्ठेन योऽप्यूर्ध्वमर्थाऽभावेऽपि दृश्यते ।
परामर्शोऽर्थरूपस्य स कथं [2]चोपपद्यते ॥२८॥
तद्रूपमर्थमा[3]लिख्य यदि धीर्नोपजायते ।
भूतकाले च यद्यर्थस्तत्पूर्वं नोपलक्षितः' ॥२९॥
*वक्तारश्चापि दृश्यन्ते वर्त्तमानाऽर्थबुद्धिषु ।
नीलोऽर्थोऽयं यतो मेऽत्र तद्रूपा जायते मतिः ॥३०॥
तस्मात् पूर्वगृहीतासु बुद्धिष्वर्थोपलम्भनम् ।
न चोपलब्धिरस्तीह निराकारासु बुद्धिषु ॥३१॥

न्या०र०—ज्ञानान्तरमिति चेत्, तत्राह ज्ञानान्तरस्येति । घटादीनामप्रकाशात्मनां हि प्रकाशाय प्रकाशाऽपेक्षा युक्ता, न तु प्रकाशात्मनो ज्ञानस्येति । सजातीयाऽपेक्षायामनवस्थेत्याह तस्येति । मा नाम संवेदि ज्ञानमिति चेन्न, उत्तरकाले स्मृतिदर्शनात् । एवं चैक-विषयज्ञानप्रवाहे एवाऽयुषः पर्यवसानाद्विषयान्तरसंचारो न स्यात् । यथाहुः—

ज्ञानान्तरेणाऽनुभवे हीष्टा तत्रापि च स्मृतिः । (प्र. वा. २।५१३)
विषयान्तरसञ्चारस्तथा न स्यात् स चेष्यते ॥इति॥२७॥ (प्र.वा. २।५२०)

इतश्च ज्ञानपुरस्सर एवार्थाऽनुभवो ज्ञानाकारश्च नीलादिरित्याह ज्ञानपृष्ठेनेति द्वयेन । ज्ञातमर्थमुत्तरकालं परस्मै कथयन् ज्ञानपुरस्सरमेव स्मृत्या परामृश्य कथयति, ज्ञातोऽयं मया घट इति । यथाऽनुभवं च कथनम् । तथाऽतीतेऽनागते चार्थेऽर्थाकारस्य नीलादेः परामर्शोऽसति ज्ञानाकारत्वे नोपपद्यते । न ह्यसता धीरनुरज्यते । अतो ज्ञानपुरस्सरमेवाऽर्थग्रहणम् । ज्ञानाकारश्च नीलादिः । ज्ञानपृष्ठेन योऽप्यूर्ध्वं परामर्शोऽर्थ-रूपस्य स कथमुपपद्यते, भूतकाले यद्यर्थः तत्पूर्वं नोपलक्षित इत्यन्वयः । तथाऽर्थाभावे यः परामर्शोऽर्थरूपस्य स कथमुपपद्यते 'तद्रूपमर्थमालिख्य यदि धीर्नोपजायते' इति ॥२८॥२९

न केवलमनुभूतार्थकथनम्, अनुभूयमानकथनमप्येवमेवेत्याह वक्तार इति ॥३०॥

उपसंहरति तस्मादिति । भवतु ज्ञानपुरस्सरमर्थग्रहणं, तथापि कथं नीलादेर्ज्ञानाकारत्वमित्यत आह न चेति । नीलमिदमिति नीलाकारमेव वस्तु प्रथते न निराकार-मिति ॥३१॥

---

१. 'ज्ञानप्रष्ठेन'—ख, २. 'चो'—ख, ३. 'मालिङ्ग्य'—क,

* इतश्च ज्ञानानुविधायी अर्थः । तथाहि भवन्ति वक्तारः—नीलोऽयमर्थः तद्रूपानु-भवात् इति । ज्ञाननिरपेक्षे त्वर्थनिश्चये नैतदुपपद्यते ।

श्लो०वा०—विवेकबुद्ध्यभावाच्च साकारस्य च दर्शनात् ।
[1]आकारवत्तया बोधो ज्ञानस्यैव प्रसज्यते ॥३२॥
न ह्येवं कल्पना शक्या निराकाराऽदितो मतिः ।
गृह्यतेऽर्थस्ततः पश्चात् साकारः सम्प्रतीयते ॥३३॥
आकारवत्त्वभेदौ [2]हि ज्ञात्वा शक्येत भाषितुम् ।
प्राग्बुद्धिग्रहणादर्थे संवित्तिर्नेति साधितम् ॥३४॥*
न चाऽर्थाकार एवाऽयं ज्ञानारूढः प्रतीयते ।
न हि सो ऽन्तःप्रवेशाय पर्याप्तो नाऽर्थहानये ॥३५॥
इत्थंभावे प्रमाणं च तस्य वक्तुं न शक्यते ।
तदीयप्रतिबिम्बत्वमेतस्मादेव नेष्यते ॥३६॥

न्या०र०—एवमर्थोऽपि साकारः स्यात्, यद्याकारद्वयं दृश्यते, न तु तदस्तीत्याह **विवेकेति**। यदि न किंचिदपि साकारं वस्तु दृश्येत ततोऽर्थवज् ज्ञानमपि साकारं न स्यात्, दृश्यते तु किञ्चित्साकारं वस्त्वित्याह **साकारस्येति**। तदस्माद्धेतुद्वयात् ज्ञानं साकारं नार्थ इत्याह **आकारेति** ॥३२॥

प्रथमं हेतुं विवृणोति **न हीति** ॥३३॥

द्वितीयं विवृणोति **आकारवत्त्वेति**। यदि त्वगृहीतैव बुद्धिरर्थं गृह्णीयात् ततस्तस्या निराकारत्वमर्थस्यापि च साकारत्वं सिद्ध्येत्, न तु तदस्तीत्युक्तमित्याह **प्रागिति** ॥३४॥

केचिदाहुः, सत्यं, नीलाकारतया ज्ञानं गृह्यते न त्वसावाकारस्तस्यैव, किं त्वर्थाकार एवायं ज्ञानं समारूढो दृश्यतइति। तान् निराकरोति **न चेति**। कारणमाह **न हीति**। कथं खल्वर्थधर्मः सन् स्वाश्रयं हित्वा वस्त्वन्तरं ज्ञानं प्रविशेदिति ॥३५॥

ज्ञानधर्मतया च गृह्यमाणस्य निष्प्रमाणकमर्थधर्मत्वमित्याह **इत्थमिति**। मा नामाऽर्थं विहासीदर्थस्थस्यैव प्रतिबिम्बमिदं नीलरूपस्यादर्शसंकाशे ज्ञाने प्रकाशतइत्यतआह **तदीयेति**। **एतस्मादिति**। प्रमाणाऽभावादित्यर्थः ॥३६॥

एवं हि प्रतिबिम्बता प्रमाणवती भवतीत्याह **निश्चन्द्रेति**[3]। खे च जले चेत्यर्थः ॥३७॥

---

१. 'स्वाकारवत्तया'—क, 'साकारवत्तया'—ख, २. 'ऽत्र'—ख
३. 'निश्चन्द्रे—ख,
* ननु मा भूदनाकाराया बुद्धेरुपलम्भः। साऽपित्वाकारवत्येवोपलप्स्यते अर्थश्च। तस्माद् द्वयोराकारवत्त्वं भविष्यति। ततश्चोपलभ्यते इति किमनुपपन्नम् ? अत आह—**आकारेति**।

श्लो०वा०—[1]निश्चन्द्रप्रतिबिम्बं हि दृष्टं येन दिवा जलम् ।
स रात्रौ खे च तं दृष्ट्वा जानाति प्रतिबिम्बताम् ॥३७॥
विज्ञाने न कदाचित्तु प्राङ्निराकारदर्शनम् ।
बाह्ये वा ऽऽकारवत्ताधीर्येनैवं कल्पना भवेत् ॥३८॥
शब्दगन्धर[1]सानां च कीदृशी प्रतिबिम्बता ।
ज्ञाने च[2] गृह्यमाणस्य कथं स्यादर्थधर्मता ॥३९॥
बाह्याभ्यन्तरदेशत्वान्न चार्ऽर्थज्ञानयोर्मिथः ।
सम्पर्कों ऽस्ति यतो मोहादविवेकमतिर्भवेत् ॥४०॥
असंमूढस्य चाऽदृ[3]ष्टेर्न संमोहप्रकल्पना ।
कल्प्यमाने ऽथ वा ऽप्येवं न द्वयोरवतिष्ठते ॥४१॥
संसर्गधर्म आकारस्तस्मादेव न युज्यते ।
देशभेदादसंसर्गो मूर्ताऽमूर्ततया तथा ॥४२॥

न्या०र०—नत्वेवमत्रास्तीत्यत आह **विज्ञानेति** ॥३८॥

किंच चाक्षुषाणामेव प्रतिबिम्बनं दृष्टमतः कथं शब्दादीनां ज्ञाने दर्शनमित्याह **शब्देति** । न केवलं प्रतिबिम्बत्वमप्रमाणम्, अर्थधर्मत्वमप्यप्रमाणकमित्याह **ज्ञाने चेति** ॥३९॥

माभूत्प्रतिबिम्बं, ज्ञानार्थौ तु संसृष्टौ संमोहादविविञ्चन्नर्थधर्ममेव नीलं ज्ञानेऽध्यवस्यतीत्यत आह **बाह्येति** । ॥४०॥

किंच, सर्वस्य जगतः संमोहकल्पनमतिसाहसम् न कश्चिदप्यसंमूढो दृश्यतइत्याह **असंमूढस्येति** । तदेवं सत्यपि संमोहकल्पनायां[4] न द्वयोरेवावतिष्ठते अर्थसहस्रस्याऽयमाकारः संसर्गात्संमूढानामेकवदवभासतइति किं न कल्प्यते इत्याह **कल्प्यमानइति** ॥४१॥

केचित्त्वाहुः, न ज्ञानधर्मो नीलादिः, न चार्थस्य । निराकारयोः संसृष्टयोराकारो निष्पद्यते, चूर्णहरिद्रयोरिवाऽरुणिमेति, तान् निराकरोति **ससर्गेति** । तस्मादित्येतद्विवृणोति **देशभेदादिति** । किं च, मूर्त्तयोरेव संसर्गादाकारो निष्पद्यते, न मूर्त्ताऽमूर्त्तयोर्नाप्यमूर्त्तयोः । तदिह ज्ञानं तावदमूर्त्तम्, अर्थस्तु यदि मूर्त्तो यदि वा ऽमूर्त्तः द्वेधाऽपि नाऽनयोराकारो निष्पद्यत इत्याह **मूर्त्तेति** ॥४२॥

---

१. 'रसादीनां'—ख,        २. 'न'—ख,        ३. 'ऽदृष्टे न'—ख,
४. तद्द्वयोरेवेति—पा,

श्लो०वा०—त्रैलोक्येन प्रसङ्गाच्च संसर्गो नैककालता।
न चाऽप्यार्जवतः स्थानं ज्ञानेनाऽर्थस्य विद्यते ॥४३॥
सर्वथा कल्पनायां च चक्षुषा ऽपि रसादयः।
गृह्येरन् सर्वभावानामण्वाकाराश्च तद्गताः ॥४४॥
न चाऽपि विषयत्वेन स्थाने संसर्गकल्पना।
[1]विषयत्वं हि कीदृक् स्यात् प्रागाकारोपलम्भनात् ॥४५॥
न ह्यसच्चेतितो भावो विषयत्वेन कल्प्यते।
विषयत्वात् तदाकार आकाराद्विषयश्च सः[2] ॥४६॥
*द्वयोराकारनिर्मुक्तं सत्त्वं [3]संसृष्टतां तथा।
स्वरूपतः परिच्छिद्य वक्तुमित्यादि युज्यते ॥४७॥
न चाऽप्यस्येह सद्भावः प्राग् गृहीतो न चोपरि।
न ह्याकारविनिर्मुक्तं ग्राह्यमस्तीति भाषितम् ॥४८॥

न्या०र०—ननु सत्यपि देशभेदे कालैक्यात्संसर्गो भविष्यतीत्यत आह त्रैलोक्येनेति। ज्ञानसमयवर्त्तिनां सर्वेषामीदृशसंसर्गसम्भवात् सर्वेषामाकारा ज्ञान एकस्मिन्नुपलभ्येरन्निति। यदि ज्ञानाऽऽर्जवेनाऽऽभिमुख्येनार्थस्याऽवस्थानं संसर्गः, तत्राह न चेति। ज्ञानस्य मुखाऽभावादिति ॥४३॥

किं च, येनैवाऽर्थेन ज्ञानं संसृज्यते तेनैव सर्वात्मना संसर्गं प्राप्नोति न हि संसर्गे कश्चिदंशः परिहर्त्तुं शक्यते। ततश्चैकस्मिन् घटादौ भावे चक्षुषाऽनुभूयमाने तद्गता रसादयः परमाणवश्चाऽनुभूयेरन्नित्याह सर्वथेति ॥४४॥

विषयतया ऽवस्थानमर्थस्य संसर्गो, न चातिप्रसङ्ग इति चेत्। तत्राह न चेति। कारणमाह विषयत्वमिति ॥४५॥

किमिति विषयत्वं न भवत्यत आह न हीति। एवं चेतरेतराश्रयं स्यादित्याह विषयत्वादिति। विषयत्वरूपादेव हि संसर्गादाकारनिष्पत्तिः, आकारनिष्पत्तौ चोपलभ्यमानत्वलक्षणं विषयत्वं, निराकारोपलम्भाऽभावात्, अतोऽन्योन्याश्रयमिति ॥४६॥

किं चैवं संसर्गधर्मत्वमाकारस्य युक्तमित्याह द्वयोरिति ॥४७॥

न त्वेवमत्राऽस्तीत्याह न चेति। कथमित्याह न हीति ॥४८॥

---

१. 'विषयश्चेति'—क, २. 'ते'—ख, ३. 'संसृष्टता'—ख,

* दूषणान्तरमाह—द्वयोरिति। यदि ज्ञानार्थयोर्द्वयोरपि आकारशून्यं स्वरूपमवगतं स्यात्, पुनश्च कदाचित् संस्पृष्टत्वेन आकारसंवित्तिः तदा भवेदपि संसर्गधर्माकारकल्पना। परं नत्त्वैवमस्तीति।

श्लो०वा०—तस्मादर्थेन संसर्गो निष्प्रमाणक एव ते ।
ज्ञानवैचित्र्यसिद्ध्यर्थं न चाऽस्त्यर्थस्य कल्पना ॥४९॥
तदधीनं हि वैचित्र्यं क्व दृष्टं [1]येन कल्प्यते ।
निराकारेण चोत्पत्तिर्वैचित्र्याऽऽकारयोः कथम् ॥५०॥

न्या०र०—उपसंहरति तस्मादिति । नन्वसत्यर्थसंसर्गे यदिदं नीलपीतादिरूपेण ज्ञानानां वैचित्र्यं तन्नोपपद्यते । न हि समनन्तरप्रत्ययमात्रादस्योत्पत्तिः संभवति, तस्य सर्वत्राऽविशिष्टत्वात् । अविलक्षणेन च विलक्षणकार्यनिष्पत्त्ययोगात् । एवमालोकेन्द्रियमनःकारणानामपि साधारण्यादेव न वैचित्र्यनिमित्तत्त्वम्[2] । तदिदं नीलरूपमन्येषु हेतुषु सत्स्वपि कदाचिदुत्पद्यमानकारणभूतमर्थसंसर्गं कल्पयत्यत आह ज्ञानेति ॥४९॥

कारणमाह तदधीनमिति । न ह्यर्थसंसर्गकृतं वैचित्र्यं क्वचिद् दृष्टं, यतस्तद्दर्शनादर्थसंसर्गः कल्प्यतइति । किं च, संसर्गधर्माऽऽकारवादिनां प्राक्संसर्गान्निराकारोऽर्थो ज्ञानं च, तत्कथं तत्संसर्गादाकारो निष्पद्यते, कथन्तरां च तद्वैचित्र्यमित्याह निराकारेणेति । साकाराणामेव चूर्णादीनां संसर्गादाकारनिष्पत्तिर्दृष्टा । सर्वेषां च निराकाराणामविलक्षणत्वात्कथं विचित्राऽऽकारनिष्पत्तिः ? अथाऽविलक्षणादपि कारणाद्विलक्षणकार्यनिष्पत्तिरुपेयते ? सा समनन्तरप्रत्ययादेवाऽस्तु, किमर्थसंसर्गग्रहणेनेति ॥५०॥

यदप्याहुः, नाऽयमाकारः संसृष्टयोरुभयोः सर्वदैवाऽर्थो निराकारः, ज्ञानमेव साकारम्, सचाकारोऽर्थसंसर्गकृत इति ; तदपि पूर्ववन्निराकर्त्तव्यम् । न हि निराकारादर्थाद्बुद्धावाकारवैचित्र्ययोरापादनं संभवतीत्याह निराकारादिति । संसर्गधर्मत्वे वा ऽऽकारस्याऽयमपरो दोष इत्याह स्मृतीति सार्द्धेन । न ह्यतीतस्मृतावनागताऽनुमाने स्वप्ने शशविषाणाद्यवभासे वा ऽर्थसंसर्गो ऽस्ति, यन्निमित्तोऽयमाकारः स्यात्, अविद्यमानेन संसर्गाऽयोगात् । तदवश्यं वासनापर्यायसमनन्तरप्रत्ययकृतैवेयमाकारतद्वैचित्र्योत्पत्तिरङ्गीकर्त्तव्या; तथा जाग्रद्धियामप्यस्तु; किमर्थसंसर्गेणेति ।

सौत्रान्तिकास्तु, ज्ञानवैचित्र्यसिद्ध्यर्थमर्थमपि नीलपीतादिविचित्राकारमेव कल्पयन्ति न निराकारम् । यदेव च विषयाकारसमर्पणक्षमं हेतुत्वं तदेवाऽर्थस्य ग्राह्यत्वमिति न ग्राह्यलक्षणाऽयोगः । यथा ऽऽहुः—

भिन्नकालं कथं ग्राह्यमिति चेद्ग्राह्यतां विदुः ।
हेतुत्वमेव तद्युक्तं ज्ञानाऽऽकारार्पणक्षमम् ॥ इति । (प्र.वा. २।२४७)

१. 'केन'—क.

२. 'तदिदं नीलपीतादिरूपेण ज्ञानानां वैचित्र्यं नोपपद्यते' इत्यधिकं क्वचित् ।

श्लो०वा०—'निराकाराच्च विषयाद्बुद्ध्याकारो ऽतिविस्मयः ।
स्मृतिस्वप्नादिवोधे [1]च स्यादनाकारता तव ॥५१॥
न हि तत्राऽर्थसंसर्गः केवला वासनैव तु ।
हेतुत्वेनोपपन्नेति सैव जाग्रद्धियामपि' ॥५२॥
अन्वयव्यतिरेकाभ्यामेवं ज्ञानस्य गम्यते ।
आकारो, न हि वाह्यस्य ज्ञानाऽपेतो [2]निदश्यते ॥५३॥
[3]वाह्याऽपेतो मया यद्वत्, तस्मात् संसर्गवागियम् ।
निराकारे ऽपि विज्ञाने वासनास्वेव युज्यते ॥५४॥
द्वयोरप्येक आकार [4]इत्येतस्याऽप्रमाणता ।
देशभेदाद[5]संसर्गो द्वयोश्चाऽनवधारणात् ॥५५॥

न्या०र०—नन्वेवं जन्यज्ञानसमये जनकस्याऽर्थस्याऽतीतत्वात् कथं वर्तमानाऽवभासः ? ज्ञानाकारो ह्ययं वर्तमानः प्रथते, अर्थस्तु तत्समर्पकतयाऽतीत एव कल्प्यते, अतो न दोषः । कथं पुनः प्रत्यक्षज्ञानेऽनवभासमानस्य प्रत्यक्षत्वं ? इदमेव प्रत्यक्षत्वमर्थस्य, [6]यत्साक्षात्साकारविज्ञानजननम् । यस्तु परम्परया साकारं विज्ञानं जनयति सोऽनुमेयः, यथा वह्निस्वलक्षणं धूमस्वलक्षणतद्दर्शनतद्विकल्पप्रणाडिकया ऽग्निज्ञानं जनयदनुमेयम् । अत एव प्रत्यक्षमनुमानं च द्वे एव प्रमाणे । साक्षाज्जनकस्य प्रत्यक्षत्वात्, परम्परया जनकस्य चाऽनुमेयत्वात् । अजनकस्य चाऽग्राह्यत्वान्नाऽतो द्वयादन्यत्सम्भवतीति । तेषामपीदं तुल्यं निराकरणम्, 'तदधीनं हि वैचित्र्यं क्व दृष्ट'मिति, 'स्मृतिस्वप्नादिवोधे च स्यादनाकारता तवे'ति च ॥५१॥५२॥

इतश्च ज्ञानाऽऽकारो नीलादिरित्याह अन्वयेति आकारोऽन्तेन । एवंशब्दो युक्त्यन्तरोपन्यासे । तावेव दर्शयति न हीति वदन्तेन । स्वप्नादावसत्यप्यर्थे ज्ञानान्वयादेवाऽऽकारान्वयो दृश्यते, ज्ञानाऽभावे तु न क्वचिद्दृश्यतइति । उपसंहरति तस्मादिति । स्वभावतः स्वच्छमेव ज्ञानं समनन्तरप्रत्ययाख्यवासनासंसर्गाद् विचित्रनीलपीताद्याकारमुपजायत-इति ॥५३॥५४॥

अपरे त्वाहुः, एक एवाऽयमाकारः द्वाभ्यामर्थज्ञानाभ्यां साधारण्येनाऽनुभूयते लाक्षासंनिहितेनेव मणिद्वयेन लाक्षारूपमिति; तत्राह द्वयोरिति । कारणमाह देशभेदादिति । आन्तरं हि ज्ञानमतिदूरे चाऽर्थः, कथमाभ्यामसंसृष्टाभ्यामसंनिहिताभ्यामेकस्याऽनुभव इति । द्वयसद्भावस्य चाऽसिद्धत्वान्नाऽऽकारसाधारण्यमित्याहद्वयोरिति ॥५५॥

---

१. 'न'—क, २. 'निदृश्यते'—क, ३. 'बाह्योपेतो'—ख,
४. 'इत्येतच्चाऽप्रमाणकम्' क, ५. 'संसर्गाद्' ख, ६. यत्साकारविज्ञानेति—पा;

श्लो०वा०—एवमेवाऽर्थबुद्धयोः स्यात् सादृश्यान्नाऽविभक्तता ।
भेदे ज्ञाते हि सादृश्यं नाऽज्ञाते स्यात् खपुष्पवत् ॥५६॥
तथा द्विचन्द्रमायादावन्यथा ऽर्थे व्यवस्थिते ।
या स्यादाकारसंवित्तिर्नाऽसावर्थनिबन्धना ॥५७॥
नक्षत्रं तारका तिष्यो दारा इत्येवमादिषु ।
नैकत्राऽर्थे विरुद्धत्वाल्लिङ्गाऽनेकत्वसम्भवः ॥५८॥
परिव्राट्कामुकशुनां कुणपादिमतिस्तथा ।
'दीर्घह्रस्वत्वबुद्धिश्च ह्येकस्मिन्नप्यपेक्षया ॥५९॥

न्या०र०—ये त्वाहुः, द्वावपि ज्ञानाऽर्थौ पृथगेवाऽऽकारवन्तौ, तथापित्वत्यन्तसादृश्यादाकारविवेको नाऽवभासत इति; तान् प्रत्याह एवमिति । 'सादृश्यादविभक्तते' त्येतदप्येवमेव, द्वयोरनवधारणादेव नस्या[1]दिति । एतदेव विवृणोति भेदे इति ॥५६॥

इतश्च ज्ञानाऽऽकारत्वमित्याह तथेति । सर्वेष्वेव विभ्रमेष्वसत्यवाऽर्थे भासमानो नीलादिः कथमर्थधर्मः स्यादिति ॥५७॥

इतश्चैवमित्याह नक्षत्रमिति । अर्थधर्मत्वे हि तस्यैकत्वान्न विरुद्धलिङ्गसमावेशो घटतइति ॥५८॥

यच्चेदमेकस्यामेव प्रमदातनौ परिव्राजकादीनां कुणपं, कामिनी, भक्ष इति व्यवस्थितोपजननं विकल्पत्रयं, तदपि न स्यात् । वाह्यार्थो यद्येकाकारः तथैव सर्वैः प्रत्येतव्यः; अथ त्र्याकारः, तत्र त्रयाणामपि विकल्पत्रयं स्यात् । तदवश्यमात्मीयवासनानिर्मितैवैषा[2] विकल्पव्यवस्था ऽऽश्रयितव्या । तथा सर्वत्राऽस्त्वित्याह परिव्राडिति ।

इतश्च नाऽर्थाकार इत्याह दीर्घेति सार्द्धेन । अपेक्षाभेदादविरोधं ब्रुवाणस्योत्तरमप्यपेक्षयेति । सत्यप्यपेक्षाभेदे धर्मिण एकात्वान्नाऽनेका ऽऽकारसमावेशः सम्भवति, एकात्मकत्वात्, एकात्मकमेव ह्येकम्, अन्यथैकत्वहानाद्, नानात्वैकत्वयोर्विरोधात् । यथा ऽऽहुः—

[3]अन्यथैकत्वभावः स्यान्नानाऽऽकाराऽवभासिनः ।
तत्त्वे कथं स्युराकाराः नानैकत्वस्य हानितः ॥ इति ।

तेन युगपद्ग्राहकाणां पुरुषाणां नैकत्र दीर्घह्रस्ववृक्षत्वाद्यनेकाकारमतिः स्यात् । नानाकारत्वे च सर्वेषां सर्वप्रतीतिः स्यात् । न च देशकालापेक्षोद्भववशात्प्रभारूपस्पर्श-

---

१. न यायादिति पा, २. विचित्रविकल्पेति पा,
३. 'अन्यथैकस्य भावस्य ज्ञा (ना) नाकारावभासिनः । सत्यं' इतिपाठभेदः ।

'घटत्वपार्थिवद्रव्य'[1]प्रमेयादि मतिस्तथा ।
युगपद्ग्राहकाणाञ्च न '[3]स्यादैकात्म्यवत्तया' ॥६०॥
नाऽर्थे ह्येकत्र युगपद्विरुद्धाकारसम्भवः ।
प्रत्ययानां तु भिन्नत्वाद्भवेच्छक्त्यनुसारतः ॥६१॥
निरपेक्षं स्वरूपेण तस्माज् ज्ञानं यदाकृति ।
तथा ऽर्थो, न यथाऽर्थं तु ज्ञानमुत्पद्यते क्वचित् ॥६२॥
इत्थं विज्ञानतन्त्रत्वे को न्वर्थं कल्पयिष्यति ।
धीरनारोपिताऽऽकारा स्वात्मन्येवोपयोक्ष्यते ॥६३॥

न्या०र०—योरिव नक्तंदिवं ग्रहणाऽग्रहणव्यवस्था संभवति । युगपद् ग्राहकाणामेव कस्यचित् किञ्चिदाकाराऽवभासादिति ॥५९॥६०॥

ह्रस्वादीनां तु विरोधादप्यसमावेश इति आह **नार्थइति**। मत्पक्षे तु भिन्नाः प्रत्ययाः युक्तं यद्वासनाशक्त्यनुसारेण विरुद्धानविरुद्धांश्च बहूनाकारान् भजन्तइत्याह **प्रत्ययानामिति** ॥६१॥

तस्मादर्थाऽनपेक्षमेव यादृशं नीलाऽऽकारं पीताकारं वा ज्ञानमुत्पन्नं यदि तदनुसारेणाऽर्थो ऽभ्युपगन्तुं शक्यते, ततोऽस्तु नाम, नत्वर्थाऽनुसारि ज्ञानम् । नीलाद्याकारत्वं ज्ञानस्य नार्थाऽधीनमिति यावत् । तदाह **निरपेक्षमिति** ॥६२॥

भवतु तर्हि तदनुसार्येवाऽर्थः, अत आह **इत्थमिति**। नीलाद्याकारे ह्यर्थाऽधीने स्यादर्थसिद्धिः, स्वतन्त्रे तु ज्ञाने को नामाऽर्थं कल्पयेदर्थाऽनारोपिताऽऽकारैव धीरद्वितीयाऽर्थशून्या स्वात्मन्येव पर्यवस्यतीति ॥६३॥

अत्र प्रतिविधत्ते **नैतदस्तीति**। यदेतद्भवतोक्तम्, एकमेव ज्ञानं ग्राह्यं ग्राहकं चेति, तत्किं क्रियाकर्मत्वाभिप्रायम्, उत करणकर्मत्वाऽभिप्रायम् । आहोस्वित् कर्तृकर्मत्वाभिप्रायम् ? सर्वथा न संभवति । न तावत्क्रियाया एव कर्मत्वं संभवति, न हि पाकः पच्यते, छिदा वा छिद्यते । नापि करणकर्मत्वं कर्तृकर्मत्वं वा एकस्य सम्भवति, न ह्यङ्गुल्यग्रेणैवाऽङ्गुल्यग्रं स्पृशति, तेनाऽऽसां विधानां दृष्टान्ते क्वचिदप्यदर्शनात् ज्ञाने ऽपि नास्ति सम्भवः । अथ स्वप्रकाशत्वमनेन प्रकारेणोच्यते, ज्ञानं हि स्वयमेव प्रकाशते नाऽन्यमपेक्षते इति, न पुनः कर्मत्वमपीति । कस्य प्रकाशते ? न तावदन्यः पुमानस्ति । तत्र स्वयमेव

१. 'घटत्वात् पार्थिवद्रव्य' क, २. 'संज्ञेयादि' ख, 'सज्ज्ञेयादि' ग,
३. 'स्यादेकार्थवत्तया' ख

श्लो०वा०—नैतदस्ति, 'त्वयैकं हि ग्राह्यं ग्राहकमिष्यते ।
न चैकस्यैवमात्मत्वे दृष्टान्तः कश्चिदस्ति ते ॥६४॥
अग्न्यादयो घटादीनां प्रसिद्धा ये प्रकाशकाः ।
न ते प्रकाश्यरूपा हि प्रकाशस्याऽनपेक्षणात् ॥६५॥
ग्राह्यत्वं तु यदा तेषां तदाऽक्षं ग्राहकं मतम् ।
अक्षग्रहणकाले[2] तु ग्राहिका धीर्भविष्यति ॥६६॥
तस्यां तु गृह्यमाणायामन्या धीर्ग्राहिकेष्यते ।
नन्वात्मा ग्राहको ग्राह्यो भवताऽभ्युपगम्यते ॥६७॥
कथंचिद्धर्मरूपेण भिन्नत्वात् प्रत्ययस्य [3]तत् ।
ग्राहकत्वं भवेत्तत्र ग्राह्यं द्रव्यादि चात्मनः ॥६८॥

न्या०र०—प्रकाशमानमहं नीलमिति प्रत्यगात्मवृत्ति स्यात् । इदं नीलमिति तु पराग्वृत्ति ज्ञानमुत्पद्यते, अतो नैकस्य ग्राह्यग्राहकतेति ॥६४॥

ननु अग्न्यादीनां स्वयमेव प्रकाश्यप्रकाशकता दृष्टा अत आह **अग्न्यादय इति** स्या-ऽन्तेन । येऽग्न्यादयः प्रकाशकाः प्रसिद्धाः ते घटादीनां, न प्रकाशात्मनः स्वरूपस्य प्रकाशकाः । न प्रकाश्या इत्यर्थः । कथमित्याह **अनपेक्षणादिति** । यद् घटादीनामेवाऽऽलोकापेक्षा नालोकस्येति ॥६५॥

केन तर्हि ते गृह्यन्तेऽत आह **ग्राह्यत्वमिति** । तस्य तर्हि केन ग्रहणम्, अत आह **अक्षेति** । अर्थापत्तिरूपा अनुमानरूपा वा धीरक्षस्य ग्राहिकेति ॥६६॥

तस्यास्तर्हि केन ग्रहणमतआह **तस्यामिति** । साऽपि ह्यर्थापत्त्याऽनुमानेन वा गृह्यते, यथा वक्ष्यति 'नाऽन्यथा ह्यर्थसद्भाव' इति । भाष्यकारोऽपि "ज्ञाते त्वनुमानादवगच्छती"[4]ति । चोदयति **नन्विति** । कर्तृकर्मत्वं भवताऽप्येकस्याऽभ्युपगतमिति ॥६७॥

परिहरति **कथंचिदिति** । ज्ञानस्य ज्ञेयान्न कथंचिद्भेदोऽस्ति तव, मम तु स्वरूपेणैको-ऽप्यात्मा धर्मरूपेण कथंचिद्भिन्नः, तदस्य ज्ञानरूपेण ग्राहकत्वं द्रव्यादिरूपेण ग्राह्यत्वमिति न ग्राह्यग्राहकयोरेकत्वमिति ॥६८॥

---

१. 'त्वयैवैकं'—क, २. 'वेलायां'—ख, ३. 'यत्'—क,
४. उत्पद्यमानैवासौ (बुद्धिः) ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति यद्युच्यते, तन्न । नह्यज्ञातेऽर्थेकश्चित् बुद्धिमुपलभते । ज्ञाते त्वनुमानादवगच्छति । (शा० भा० १.१.५ शू० ख) ।

श्लो०वा०—यस्तु नाऽत्यन्तभेदोऽत्र क्व वाऽसाविष्यते मया।
प्रत्यासत्तिनिमित्ता तु प्रत्यगात्मप्रवर्त्तिता[1] ॥६९॥
अस्मत्प्रयोगसम्भिन्ना ज्ञानस्यैव तु[2] कर्तरि।
भवन्ती तत्र संवित्तिर्युज्येताऽप्यात्मकर्तृका ॥७०॥
न [3]चाऽत्र करणज्ञानग्राहकाऽऽकारवेदनम्।
ग्राह्यत्वं येन बुद्धेः स्यादभिन्नत्वेऽपि पूर्ववत् ॥७१॥
[4]अन्यरूपाऽपि संवित्तिर्यद्यन्यविषयेष्यते।
ज्ञानाकाराऽपि संवित्तिः कस्मान्ना[5]ऽर्थस्य कल्प्यते ॥७२॥

न्या०र०—नन्वेवमप्यत्यन्तभेदो ग्राह्यग्राहकयोर्न स्याद्धर्मिरूपस्यैकत्वादत आह यस्त्विति। न क्वचिदप्यत्यन्तभेदोऽस्ति, सर्वत्र प्रमेयत्वाद्यभेदादिति। यद्यत्रापि ग्राह्यग्राहकयोर्भेदः, कथं तर्ह्यात्मवादे भाष्यकारेण "प्रत्यगात्मनि च तद्भवती"ति प्रत्यग्वृत्तित्वमहम्प्रत्ययस्योक्तम्? अत आह प्रत्यासत्तीति। न हि ज्ञानमात्रं ग्राहकं, किन्तु तद्विशिष्टो धर्मी, स एवाहंबुद्ध्या द्रव्यादिरूपेण गृह्यते न द्रव्यादिमात्रम्। तेनोपाधिभेदेऽप्युपहितस्य कर्त्तुः कर्मणश्च प्रत्यासत्तेरेकत्वाद् युक्तं प्रत्यगात्मवृत्तित्वं, भेदश्च कियानप्यस्ति न सर्वात्मनैकत्वमिति ॥६९॥

यद्यपि सर्वात्मनैक्यं तथापि न दोष इत्याह अस्मत्प्रयोगेति। अस्मत्प्रयोगसंभिन्नाऽहमिति संवित् स्वयमात्मकर्तृकाऽपि सती ज्ञानकर्तर्यात्मन्येव भवतीति[6] तत्र युज्यते प्रतिभासबलादस्मदर्थ एव हि ज्ञाता तत्र प्रतिभासते नान्य इति ॥७०॥

ज्ञानस्य तु नावभासोऽस्तीत्याह न चेति। ज्ञानं हि करणं, क्रिया, कर्ता वा? न च नीलमित्यत्र त्रयाणामन्यतममपि प्रकाशते, ग्राह्यरूपस्य नीलमात्रस्य वेदनात्। अतो न पूर्ववदात्मवत् ज्ञानस्य ग्राह्यत्वम्। ज्ञानशब्देन च क्रियारूपमुच्यत इति ॥७१॥

यदि तु ग्राह्यमात्रावभासापि संवित्तिर्ज्ञानगोचरेत्युच्यते ततो यथेष्टकल्पनायां ज्ञानाभासाप्यर्थगोचरा शक्या कल्पयितुमित्याह अन्येति।

यदा च ग्राह्यमात्रमेव भासते न क्रिया कर्ता वा, तदा ये सर्ववित्तिषु त्रितयप्रतिभासमाहुस्ते निरस्ताः। यस्तु नीलमहं जानामीति प्रतिभासः स नीले ज्ञाते पश्चादा-

1. 'प्रवृत्तिता'—क,　　2. 'च'—ख,
3. 'ख'—ख,　　4. 'अन्याकारापि'—ख,　　5. 'थैंबु'—क,
6. नैतदेवम्। अन्येद्युर्दृष्टेऽपरेद्युरहमिदमदर्शमिति भवति प्रत्ययः। प्रत्यगात्मनि चैतद् भवति न परत्र (शा० भा० १. १. ५)।　　7. भवन्ती प्रयुज्यते इति पाठः।

श्लो०वा०—अभिन्नत्वं यदा चेष्टं ग्राह्यग्राहकवस्तुनोः ।
तदाऽन्यतरसंवित्तौ [1]द्व्याकारं ग्रहणं भवेत् ॥७३॥]
यदा तु ग्राह्यमाकारं नीलादि प्रतिपद्यते ।
न तदा ग्राहकाऽऽकारा संवित्तिर्दृश्यते क्वचित् ॥७४॥
तस्मादभिन्नता चेत् स्यात् तस्याऽप्यनुभवो भवेत् ।
ग्राह्यो वा नाऽनुभूयेत ग्राहकाऽननुभूतिवत् ॥७५॥
ग्राहकग्रहणेऽप्येवं ग्राह्यसंवेदनं भवेत् ।
शुद्धमेव निराकारं ग्राहकं [2]संविदस्ति हि ॥७६॥
ग्राह्यादभिन्नतायां च सा संवित्तिर्न युज्यते ।
ग्राहको वा न गृह्येत तद्ग्राह्याऽननुभूतिवत् ॥७७॥
[3]यथावद् ग्राह्यसंवित्तौ ग्राहकग्रहणेऽपि वा ।
ग्राह्यग्राहकसंवित्तिर्नास्त्येव स्याद् द्वयोरपि ॥७८॥

न्या०र०—नुमानिकः, न तु नीलवित्तिरेवैवंविधेति विभ्रमितव्यम् । एवं च सहोपलम्भस्यैवाऽभावात्तन्नियमो दुरुपपाद इति 'सहोपलम्भनियमादभेदो नीलतद्धियो'रित्येतदपि परोक्तं निरस्तम् । तस्माद्भिन्नमेव ग्राह्यं ग्राहकादिति ॥७२॥

इतश्चैवमित्याह अभिन्नत्वमिति ॥७३॥

न त्वेतदस्तीति व्यतिरेकेण दर्शयन् ग्राह्यसंवित्तौ तावद्ग्राहकसंवित्तिर्नास्तीत्याह यदा त्विति ॥७४॥

ग्राहकादभिन्नत्वे च ग्राह्यस्य तदनुभववेलायां ग्राहकोऽप्यनुभूयेत, तद्वदेव वा ग्राह्योऽपि नानुभूयेत, न ह्येकस्य युगपद्ग्रहणमग्रहणं च सम्भवतीत्याह तस्मादिति ॥७५॥

एवं ग्राहकसंवित्तावपि ग्राह्यसंवित्तिः स्यान्न तु तथाप्यस्तीत्याह ग्राहकेति ॥७६॥

ग्राह्यादभिन्नत्वे च तद्रहिता संवित्तिर्न स्यात्, ग्राह्यमपि संवेद्येत तद्वदेव वा ग्राहकोऽपि न संवेद्येतेत्याह ग्राह्यादिति ॥७७॥

एवं प्रत्येकमेकाग्रहणे परस्याप्यग्रहणमापाद्य द्वयोरपि समाहृत्य दर्शयति यथेति ॥७८॥

---

१. 'द्व्याकारग्रहणं'—ख,
२. 'संविदन्त'—क, ३. यथा च'—ख, 'तथा च'—क,

श्लो०वा०—स बहिर्देशसंबद्ध इत्यनेन निरूप्यते ।
ग्राह्याऽऽकारस्य संवित्तिर्ग्राहकाऽनुभवाद्दते ॥७९॥
परं प्रति[1]तु साध्यत्वादर्थस्याऽऽकारसिद्धये ।
बहिर्देशेन सम्बन्धो न हेतुत्वाय कल्पते ॥८०॥
तस्माद्बहिरितीहेदं निष्कृष्टं ग्राहकांशतः ।
संवेद्यं नील[2]पीतादि प्रत्यक्षादेरुदाहृतम् ॥८१॥
न पूर्वं ज्ञायते बुद्धिरित्यत्रैतद्वदिष्यते ।
ग्राहकस्यैव संवित्तिर्लक्ष्यते ग्रहणे क्वचित् ॥८२॥
न स्मरामि मया कोऽपि गृहीतोऽर्थस्तदेति हि ।
स्मरन्ति ग्राहकोत्पा[3]दग्राह्यरूपविवर्जितम् ॥८३॥

न्या०र०—उक्तेऽर्थे भाष्यं[4]योजयति स बहिर्देशेति ॥७९॥

केचित्त्वर्थाकारत्वे नीलादेर्बहिर्देशसम्बन्धित्वं हेतुरुच्यत इति व्याचक्षते, बहिर्देशसम्बद्धो ह्याकारः कथमान्तरस्य ज्ञानस्य स्यादिति । तत्तु न युक्तमित्याह परं प्रतीति । न बहिर्देशस्तत्सम्बन्धो वा परस्य सिद्धः कथमसौ हेतुरिति ॥८०॥

तस्मात्पूर्वोक्त एव भाष्यार्थ इत्याह तस्मादिति । बहिरित्यत्र भाष्ये इदमित्येवमिदंकारेण ग्राहकान्निष्कृष्टमेव प्रत्यक्षादेः प्रमाणस्य ग्राह्यं नीलपीताद्युदाहृतम् । अयञ्च भाष्यार्थः । स एव हि नीलाद्याकारो बहिर्देशसम्बद्धो ग्राहकान्निष्कृष्टः प्रतीयते न बुद्धिरिति ॥८१॥

ग्राह्यनिर्मुक्तस्य ग्राहकस्य संवित्तिः "सत्यं, पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायते, भवति हि कदाचिदेतत् यज्ज्ञातोऽप्यर्थः सन्न ज्ञात इति उच्यते" इत्यत्र भाष्ये वक्ष्यते इत्याह न पूर्वमिति ॥८२॥

क्व लक्ष्यतेऽत आह न स्मरामीति । ज्ञातो मया वसन्तेऽस्मिन् देशे कोऽपि पुरुषः सम्प्रति विस्मृतवानस्मीति पूर्वत्र[5]ग्राह्ये देवदत्ते स्मृतावप्रतिभासमानेऽपि तद्गोचरं ज्ञानं प्रतिभासत इति ॥८३॥

---

१. 'न'—क, २. मित्यादि'—क, ३. 'पादं'—ख,
४. निराकारा तु नो बुद्धिः । आकारवान्बाह्योऽर्थः । स हि बहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यते । ( शा. भा. १. १. ५ शू. वा. खं. ) ।
५. "पूर्वत्राऽग्राह्ये" इति "पूर्वज्ञानग्राह्ये" इति च पा० ।

श्लो०वा०—£तत्रापि स्मृतिरित्येतन्न लोकाऽनु[1]मतं वचः ।
न हि विज्ञानसन्तानं कश्चित् स्मरति लौकिकः ॥१८९॥
'घटादा[2]वगृहीते ऽर्थे यदि तावदनन्तरम् ।
अर्थापत्त्या ऽवबुध्यन्ते विज्ञानानि पुनः पुनः ॥१९०॥
याव[3]च्छ्रमं ततः पश्चात्ता[4]वत्येव स्मरिष्यति' ।
तदा [5]त्वकल्पिते ऽप्येवं स्मृतिर्वन्ध्यासुतादिवत् ॥१९१॥
○स्मृतिभ्रान्तिश्च या ऽप्यत्र पश्चाज्ज्ञानेषु जायते ।

न्या०र०—परिहरति तत्राऽपीति ॥१८९॥

यदेतत्त्वयोक्तं 'तत्रापि हि स्मृति' रिति, तत्किं वीप्साऽभिप्रायं तत्र तत्र स्मृतिरिति, किं वा प्रथमज्ञानमात्राऽभिप्रायम्; प्रथमपक्षस्तावल्लोकविरुद्ध इति । कथमित्यत आह न हीति । यदि तु कश्चित्कदा चिदेवं ज्ञानप्रवाहं स्मरेत्, ततस्तस्य कथं निर्वाहो, ऽत आह घटादाविति सार्द्धेन ॥१९०॥

यो नाम घटज्ञानसमये तज्ज्ञानमप्यर्थापत्त्या कल्पयति तस्य संभवति स्मरणं, तत्रापि तु नाऽनवस्था यावच्छ्रमग्रहणात्, यावद्ग्रहणं च स्मरणादिति । यस्तु प्राग् ज्ञानप्रबन्धमकल्पयित्वैव पश्चात्स्मरति स वन्ध्यासुतमपि स्मरेदित्याह तदा त्विति ॥१९१॥

१. 'नुगतं'—ख, २. 'दौ च'—ख, ३. 'च्छ्रमं—ख,
४. 'तावन्त्येव'—ख, ५. 'त्यक'—क,

£ एवमनुभाषिते, दूषणमाह—तत्रापीति । यदेतदुच्यते तत्र तत्र स्मरणदर्शनेन सर्वत्राऽनुभवकल्पनायामनवस्थेति, तदयुक्तम् । स्मृत्यसिद्धेः । गृहीतविषयाहि स्मृतिर्भवतीति नागृहीतं ज्ञानं स्मर्तुं शक्यम् । गृहीतस्मरणे तु यावद्ग्रहणमेव स्मरणव्यवस्थानान्नानवस्थेति । भवति हि कदाचिदेतद् द्वित्राणि ज्ञानान्यनुभूतपूर्वाणि स्मर्यन्त इति । विज्ञानसन्तानस्मरणं त्वलौकिकमेवेति ।

○ यत्तु भिक्षुणा सिद्धवत् तत्रापि स्मृतिरित्युक्तं, तद् भ्रान्तभाषितमेव । अस्ति च भ्रान्तौ निबन्धनम् अर्थो हि तत्र स्मर्यते, तत्स्मरणान्यथानुपपत्त्या च तस्य प्राग् ज्ञातत्वमेव कल्प्यते, ततोऽ पि प्राचीनज्ञानकल्पना । तदिह संसर्गमोहितधियां ज्ञानेऽ पि स्मृतिविभ्रमः । नत्वाद्यज्ञानस्मरणमप्याशङ्क्यम् ! प्रागेव सन्तानस्मरणं, तदेतदाह—स्मृति भ्रान्तिरिति । अर्थस्मृतेः खल्वियं तज्ज्ञानादिप्रमाणता विलसति, यदेतज्ज्ञानेऽपि स्मृतिभ्रमो भवति । अर्थस्मृत्या हि ज्ञाने प्रमीयमाणे स्मृतिविषयार्थसन्निकर्षाद् ज्ञानेऽपि स्मरणमिति भ्राम्यति । आदिशब्देन चात्र ज्ञानज्ञानमुपादीयत इति ।

श्लो०वा०—तदैवाऽर्थस्मृतेरेषां तज्ज्ञानादिप्रमाणता ॥१९२॥

*याव²च्छ्रमं च तद्बुद्धिस्तत्प्रबन्धे ³महत्यपि ।

⁴श्रमाद्रुच्या ऽन्यसंपर्काद्विच्छेदो विषयेष्विव ॥१९३॥

⊙तत्रापि स्मृतिरित्येषा प्रथमे प्रत्यये यदि ।

तन्मात्रग्रहणा⁵देवं नाऽनवस्था प्रसज्यते ॥१९४॥

न्या०र०—ननु न ब्रूमो ज्ञानप्रबन्धस्य ग्रहणं स्मरणं वा, किं त्ववश्यमुत्पत्तावेव ज्ञानं ग्रहीतव्यं पश्चात्स्मृतिदर्शनात्, तदेवं सति यदि ज्ञानान्तरेण गृह्येत ततस्तस्याऽपि ज्ञानस्वाभाव्येनोत्पत्तावेव ग्रहीतव्यस्य ज्ञानान्तराऽपेक्षणादनवस्थेति, तत्राह स्मृतीति ॥१९२॥

स्यादेवं, यदि पश्चाज्ज्ञाने स्मृतिः स्यान्न त्वेवम्, अर्थ एव हि तदा स्मर्यते, ज्ञानं तु तदैव प्रतीयते£, स्मरणाऽनुपपत्तेरित्युक्तम् । या त्वियं भवतो ज्ञाने ऽपि स्मृतिः, भ्रान्तिरेषा, ऽर्थस्मरणेन हि संनिकर्षात् ज्ञाने ऽपि स्मृतिभ्रमः; परमार्थतस्तु घटज्ञानं⊙ तज्ज्ञानादौ प्रमाणं पश्चात्त्वस्य ज्ञानविषयत्वं यस्य ज्ञानस्य तत्स्मृतिरेवेति; तथापि ग्रहणस्मरणप्रबन्धे यावच्छ्रमं तद्बुद्धौ नाऽनवस्थेत्युक्तम्, अतो यदेकविषयज्ञानप्रवाहकल्पनायामेवाऽऽयुःपर्यवसानाद् विषयान्तरसंचारो न स्यादित्युक्तं 'विषयान्तरसंचारस्तथा न स्यात्स चेष्यत' (प्र.वा.२।५२०) इति, तदयुक्तमित्याह यावच्छ्रममिति ॥१९३॥

यथैकस्मिन्विषये चक्षुषा घटादावनुभूयमाने श्रमाद्, रुच्या, विषयान्तरसंसर्गाद्वा पूर्वविषये विच्छेदो भवति तद्वज्ज्ञानकल्पनाविच्छेद इति ।

यदि तु तत्रापि स्मृतिरिति येयं स्मृतिः सा प्रथमज्ञानमात्राऽभिप्राया न वीप्साऽभिप्राया, ततो नास्त्येवाऽनवस्थेत्याह तत्रापीति ॥१९४॥

---

१. 'रेषा'—ग,    २. 'च्छ्रमं'—क,    ३. 'च सत्यपि'—ख,

४. 'श्रमाद्वाप्यन्य'—ख,    ५. 'देव'—क,

* यावच्छ्रमं तावद् बुद्धयो ज्ञायन्ते, ततो महत्यपि बुद्धिप्रबन्धे ज्ञाते श्रमाद् वा विषयान्तराभिलाषेण वान्यसंपर्काद् बुद्धिज्ञानाद् विच्छेदो भवति । यथा विषयेष्वेव रमणीयेषु गीतादिष्वनुभूयमानेषु विषयान्तराभिलाषात् पूर्वविषयविच्छेदो भवतीत्यनुपपन्नं विषयान्तरसञ्चारो न स्यात् ।

⊙ किञ्च यदेतदुक्तं तत्रापि च स्मृतिरिति, तत् किं प्रथमज्ञानाभिप्रायेण, उत तत्र तत्रेति वीप्सामभिप्रेत्य । पूर्वस्मिन् कल्पे नानवस्था । एको हि प्रथमः प्रत्ययः । अतः का तद्ग्रहणे ऽनवस्था, तदेतदाह—तत्रेति ।

£ प्रमीयते इति पा० ।

⊙ घटस्मरणमिति क्व चित् पाठः ।

श्लो०वा०—स्मरणं त्वथ सर्वेषु [1]तत्सिद्ध्यै ग्रहणं तथा।
प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते ॥१९५॥
अथ तान्याद्यविज्ञानविषयाणीति कल्प्यते।
नोत्तरोत्तरबुद्धीनां विशेष उपपद्यते ॥१९६॥
*विज्ञानविषयत्वं च यस्य सर्वासु बुद्धिषु।
[2]घटविज्ञानतज्ज्ञानविशेषस्तेन दुर्लभः ॥१९७॥
स्मरन् यथैव विज्ञानं निराकारं स्मरत्ययम्।
तथा स्मरन् गृ[3]हीतार्थं निराकारतया स्मरेत् ॥१९८॥

न्या०र०—यदि त्वस्त्येवाऽनन्तरज्ञानस्मरणं तथा सति तत्सिद्धये ग्रहणान्यप्यनन्तानि अवश्यंभावीनीति प्रमाणवलसिद्धो ऽनवस्थाप्रवाहः केन वार्यत इत्याह स्मरणमिति ॥१९५॥

अथाऽनन्तान्यपि स्मरणानि आद्यविज्ञानविषयाण्येव, तेन नाऽस्माकं कदा चिदनवस्थेत्युच्यते, तत्राह अथेति ॥१९६॥

घटज्ञानतज्ज्ञानादिविषयतया विशिष्टरूपाः स्मृतिबुद्धयः कथमेकविषया भवेयुः, अतः स्मृतिबहुत्ववदवश्यं ग्रहणबहुत्वमपि कल्प्यं, तद्भावादेव तु नाऽनवस्थेति।

इतश्च न ज्ञानविषयत्वं बुद्धीनामित्याह विज्ञानेति ॥१९७॥

घटज्ञानमपि ज्ञानविषयं तज्ज्ञानमपि तथेति को ऽनयोर्विशेषः। ननु विषयाकारभेदाद्विशेषः, प्रथमज्ञानस्य घटो विषयः, तत्तज्ज्ञानस्य तत्तज्ज्ञान£मित्येवं न विज्ञानाकारादन्यो विषयाकारः, अन्यत्वे त्वात्मग्राहिता ज्ञानस्य न स्यात्, अतो ज्ञानस्याऽतिरेकेण विषयाकाराऽभावात् सर्वेषां ज्ञानाकारत्वाद् विषयज्ञानतज्ज्ञानविशेषो न सिध्यतीति विपरीतप्रसङ्गाऽऽपादनमिति। एवं चाऽयमप्यपरो दोष इत्याह स्मरन्निति ॥१९८॥

यदा हि घटज्ञाने ऽपि घटाकारस्याऽभावाज् ज्ञानाकारमात्रमेवाऽनुभूतं तदा यथैवाऽयं न स्मरामि मया को ऽपि गृहीतो ऽर्थ इत्येवं घटाकारनिर्मुक्तं ज्ञानमेव निराकारं स्मरति तथैवार्थमप्यनुभूतं स्मरन् निराकारमेव स्मरेदिति।

---

१. 'तत्सिद्धया'—ख, २. 'विषयज्ञान'—ख, ३. 'गृहीत्वार्थं'—ख,

* यस्य सर्वा बुद्धयो विज्ञानविषयाः, तस्य घटज्ञानं घटज्ञानज्ञानं वा विज्ञानविषयत्वान्न भिद्यते इति।

£ तत्तु ज्ञानस्य तत्तु ज्ञानमिति पा०।

श्लो०वा०—ज्ञानपृष्ठेन यो ऽप्यूर्ध्वं परामर्शो भवत्यसौ ।
तस्याऽर्थेष्वभ्युपायत्वान्न तु[1] ग्राह्यत्वकारितः ॥१९९॥
प्रत्यासन्नत्व[2]सम्बन्धौ ग्राह्य[3]त्वाऽसंभवाच्च्युतौ ।
विषयत्वेन वा ऽप्येतौ स्तः किं देशाऽविभागतः ॥२००॥
*अर्थाऽऽकारस्य यो ऽप्युक्तो मिथ्याज्ञानेष्वसंभवः ।

न्या०र०—यत्तु ज्ञानपृष्ठेनोर्ध्वं परामृश्य परस्मै कथनादनुभवो ऽपि तथैवेत्युक्तं, तदनुभाष्य परिहरति ज्ञानपृष्ठेनेति ॥१९९॥

विषयमात्रे चाऽनुभूते भवत्येवैवं परामर्शः; स हि तदानीं परस्मै कथयन्नर्थं स्मृत्वा तद्विषयं ज्ञानं तदैव प्रमाय कथ्यमानस्याऽर्थस्य ज्ञानोपायत्वात्तत्प्रमाणकत्वात् तत्पुरःसरमेव कथयितुं ज्ञानपृष्ठेना△ऽनुभवादिति ।

यत्तूक्तं, संवेदनान्नीलं न भिन्नं, न ह्यनात्मनः संवेदनं संभवति, नीलवित्तौ पीतवत्, संबन्धाऽभावाच्च ग्राह्यलक्षणमपि न युज्यते, मम तु प्रत्यासन्नं तदात्मभूतम्, अत एव च सम्बन्धं ग्राह्यं भवतीति; तत्राह प्रत्यासन्नत्वेति ॥२००॥

द्वयमप्येतदेवाऽऽत्मनो यथोक्तेन न्यायेन ग्रहणाऽसंभवादेव£ भ्रष्टम्, अतो बलादनात्मनो ऽसंबद्धस्यैव च ग्रहणमुपेतव्यमिति । यद्वा तादात्म्याऽभावे ऽपि विषयविषयिभावादेव ज्ञानाऽर्थयोः प्रत्यासत्तिसम्बन्धौ सिद्धयत इत्याह विषयत्वेनेति । देशो, विभागः,

---

१. 'तद्'—ख, २. 'सम्बद्धौ'—ख, ३. 'स्या'—ख,

* योऽयं द्विचन्द्रादिबोधेषु अर्थाकारा ऽसंभव उक्तः, सो ऽयुक्तः । तथाहि—सम्यग्ज्ञानेषु तावन्नार्थाकाराऽसंभवः । केषुचित्तु मिथ्याज्ञानेषु देशान्यथात्वमात्रेण कालान्यथात्वमात्रेण वा अर्थाकारसंभवोऽस्माभि र्निरालम्बनवादे वर्णितः । अतो न क्वचिदर्थाकारासंभवः, तत् पुनरिदं प्रतिभासविपरीतमभिधीयते । देशान्तरादिस्थोऽर्थो भासते, अन्यत्र स्थितश्चार्थोऽन्यत्रालम्ब्यत इति संविदनुसारेण हि भवन्तो बहिरर्थमवस्थापयन्ति । सा च देशान्तरादिगोचरा कथमन्यत्रार्थमालम्बत इति शक्यते वक्तुम् । एवं हि स्वांशालम्बनत्वेन किमपराद्धं, येन तन्निराक्रियते । मैवम्—उक्तमस्माभिर्निरालम्बनवाद एव बाधकानुसारिणी हि मिथ्यात्वकल्पना । बाधकं च देशादिसंसर्गमेव वारयति, नहि बहिर्वस्तुसत्ताम् । तद्धि न द्वौ चन्द्राविति चन्द्रद्वित्वं निषेधति, न द्वित्वं चन्द्रं वेति कथं तौ बहिर्भासमानावपहास्यामः । अतो नेह संविद्विपरीतं किञ्चिदिति ।

△ कथयति ननु ज्ञानपृष्ठेनेति पा० ।

£ ग्रहणसंभवादेवेति पा० ।

श्लो०वा०—देशकालाऽन्यथामात्रसंभवः क्वेषु चित् कृतः ॥२०१॥
*प्रत्यक्षादन्यविज्ञानमतीताऽनागतैरपि ।
जन्यते ऽर्थे भवन्तीषु वासना[1]स्वसतीषु वा ॥२०२॥
यः पुनर्नाऽनुभूतो ऽर्थो न वा ऽप्यनुभविष्यते ।
वासनाऽभावतस्तत्र तवाप्यनुभवः कथम् ॥२०३॥
£विना[2] ऽपि वासनातश्चेद्बुद्धिरुत्पद्यते ततः ।
वासनाया निमित्तत्वमभ्युपेतं [3]विरुध्यते ॥२०४॥

न्या०र०—तादात्म्यं, विषयत्वं च ज्ञानफलभागित्वं, तदेव च ग्राह्यलक्षणं, नान्यत्संभवतीति शास्त्रदीपिकायाम् उपपादितम् । ज्ञानं हि स्वकारणवशादर्थविषयफलजनकस्वभावमुत्पद्यतइति न किंचिदनुपपन्नमिति ।

अत्र पूर्वोक्तमनुभाष्य परिहरति अर्थाऽऽकारस्येति ॥२०१॥

केषु चित्तावद् बुद्धिभ्रमेषु देशकालाऽन्यथाभावमात्रेण बाह्याऽर्थसद्भावो निरालम्बनवादे वर्णित इति । कथमसंनिहितमवर्त्तमानं च ज्ञानं जनयेत्, इदमपि तत्रैव दत्तोत्तरम् 'एष प्रत्यक्षधर्मः' इत्यत्रेत्याह प्रत्यक्षादिति ॥२०२॥

भवन्तीषु वासनासु स्मृत्यात्मकं स्वप्नादिज्ञानमनागताऽनुमानादि च सतीष्वेव लिङ्गादिवशादिति ।

ननु क्वचिदनुभूतं स्वप्ने गृह्यते, ऽत आह यः पुनरिति ॥२०३॥

तुल्यो ऽयं दोषस्तवाऽपि, वासनाधीनत्वादाकाराणाम्; अननुभूते च वासनाऽसंभवादिति । विना ऽपि वासनया तदाकारबुद्ध्यङ्गीकरणे पूर्वाऽभ्युपगमविरोध इत्याह विना ऽपीति ॥२०४॥

---

१. 'सु सतीषु'—ख, २. 'विनैव'—ख,
३. 'विहन्यते'—ख,

* कथमतीता अर्था असन्तो ज्ञानावलम्बनमिति । उक्तं हि प्रत्यक्षधर्मो वर्तमानसन्निहितविषयता ज्ञानान्तराणां नेति निरालम्बन एव, तदेतदाह—प्रत्यक्षादिति । यत्तावल्लैङ्गिकमतीतादिगोचरं ज्ञानं तत् प्रत्युत्पन्नलिङ्गादिजनकमसतीष्वेव वासनासु भवति । यस्त्वन्यज्जाग्रत्स्मृतिज्ञानं स्वप्नज्ञानं वा, तद् भवन्तीषु वासनासु भवति प्रत्युत्पन्नकारणान्तराभावात् ।

£ यदि तु अनादृत्यैव वासनां ज्ञानोत्पत्तिराश्रीयते, एवन्तर्हि यच्चिरन्तनै बौद्धैर्वासनायां निमित्तत्वमाश्रितं तद् विरुध्यत इत्याह—विनेति ।

श्लो०वा०—ꕤवासना चेद्भवे¹त्तत्र सा च संवित्तिपूर्विका।
तथा सति च पूर्वत्र गृहीतः क्वाप्यसौ ध्रुवम् ॥२०५॥
एवं च नैव वक्तव्यमत्यन्त²भवनं क्वचित्।
अन्यथाऽनुपपत्त्या हि सिद्धा जन्मान्तरेऽस्तिता ॥२०६॥
£दुष्टत्वेन च विज्ञानमन्यथाऽपि व्यवस्थितम्।
पृथिव्यादिषु गृह्णीयादाकारं तन्निबन्धनम् ॥२०७॥

न्या०र०—वासनाऽभ्युपगमे तस्या पूर्वाऽनुभवपूर्वकत्वाद् ध्रुवम् असावर्थः क्वापि देशे काले चाऽनुभूत इत्यभ्युपगन्तव्यमित्याह वासना चेदिति ॥२०५॥

एवं च न क्वचिदपि ज्ञाने ऽर्थस्यात्यन्ताऽसत्त्वं वक्तव्यमित्याह एवं चेति ॥२०६॥

किं पुनस्तस्य सद्भावे प्रमाणं, न हि दोषतुल्यतया ऽर्थसिद्धिरत आह अन्यथेति। स्वप्नज्ञानं तावत् प्रत्युत्पन्नकारणाऽभावादनन्तरदिवसाऽनुभूतस्य च स्वप्ने वर्त्तमानवदाभासात् संस्कारमात्रजं स्मरणमेव, अतएव यदप्यस्मिन् जन्मन्यननुभूतं स्वप्ने ऽनुभूयते तस्याऽप्यन्यथाऽनुपपत्त्या जन्मान्तरे ऽनुभवकल्पनात्सिद्धमस्तित्वमिति ॥२०६॥

ननु बाह्यं चेद्वस्तु स्याद् यथाव्यवस्थितमेव ग्रहीतव्यम्, अन्यथाग्रहणे न किंचित्कारणम्; अतो ऽन्यथाकल्पनानिबन्धन मेवाऽयमाकारो ज्ञानाकारो वा न बाह्य* इत्यत आह दुष्टत्वेनेति ॥२०७॥

---

१. 'दत्र'—ख, २. न्ताभवनं'—ख,

ꕤ तत्रापि तु वासनाभ्युपगमे तस्याः संवित्कारणत्वादसावननुभूतो ऽप्यर्थं इह जन्मनि क्वापि जन्मान्तरादौ अनुभूत इत्यभ्युपेय इत्याह वासनेति।

£ यदा न कथञ्चित् स्वसंवेदनं ज्ञानमित्युक्तं तदा य एवैते पृथिव्यादयोऽर्था बहिरवस्थिता गृह्यन्ते, तेष्वेव कुतश्चित् कारणदोषाद् दुष्टं विज्ञानमन्यथास्थितमाकारं गृह्णाति। अदुष्टं तु यथावस्थितम्। न क्वचिदपि ज्ञानाकारानुभवः। तन्निबन्धनमिति। पृथिव्यादिनिबन्धनमित्यर्थः। पृथिव्यादिसूक्ष्माण्येव हि स्थूलारम्भे कारणम्। एतेन कल्पनानिबन्धनत्वं प्रधाननिबन्धनत्वञ्च निराकरोति। न तावत् कल्पनानिबन्धनत्वमबाधितत्वात्। न प्रधाननिबन्धनत्वमप्रमाणकत्वात्। दृश्यते तु सूक्ष्मतरादिक्रमेण पृथिव्यादीनामेव कार्यद्रव्येष्वारम्भकत्वमिति तदेव द्व्यणुकादिक्रमेण आश्रीयते। शिरश्छेदश्चान्यगोचरोऽवगतः स्वसम्बन्धितयावगम्यत इत्यन्यथा व्यवस्थानम्।

* बाह्याऽऽकार इति पा०।

श्लो०वा०—तान्यपास्य तु नैवाऽर्थे क्व चिदाकारकल्पना ।
न ज्ञानं ह्यन[1]वष्टम्भमात्मानं लब्धुमर्हति ॥२०८॥
*विज्ञानस्यैव [2]वा कार्यं [3]यद्येषो ऽन्ये च कल्पिताः ।
विशेषः को ऽत्र •येनाऽयमत्यन्ताऽसन्नितीष्यते ॥२०९॥
£तस्माद् भ्रान्तिरपि [4]स्वेषां कल्पय[5]न्त्यर्थमेव नः ।
कल्पयत्यन्यथा सन्तं न स्वात्मानं व्यवस्यति ॥२१०॥

न्या०र०—नैतावता काल्पनिकत्वं भवति, दुष्टत्वेन हि ज्ञानं, पार्थिवादिष्वेव हि वस्तुषु पृथिव्यादिनिबन्धनं परिणतिविशेषाऽधीनं बाह्यमेव शुक्त्याकारमन्यथा ऽपि स्थितमन्यथा रजताद्यात्मना गृह्णातीति युक्तं, न पुनः काल्पनिकत्वं ज्ञानाकारत्वं वा, यथा ऽसत्ख्यातिवादिनो मन्यन्ते, यथा वा ऽऽत्मख्यातिवादिन इति । कस्मादित्याह तानीति ॥२०८॥

पृथिव्यादीनि बाह्यान्यपास्य न क्व चिदाकारकल्पनेति । तदेव कथमित्याह न ज्ञानमिति । न हि भ्रान्तिज्ञानमपि शुक्तिशकलाद्युपष्टम्भनशून्यमुत्पद्यते, अत्यन्ताऽसतस्तु ज्ञानाकारस्य वा बहिर्ज्ञानाकारकल्पनायां शुक्तिकादिसन्निधिर्किंचित्करी स्यात्, अतो बहिरवस्थितमेव शुक्तिकादिकं बहिरवस्थितेनैव व्यक्त्यन्तरगतेन रजताद्याकारेण गृह्यत इति ।

किं च, यो ऽयं स्वप्नादिविभ्रमेष्वाकारो ऽवभासते, ये चाऽन्ये जाग्रद्बुद्धिषु स्तम्भाद्याकाराः ते सर्वे यदि ज्ञानस्यैवाकारा भवन्तां, ततः सर्वेषां ज्ञानाकारतया विद्यमानत्वादस्य स्वप्नाऽवभासस्याकारस्य को विशेषः, येनाऽयमत्यन्ताऽसन्नित्याह विज्ञानस्येति । ॥२०९॥

यदि सर्वत्र विद्यमानमेव बाह्यं गृह्यते, कथं तर्हि भ्रान्तित्वं, कल्पना हि भ्रान्तिरसदारोपश्च कल्पना विद्यमानस्यैव भासने बाधकेन वा किं कृतम्; इत्यत आह तस्मादिति ॥२१०॥

---

१. 'नुपष्टम्भ'—ख,　　२. 'वाकारो'—ख, 'वाऽऽकारो'—ग,
३. 'यदि वा ह्येष कल्पिता'—क,　४. 'स्वेषा'—ख,　५. 'यत्यर्थं'—ख,
* यदि सर्वोऽयं ज्ञानमनु भासमान आकारो ज्ञानस्यैव अन्ये च पृथिव्यादयो भावाः कल्पिताः, एवन्तर्हि सर्वसंविदामेवात्यन्तासन्नर्थं इति केन विशेषेण अयं स्वप्नादिभ्रमाणामत्यन्तासन्नर्थं इष्यते येनैवमुपालभ्येमहि कथमत्यन्तासन्नर्थः स्वप्नादिविज्ञाने ऽवसीयते इति तदेतदाह—विज्ञानस्येति । अत्र स्वप्नादिज्ञाने इत्यर्थः ।
£ अतः सिद्धं भ्रान्तिज्ञानान्यपि अर्थमेव अन्यथा स्थितमन्यथा कल्पयन्ति, न पुनरात्मानमवस्यन्तीत्याह—तस्मादिति ।

श्लो०वा०—ततश्च बाधकज्ञानाद्वाचोयुक्तिरियं भवेत् ।
*अर्थे ऽन्यथापि सत्येष [1]धिया ऽऽकारः प्रतीयते ॥२११॥
£द्विचन्द्रादि[2]मतिष्वेवं✓ तारकादिमतौ तथा ।
स्त्रीत्वाद्यन्यत्र दृष्टं स्यात् कथं चिद्वेह संभवेत् ॥२१२॥

न्या०र०—यस्मादेवं सर्वत्र बाह्यमस्ति तस्मादपि कल्पयन्ती कल्पनारूपा ऽपि सती अर्थमेवाऽन्यथा स्थितमन्यथा कल्पयति, तेन च रूपेण विद्यमानमेव विद्यमानतया कल्पयति न स्वात्मानं बहिष्ट्वेन, नाऽत्यन्ताऽसन्तं सत्त्वेनेति । बाधो ऽप्येतावतैव☐ सिद्ध्यतीत्याह ततश्चेति ॥२११॥

द्विचन्द्रादिबोधे ऽप्ययमेव न्याय इत्याह द्विचन्द्रादिमतिष्विति ॥२१२॥

यत्तु नक्षत्रं तारका तिष्य इति लिङ्गत्रयमेकत्र विरुद्धमित्युक्तं,△ तत्राह तारकादीति पादत्रयेण । प्राणिधर्मत्वाल्लिङ्गत्रयम् अन्यत्र विद्यमानमेवाऽत्र भ्रान्त्यैवाऽवगम्यते; कथं पुनरसति बाधके भ्रान्तित्वम्, सत्यं, यदि बाधो न स्यात्, पदप्रयोगवेलायामवगत-

---

१. 'ज्ञेयाकारं'—ग, २. 'ष्वपित्वेवं'—ग, ख, 'ष्वपित्वेनम्'—क,

* यदि तर्हि सर्वसंविदामेव बाह्यालम्बनत्वं किं तर्हि बाधकेन बाध्यते अत आह—ततश्चेति । बाधकेन न बाह्यं प्रतिक्षिप्यते, किन्तु बाधके सतीयं वाचोयुक्तिर्भवति यदन्यथा सत्यप्यर्थे अयमाकारो दुष्टकारणजनितया धिया प्रतीयते न त्वनर्थिकेयं धीरिति ।

£ एवं तावत् वासनानिबन्धनेषु स्वप्नादिविभ्रमेषु अर्थाकारो दर्शितः । बाधकप्रत्ययार्थश्च व्याख्यातः । एतदेवेन्द्रियविभ्रमेषु द्विचन्द्रादिविषयेष्वतिदिशति—द्विचन्द्रादावपीति । तारकादिमतावपि स्त्रीत्वादिप्रत्ययो भ्रान्तिरेव । प्राणिधर्मत्वाल्लिङ्गभेदानामप्राणिष्वसम्भवाद् भ्रान्त्यैवान्यत्र दृष्टमन्यत्रारोप्यते । अतोऽन्यत्र दृष्टमेव स्त्रीत्वादि तारकादिमतावलम्बनम् । कथं पुनस्तारकादिषु स्त्रीत्वादिप्रत्ययो भ्रान्तिरित्युच्यते ? न हि अत्र द्विचन्द्रादिबोधेष्विव बाधको दृश्यते । तमन्तरेण तु भ्रान्तिवादिनामेव भ्रान्तिरापद्येत, अत आह—कथमिति । अयमभिप्रायः—सत्यम् । न भ्रमस्तारकादिषु, वास्तवानामेव स्त्रीत्वादीनां संभवात् । ते हि स्त्रीपुन्नपुंसकलिङ्गेभ्यस्तारका तिष्यो नक्षत्रमितिशब्देभ्यः प्रतीयन्ते । न च प्रतीयमाना न सन्तीति युक्तं वक्तुम् ।

✓ द्विचन्द्रादिष्वपि वेनमिति पा० ।

☐ एतावानेवेति पा० ।

△ श्लो० वा० शून्यवादे श्लो० ५८ ।

श्लो०वा०—*शब्दमात्रप्रतीत्या वा, 'दृष्टैर्वा कैश्चिदिङ्गनात् ।
संस्त्यानप्रसवस्थानैर्यथा पातञ्जले मते ॥२१३॥

व्या०र०—मप्यप्राणिषु लिङ्गं प्रत्यक्षाद्यनुपलब्ध्या बाध्यतएवेति । मतान्तरमाह कथंचिदिति । केन चित् प्रकारेणेति । तदेव दर्शयति शब्दमात्रेति ॥२१३॥

1. 'दृष्टेर्वा'—क,

* यत्तु प्रमाणान्तरान्नावगम्यते, नायं दोषः । शब्दैकप्रमाणत्वात् । न चैकप्रमाणावगतोऽर्थः प्रमाणान्तरेण अनवसीयमानोऽसन् भवति । अतो येयं शब्दमात्रादुपजाता प्रतीतिस्तयैव स्त्रीत्वादयः संविदिता इति पारमार्थिका एवेति । अयमपि तु शब्दैकप्रमाणकत्वपक्षोऽतितुच्छ एव । न खलु पदतद्भागानामगृहीतसंवन्धानां प्रतिपादकत्वमस्ति नच प्रमाणान्तरावेद्येन वस्तुना सम्बन्धो ग्रहीतुं शक्यः अतो मन्द एवायमपि पक्ष इत्यपरितुष्यन् परिहारान्तरमाह—दृष्टैरिति । न तारकादौ अदृष्टपूर्वं लिङ्गं, दृष्टैरेव कैश्चिद्रूपैरिङ्गनात् । वक्ष्यमाणान्येव दृष्टानि रूपाणि लिङ्गमिति यावत् । किं पुन र्दृष्टं रूपं येनात्मना स्त्रीत्वादीनीष्यन्ते अत आह—संस्त्यानप्रसवस्थानैरिति । सत्त्वरजस्तमसां गुणानां यथोत्तरमुपचयः संस्त्यानप्रसवस्थानानि । ते च गुणाः प्राण्यप्राणिसद्भावसाधारणा एव सर्वेषु तद्रूपप्रत्यभिज्ञानात् । सुखदुःखमोहादिभेदवन्तो हि सर्वे भावाः आश्रयतया जनकत्वेन च प्राणिनः आश्रयतया प्राणिनः जनकतया रमणीयादिभाव व्यवस्थिता हि विषया अप्रार्थिनोऽपि सुखयन्ति दुःखयन्ति मोहयन्ति च । सुखादयश्च सत्त्वादिधर्माः, तद्दर्शनात् त्रैगुण्यं सर्वभावानामवसीयते । तद् यदा सत्त्वोपचयः संस्त्यानाभिधानोऽवगम्यते तदा पुंस्त्वं प्रतीयते । रजसस्तूपचये प्रसवे गम्यमाने स्त्रीत्वं, तमस उपचये स्थाने नपुंसकत्वम् । सा चोदासीनावस्था भावानां न कस्यचित् कार्यस्य सवित्री स्वरूपावस्थानमात्रं, तच्चैतद्रूपं दृष्टमेव सर्वभावेषु ! प्राणिनो हि पुमांसः सत्त्वोत्कटा दृश्यन्ते । रजोमय्यो नार्यः । तमोमयाः षण्ढाः संमुग्धनिरुद्धाखिलचेष्टाः । एवं तिष्यादीनामपि आपेक्षिकः सत्त्वादीनामुपचयो दर्शयितव्यः । अल्पप्रकाश नक्षत्रान्तरापेक्षया हि पटुप्रकाशः पुमानिति तिष्यो लक्ष्यते । यदा तु तस्यैव रजस उद्भवो लक्ष्यते तदा स्त्रीत्वेन तारकेति । तमसस्तूपचये नक्षत्रमिति नपुंसकत्वेन । एवमेव तटस्तटीतटमित्यादिष्वपि गुणोपचयापचयात्मा लिङ्गभेदोऽनुसन्धातव्यः । एवञ्च सर्वत्रैव पारमार्थिकं लिङ्गत्रयमुपपन्नं भवति । बाधविरहोऽपि अतएवेति सिद्धं नानर्थकास्तारकादिषु लिङ्गप्रत्यया इति । अत्रैव वृद्धानुमतिं दर्शयति—यथेति । पतञ्जलिना हि किं पुनरिदं लिङ्गमिति पृष्ट्वा बहुधा विकल्प्य प्राण्यप्राणिषु दर्शनादविपर्ययाच्चोभयत्र यथोक्तमेव लिङ्गमुपवर्णितम् ।

श्लो०वा०—तेन लिङ्गत्रयस्याऽत्र[1] सद्भावः स्यात् प्रमाणवत्[2]।

अपेक्षाभेदतश्चाऽत्र विरोधो ऽपि न [3]विद्यते ॥२१४॥

£कुणपादिमतौ चैवं सार्वरूप्ये व्यवस्थिते।

वासनाः सहकारिण्यो व्यवस्थाकारदर्शने ॥२१५॥

○स्वप्रत्ययाऽनुकारो हि वह्वाकारेषु वस्तुषु।

न्या०र०—वाऽन्तेन। शब्द एव प्रमाणमिति। न त्वेतद्युक्तं, पदमात्रस्याऽप्रमाणत्वात्, अतः प्रमाणान्तरमाह दृष्टैरिति। इङ्गनं कल्पनं, ये स्त्रीत्वादिभिः प्रायः सहचारिणो धर्मा दृष्टाः तैरिहाऽपि लिङ्गत्रयं कल्प्यते; किमिदं कल्पनम् अनुमानमिति चेत्, न, प्रत्यक्षाऽनुपलब्धिविरोधात्; कथं चैकविरुद्धं लिङ्गत्रयमनुमीयते, सत्यं, तच्छब्दप्रयोग एवात्र कल्पनमित्युच्यते, स्त्रीत्वादिषु संस्त्यानप्रसवस्थानाख्यगुणविवक्षायां स्त्रीलिङ्गादि-वचनः शब्दो ऽप्राणिषु नक्षत्रादिषु गौणः प्रयुज्यते; संस्त्यानं रजोबाहुल्यं स्त्रीधर्मः, प्रसवः सत्त्वबाहुल्यं पुंधर्मः; स्थानं तमोबाहुल्यं नपुंसकधर्म इति। ततश्च एकस्मिन्नप्यर्थे निकृष्टरजःपदार्थान्तराऽपेक्षया यदा रजसः समुत्कर्षो विवक्ष्यते तदा स्त्रीलिङ्गशब्दः प्रयुज्यते, तथा पुंल्लिङ्गो नपुंसकलिङ्गश्चेति। लिङ्गत्रयमपि सम्भवत्येव गौणमित्याह तेनेति ॥२१४॥

ननु विरुद्धमेकत्र लिङ्गत्रयमत आह अपेक्षेति। उक्तमिदं न मुख्यं लिङ्गत्रयमस्ति, गौणं चाऽभिधानं विरुध्यते किं, भवति हि निकृष्टसत्त्वाद्यपेक्षया कुत्रापि सत्त्वादीना-मुत्कर्षविवक्षा, तेनाऽपेक्षितत्वादुत्कर्षस्य तद्भेदादविरोध इति।

यत्त्वेकस्यां प्रमदायां परिव्राट्कामुकशुनां कुणपादिमतिभेदो ऽनुपपन्न इत्युक्तं, तत्राह कुणपादीति ॥२१५॥

कुणपादिरूपाणि सर्वाण्येव प्रमदायां सन्ति, परिव्राजकादिस्तु स्ववासनाऽनुसारेण किञ्चिद्रूपं पश्यति न सर्वे सर्वाणि; परिव्राजको हि विषयवैराग्याऽनुबन्धिचेताः कामिनीरूपं, श्वा पुनरामिषगन्धिमनाः तालफलायमानस्तनशालिनीं कवलयितुम् इच्छति; सेयमेषामात्मीयवासनासहकारिकारिता विकल्पव्यवस्थेति।

---

१. 'पि'—ख, २. 'वान्'—, ३. 'युज्यते'—ख,

£ यत् पुनरुक्तं—एकस्यामेव प्रमदातनौ कथं परिव्राजकादीनां कुणपादिप्रत्ययाः सदर्था भविष्यन्तीति, तत्परिहरति कुणपादीति।

○ किमपराद्धमस्माभिर्वासनानिवन्धनं नीलाद्याकारोपप्लवं विज्ञाने वदद्भिः। भव-द्भिरपि वासनैवाकारदर्शनहेतुतया वर्णिता। अत आह—स्वेति।

श्लो०वा०—निर्द्धारणे भवेद्धेतुर्नाऽपूर्वाऽऽकारकल्पने ॥२१६॥
*तथा दीर्घघटत्वादौ भिन्नाऽपेक्षानिबन्धना ।
आकारभेदसं[1]म्पत्तिरविरुद्धा भविष्यति ॥२१७॥
£ना ऽनेकाऽऽकारसंवित्ते र्निराकारत्वकल्पना ।
युक्ता, प्रतीतिभेदात्तु बह्वाकारत्वसम्भवः ॥२१८॥
संवित्तेश्चाऽविरुद्धानामेकस्मिन्नप्यसम्भवः ।
△एकाऽऽकारं भवेदेकमिति नेश्वरभाषितम् ॥२१९॥

न्या०र०—नन्वेवमेवास्तु, किमर्थाऽभ्युपगमेनाऽत आह स्वप्रत्ययेति ॥२१६॥

स्वहेतुप्रत्ययाऽनुकारो हि वासना स्वकारणभूतं ज्ञानमनुकरोति, यथाविधेन ज्ञानेन जन्यते तथाविधमेव ज्ञानं जनयतीत्यर्थः; तदसौ बह्वाकारे वस्तुनि पूर्वाऽभ्यस्ताऽऽकार-निर्धारणे कारणं भवति, न त्वपूर्वाकारं विकल्पयति; न ह्यत्यन्तमन्मथाऽऽक्रान्तस्वान्तो ऽपि घटं कामिनीं पश्यति, श्वा वा भक्ष्यमिति; तथैकस्मिन्नपि ह्रस्वादिबुद्धिरपेक्षा-भेदादविरुद्धा; तथा युगपद्ग्राहकाणां घटत्वपार्थिवत्वाद्याकारभेदसंवित्तिर्देशकालव्यपेक्ष-शब्दविशेषस्मरणाऽपेक्षया न विरुध्यतइत्याह तथेति ॥२१७॥

यस्त्वेकस्याऽनेकाकारत्वं विरुद्धं, ततो ऽलीक एवाकार इत्युक्तं, तत्राह नाऽनेकेति युक्ताऽन्तेन ॥२१८॥

किं तर्हि युक्तमत आह प्रतीति ।

भवत्वेकस्याऽप्यविरुद्धाऽनेकाकारसम्भवः, विरुद्धानां तु दीर्घह्रस्वाद्याकाराणाम-पेक्षाभेदादपि कथमेकत्र सम्भव इत्यत आह संवित्तेरिति ॥२१९॥

संविन्निष्ठा हि वस्तुव्यवस्थितिः, अतस्तद्बलेन दीर्घादीनामप्यपेक्षाभेदादेकत्रापि सम्भवो नाऽनुपपन्न इति । यदुक्तं प्रतीतिभेदादेकस्यापि बह्वाकारत्वमिति, तद्विवृणोति एकेति । न ह्येकमेकाकारमेवेति किंचन प्रमाणमस्ति, तेन यद्यादृशमेकाकारमनेकाकारं

---

१. 'संवित्ति'—क,
* दीर्घादिप्रत्ययोऽपि एकगोचरोऽपेक्षाभेदादेव परिहर्तव्य इत्याह—तथेति ।
£ अपिच इयमपूर्वा युक्तिः यत् किल अनेकाकारात्मकं भासते, तस्मादनाकारमेव वस्तु ज्ञानाकारमेवायमिति । एवं हि प्रतीतिभेददर्शनादनेकाकारकल्पनैवाश्रयितु-मुचिता । न त्वनाकारकल्पनेत्याह—नेति ।
△ भवेदप्यनेकाकारदर्शनादेकस्यानाकारकल्पना यद्येकमेकाकारमित्यत्र युक्तिर्भवेत् । तामन्तरेणत्विदमीश्वराज्ञातुल्यमेव भाषितं भवेत् । तच्चायुक्तमित्यभिप्रायेणाह—एकाकारमिति ।

श्लो०वा०—*¹तथैव तदुपेतव्यं यद्यथैवोपलभ्यते ।
न चाप्यैकान्तिकं तस्य स्यादेकत्वं च वस्तुनः ॥२२०॥
△'तस्माद्देशादिसद्भावनिमित्तैः प्रत्ययैः पृथक् ।
वस्त्वाकाराः प्रतीयेरन्नुद्भवाऽभिभवात्मकाः ॥२२१॥
£युगपद्ग्राहकाणां च यो यदाकारवाचिनम् ।
शब्दं स्मरति तेनासावाकारः संप्रतीयते' ॥२२२॥
नित्यं सत्सु तथा लोके रूपादिषु घटे पृथक् ।
चक्षुराद्यनुरोधेन संवित्तिर्व्यवतिष्ठते ॥२२३॥

न्या०र०—नोपलभ्यते तत्तथैवाऽङ्गीकर्त्तव्यमिति; किं त्वेकत्वमपि तस्य वस्तुनो न केनचिद्व्यवस्थापितं, यतो ऽनेकाकारता न स्यात्, तदपि ह्यनेकधर्ममवगम्यमानं तेनात्मना ऽनेकतामपि भजतइत्याह न चेति ॥२२०॥

सति चाऽनेकाकारत्वे युक्ता तत्तदाकारप्रतीतिव्यवस्था, उद्भवाऽभिभवाऽपेक्षाभेदादित्युपसंहरति तस्मादिति द्वयेन ॥२२१॥

देशकालाऽपेक्षया वस्त्वाकाराणामुद्भवाऽभिभवौ, विपिने हि सायुधं पुरुषं पश्यतो हिंस्ररूपम् उद्भूतं प्रतिभासते, ग्रामनगरेषु पालकरूपं, तथा दीपप्रभायां नक्तंदिवं रूपस्पर्शयोरुद्भवाद्ग्रहणं, युगपद्ग्राहकाणां त्वेकस्मिन्नपि देशे काले च शब्दविशेषस्मरणवशादाकारविशेषोपलब्धिरिति । तत्रैव दृष्टान्तमाह नित्यमिति ॥२२३॥

---

१. 'तथाहि'—क,

* संविदेकाधीनता हि वस्तूनां व्यवस्थितिः । अतो यदेव येनात्मना संविदा व्यवस्थाप्यते तत् तेनैव रूपेणाभ्युपेतव्यम् । किञ्चैकत्वेऽपि वस्तुनो नास्माकमेकान्तवादः, येनैवमुपालभ्येमहि कथमेकमनेकाकारमिति । तदपि हि एकानेकात्मकमेवानेकान्तवादिनामस्माकम् ।

△ अतः सिद्धं देश-कालावस्थोपाधिसद्भावनिमित्तैः प्रत्ययैर्विद्यमाना एव वस्त्वाकारा उद्भवाभिभवात्मकाः पृथग् भेदेन गृह्यन्ते । देशादयश्चाकारोद्भवाभिवद्वारेण प्रत्ययानां निमित्तम् ।

£ ये तर्हि युगपदेव ग्रहीतॄणां घटत्वाद्याकारा निर्भासन्ते तत्र कथम् । न हि त आपेक्षिकाः, स्वाभाविकत्वाभ्युपगमात् । तत्र कः परिहारः ? अत आह—युगपदिति । यद्यप्यत्र नौपाधिकत्वान्नचोद्भवाभिवौ, तथापि नानाकारे वस्तुनि यो यस्य वस्तुनः यस्य वस्तुभागस्य शब्दं स्मरति स तं विकल्पयामुको ऽयमिति जानाति, नेतर इति व्यवस्थासिद्धिः ।

श्लो०वा०—एवमेव घटत्वादौ सर्वान् प्रति भवत्यपि ।
वाचकस्मृतिभेदेन संवित्तिर्व्यवतिष्ठते ॥२२४॥
तस्माद् बहिः स्थितो ऽप्यात्मा नराणां चक्षुरादिभिः ।
प्राप्य वा ऽप्राप्य वा बुद्धेर्विषयत्वेन कल्प्यते ॥२२५॥
£वदन्ति लौकिका यच्च यादृग् ज्ञानं तथा वहिः ।
ते [1]पुनर्ज्ञानसंवित्त्या तथा ऽर्थं प्रति जानते ॥२२६॥
ग्राहकत्वेन विज्ञानं यथार्थं नः समर्पयेत् ।
तादृगर्थः स [2]इत्येवं तेषां वा तदुपायतः ॥२२७॥

न्या०र०—दार्ष्टान्तिके योजयति **एवमेवेति** ॥२२४॥ भवत्यपीति । विद्यमाने ऽपीत्यर्थः ।

नन्वर्थान्तरभूतं ग्राह्यं केन सम्बन्धेन ज्ञानेन प्रकाश्यते, विषयत्वादिति चेन्न, तस्यैव निर्निबन्धनत्वात्; भिन्नत्वाऽविशेषे हि केन हेतुना कश्चिदेवाऽर्थः कस्यचिज्ज्ञानस्य विषयो न सर्वस्य सर्वो, ऽत आह तस्मादिति ॥२२५॥

यस्मादेवं न कथंचिज्ज्ञानस्यात्मविषयता संभवति तस्माद्बहिष्ठ एवाऽर्थो ऽवश्यं प्रकाशयितव्यः, स च ज्ञानकारणचक्षुरादिवशात्कश्चिदेव कस्यचिद्विषयो न सर्वः सर्वस्य; तानि हि क्वचिदेवार्थं प्राप्याऽप्राप्य वा बाह्यसामर्थ्येन बुद्धेर्विषयत्वेनोपनयन्तीति ।

यत्तु ज्ञानाकारत्वे नीलादेर्ज्ञानग्रहणस्य कारणत्वमुक्तं, नीलो ऽर्थो ऽयं, यतो मे ऽत्र तद्रूपा जायते मतिरिति वक्तारो व्यवहरन्तीति; तदनुभाष्य परिहरति वदन्तीति ॥२२६॥

न ते ज्ञानं साकारं विदित्वा ततः पश्चात्तथाभूतमर्थं प्रतिजानतइति । कथं तर्हीत्याह ग्राहकत्वेनेति ॥२२७॥

ज्ञानपुरस्कारस्तावन्न तत्पूर्वकाऽर्थग्रहणात्, किं तु तदुपायत्वादर्थस्य तत्प्रमाणकत्वादिति यावत् । नीलाकारता च तत्समर्थकता नीलाकारज्ञानमिति नीलसमर्थकमित्यर्थः । तदेवं प्रत्यक्षस्य बहिर्वृत्तिसामर्थ्यात्तद्विरुद्धं निरालम्बनाऽनुमानं नाऽर्थापह्नवायाऽलमिति

---

१. 'ऽपिन ज्ञान'—क, २. 'इत्येव'—क,

£ यदप्युक्तं 'वक्तारश्चापि दृश्यन्ते' इति, तत् परिहरति वदन्तीति । यदेतल्लौकिका वदन्ति नीलोऽयमर्थो यतस्तद्रूपामतिरुत्पद्यते इति, तेऽपि न ज्ञानाकारपरिचयपुरःसरोऽर्थसम्बोध इति तथा वदन्तीति ।

श्लो०वा०—£लैङ्गिकाऽसत्त्वमप्राप्तैरेतैर्वाह्यार्थवादिभिः ।
ज्ञानाऽनुभवमुत्क्रम्य वाह्य एव [1]प्रतीयते ।।२२८।।
*यथा लोके च तद्बुद्धिर्वाच्यमेवं परीक्षकैः ।
न यादृगन्तराकारस्तादृग् वाह्यो ऽवकल्पते ।।२२९।।

भा०—उत्पद्यमानैवासौ ज्ञायते, ज्ञापयति चार्थान्तरम्प्रदीपवत्—इति यद्युच्येत ।

श्लो०वा०—△'उत्पद्यमाना गृह्येत धीरर्थग्रहणे यदि ।

न्या०र०—आनुमानिकं वाह्यार्थाऽसत्त्वम् अप्राप्तैर्वाह्याऽर्थवादिभिर्ज्ञानाऽनुभवमुत्क्रम्य वाह्ये प्रयत्यते, वाह्यमेवालम्वनं निश्चीयते; तदाह लैङ्गिकेति ।।२२८।।

ननु यद्यपि प्रत्यक्षादिभिः प्रमाणैर्वाह्यमवस्थाप्यते तथापि परीक्षकास्तं युक्तितो ऽसंभावयन्तस्तमपह्नुवते, अतो दोषो ऽत आह यथेति ।।२२९।।

लौकिकप्रमाणाऽनुसरणमेव परीक्षकाणां तत्त्वं, तद्विपर्यये चाऽपरीक्षका एव स्युरिति । लोके च नीलादिवित्तौ यादृगन्तराकारः, आन्तरस्य ग्राहकस्य यादृगाकारो ऽहमिति, न तादृशो नीलादिरवगम्यते, किं त्वसाविदं नीलमिति वाह्यो ग्राहकाद्भिन्नः प्रतीयतइत्याह न यादृगिति ।

---

१. 'प्रयत्यते'—क,

£ एवं तावत् परीक्षिता प्रत्यक्षशक्तिः । निर्णीतं च यथा वाह्य एव प्रवर्तितुं शक्तमिति । एवं च अनुमानस्य प्रत्यक्षवाधे सिद्धे लैङ्गिकं तावद् वाह्यासत्त्वमप्राप्तं वाह्यार्थवादिभिः । अतश्च तदभावद्वारिकां ज्ञानानुभवकल्पनामतिक्रम्य तैं र्वाह्य एव यत् प्रयत्यते तद् युक्तम् ।

* स्यादेतत्—वहिः सन्तमेवार्थं लौकिका बुध्यन्ते, परीक्षकास्तु युक्तितोऽवस्थापयितुमशक्नुवन्तः स्वांशालम्वनत्वं संविदां प्रतिपद्यन्ते । अयमभिप्रायः—यथा तस्यार्थस्य लोके बुद्धिरुत्पद्यते, परीक्षकैरपि तथैव वाच्यम् । अयथार्थं ज्ञानं हि वदन्तो न परीक्षका एव भवेयुः । इदं तु परीक्षकाणां तत्त्वं यत् प्रमाणशरणत्वम्, असति तस्मिंस्तत्त्वहानिरेव तेषाम् । लौकिकाश्च नान्तराकारवद् वाह्य वस्तु वुध्यन्ते । प्रतीतिमेवानुस्मारयति—न यादृगिति । अन्तराकारो यादृगवगम्यते, न तादृशो वाह्यार्थः स हि अयमिदमितिपररूपेण निरूप्यत इत्युक्तम् । अन्तराकारस्य त्वहमिति निरूपणं भवेदस्माकमिवात्मन इति ।

△ तद् वाह्यापलापवादिना वक्तव्यं यत् तदभावानुगुणम्, इह चोत्पद्यमानाया बुद्धेरर्थस्य च ग्रहणमाचक्षाणो नार्थाभावं दर्शयतीति नेदं पूर्वपक्षवादिनो वक्तुमुचितम् । स्यादेतत्, नेदं पूर्वपक्षानुगुणतयोच्यते, किन्त्विदमर्थान्तरभूतमपरमेव बुद्धावा-

श्लो०वा०—पूर्वपक्षस्य किं सिद्धं' कथं चाऽर्थान्तरं वदेत् ॥२३०॥
वाह्याऽर्थवादिनं ब्रूते भवान् किं नैवमिच्छति ।
प्रतिवन्धो न तस्यास्ति गृह्यात्यर्थान्तरं यदा ॥२३१॥

भा०—तन्न । न हि अज्ञाते ऽर्थे कश्चिद् बुद्धिमुपलभते । ज्ञाते तु अनुमानादवगच्छति । तत्र यौगपद्यमनुपपन्नम् ।

श्लो०वा०—*'उत्तरं ग्राहकाऽभावाल्लिङ्गाऽभावाच्च नास्ति नः ।
तदा ग्रहणमित्येत' 'दन्यतर्केषु चोच्यते ॥२३२॥
तेषु तर्केषु विज्ञानमर्थकाले ऽवगम्यते' ।

न्या०र०—"उत्पद्यमानैवाऽसौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति यद्युच्येते" ति चोद्यभाष्यमाक्षिपति उत्पद्यमानेति ॥२३०॥ पादत्रयेण ।

न ह्यर्थग्रहणवेलायां बुद्धेर्ग्रहणमर्थापह्नवस्योपयोगीति । न केवलं पूर्वपक्षाऽनोपयिकमिदं प्रत्युत विपरीतमिदमर्थान्तरं ज्ञापयतीति भाष्यवचनमर्थापह्नवस्येत्याह कथमिति । समाधत्ते वाह्यार्थेति ॥२३१॥

नायं स्वपक्षोपन्यासः, किं तु शून्यवादी वाह्यार्थवादिनमेवं चोदयति, किं भवानर्थग्रहणसमये ज्ञानस्य प्रतिबन्धाऽभावं नेच्छति येन तदा तस्याऽग्रहणं ब्रवीति, न ह्यप्रतिबद्धस्याऽग्रहणं संभवति, ग्रहणे च सति तस्यैवाऽयमाकारो भवतीत्यर्थाऽभावसिद्धिरिष्टा सेत्स्यतीति ।

परिहारभाष्यार्थमाह उत्तरमिति ॥२३२॥ पादत्रयेण ।

सत्यं, नास्ति प्रतिवन्धः, तथापि ग्राहकाऽभावान्न तदा गृह्यते, लिङ्गाऽभावाच्च

---

गतं सिद्धान्तिनोऽ सम्मतमित्येतावतैवोच्यते सिद्धान्तान्तरमस्य दूषयितुमत आह—कथमिति । पूर्वपक्षानोपयिकमर्थान्तरं ब्रुवाणस्य सिद्धान्तान्तरदूषणं निग्रहस्थान मिति भावः ।

* अत्रोत्तरं भाष्यं "तन्न । न हि अज्ञाते ऽर्थे कश्चिद् बुद्धिमुपलभते । ज्ञाते त्वनुमानादवगच्छती" त्यादि । तस्याभिप्रायमाह—उत्तरमिति । अस्यार्थः—विदितपूर्वपक्षवाद्यभिप्रायः सिद्धान्तवादी वदति । सत्यमुत्पत्तौ बुद्धेरप्रतिबन्धः ग्राहकाभावात् तु तदानीमग्रहणं, तदभावश्च तत्कारणस्य लिङ्गस्य ज्ञतताादिपदास्पदस्याभावात् । अन्यथोत्पद्यमानैवेत्यादिभाष्याभिप्रायमाह—अन्येति । अन्यतर्केषु स्थित्वेदं भाष्यकारेणोच्यते उत्पद्यमानैवेत्यादि । एतदुक्तं भवति—बाह्यार्थवाद्येकदेशिमतोपन्यासोऽयं भाष्यकारेण कृतस्तन्निराकरणार्थम् ।

श्लो०वा०—तथा सत्यर्थनाशः स्यादित्येतदुपदिश्यते ॥२३३॥

भा०—ननु उत्पन्नायामेव बुद्धौ—ज्ञातोऽर्थः—इत्युच्यते, नानुत्पन्नायाम् । अतः पूर्वं बुद्धिरुत्पद्यते, पश्चात् ज्ञातोऽर्थः ।

श्लो०वा०—नन्वित्येतदसम्बद्धं परेष्टस्यैव चोदनात् ।
पौर्वापर्यविभागो ऽपि प्रागुक्तेन विरुध्यते ॥२३४॥
क्षणिकत्वेन युक्तं स्याज् ज्ञातत्वमथ चेत्तदा ।
भूतकालाश्रयाद् ब्रूयाद् वृथोक्तस्य पुनर्वचः ॥२३५॥
*अत्रापि न स्वसिद्धान्तमूचे [1]व्याजात् परस्य तु ।

न्या०र०—ग्राहकाऽभावः, ज्ञातत्वं लिङ्गं तदा विद्यते च; तदिदमुक्तं "न ह्यज्ञाते ऽर्थे कश्चिद् बुद्धिमुपलभते, ज्ञाते त्वनुमानादवगच्छती" ति ।

चोद्यभाष्यस्याऽर्थान्तरमाह अन्येति सपादेनाऽर्द्धेन । वैशेषिकादीनां वाह्याऽर्थवादिनामेवेदं चोद्यं, ते ह्यर्थग्रहणवेलायामेव ज्ञानमपि गृह्यतइति मन्यन्तइति । किमिति तर्हि तन्निराकरणमत आह तथा सतीति ॥२३३॥

ज्ञानस्य ह्युत्पत्तिसमये ग्रहणाऽभ्युपगमे निराकारस्य ग्रहणाऽभावाज्ज्ञानमेवाकारवत्स्यादित्यर्थनाशः स्यात्, अतो ऽर्थाऽभ्युपगमविरोधी ज्ञानग्रहणाऽभ्युपगमस्तेषामित्येतदनेनोच्यते इति ।

"ननूत्पन्नायामेव बुद्धौ अर्थो ज्ञात इत्युच्यते नाऽनुत्पन्नायाम्, अतः पूर्वं बुद्धिरुत्पद्यते पश्चाज्ज्ञातो ऽर्थ" इति चोद्यभाष्यमाक्षिपति नन्विति ॥२३४॥

सिद्धान्तवादिनो हीदमिष्टं, बुद्ध्युत्पत्तावर्थोपलब्धिरिति, शून्यवादिनस्त्वनिष्टमेवाऽर्थग्रहणं, तदस्यैवं चोदयतः स्वपक्षहानिः परपक्षाऽभ्युपगमश्चाऽऽपद्येतैवेति । यदपि पूर्वं बुद्धिरुत्पद्यते पश्चाज्ज्ञातो ऽर्थ इति पौर्वापर्याऽभिधानं, तदपि पूर्वोक्तेन विरुद्धम्, "उत्पद्यमानैवाऽसौ ज्ञायते ज्ञापयति चाऽर्थान्तर" मिति हि यौगपद्यमुक्तम्; तदाह पौर्वापर्येति । विरोधपरिहारं शङ्कते क्षणिकत्वेनेति ॥२३५॥

---

१. 'वाक्यात्'—क,

* यदा परेण सिद्धान्तिना इदमुक्तं न पूर्वं बुद्धिर्ज्ञायत इति, तदास्य तद्वाक्यश्राविणो भ्रान्तिर्जाता, यदयं सिद्धान्ती बुद्धेः पूर्वं ज्ञानं प्रतिषेधति, तदस्य मन्ये बुद्ध्युत्पत्तिरपि न प्रागनुमता । नहि भवति स्वप्रकाशं सूत्पन्नमपि न गृह्यते । तदेवं परस्य सिद्धान्तिनो वाक्याज्जातविभ्रमः सिद्धान्तिमतमेवान्यथा बुद्ध्वा ननूत्पन्नायां बुद्धावितीदृशं पृच्छतिस्म । श्रुतं मया प्राग् वो मीमांसकानां बुद्ध्युत्पत्तिः सम्मता । तत् किमित्येवं यन्न प्राग् बुद्धम् ।

श्लो०वा०—भ्रान्तत्वादन्यथा पक्षं गृहीत्वेति स्म पृच्छति ॥२३६॥

*सहोत्पत्त्युपलब्धा हि ज्ञानस्यैकान्ततः स्थितिः ।
प्रागूर्ध्वं वा ऽर्थसंपत्तेर्युगपद्वेति चिन्त्यते ॥२३७॥
£एष चाऽर्थस्य [1]संपत्तेः पश्चाज् ज्ञानाऽवबोधनम् ।
[2]ब्रवीतु नूनमेतस्य पश्चादुत्पद्यते ऽपि तत् ॥२३८॥
♣न चैतच्छक्यते तस्मादुत्पत्तेरपकर्षणम् ।
करोमि तावत् तत्काला संवित्तिरपि सेत्स्यति ॥२३९॥

न्या०र०—यौगपद्यमेवाऽत्राप्युच्यते, पूर्वं बुद्धिरुत्पद्यतइति हि पूर्वस्मिन्काले बुद्धेरुत्पद्यमानत्वमुक्तं; पश्चाज्ज्ञातो ऽर्थ इति पश्चात्काले ऽर्थस्य ज्ञातत्वं भूतकालप्रत्ययनिर्देशेनोक्तं; तदनेन प्रकारेण बुद्ध्युत्पत्तिसमयएवाऽर्थस्य ज्ञानविषयत्वमुक्तम् । यदेव हि पूर्वस्मिन्काले ज्ञायमानं भवति तदेवोत्तरस्मिन्काले ज्ञातं भवति, अवश्यं च यौगपद्यमेव वक्तव्यं, न हि बुद्ध्युत्पत्तिसमये बुद्धिमुत्पादितवतो ऽर्थस्य पश्चादवस्थानं सम्भवति क्षणिकत्वात्, न चाऽनवस्थितस्य ग्रहणं सम्भवति प्रत्यक्षेण, तस्मात्पश्चाद्ग्रहणाऽसम्भवादिहापि यौगपद्याभिधानादविरोध इति ।

दूषयति वृथेति । उक्तस्य हि यौगपद्यस्य पुनर्वचनमनर्थकमिति । समाधत्ते अत्रापीति ॥२३६॥

पूर्वचोद्यवदत्रापि न स्वपक्षं ब्रूते, यतः परपक्षाऽङ्गीकरणं स्यात्, किं तु ज्ञाते त्वनुमानादवगच्छतीति सिद्धान्तिनो वाक्याद् भ्रान्तः सिद्धान्तिपक्षमन्यथा गृहीत्वा ननूत्पन्नायामिति चोदितवानिति ।

कथमस्माद्वाक्याद् भ्रान्तिः कीदृशी चाऽत आह सहेति ॥२३७॥ त्रयेण ।

एवं शून्यवादी भ्राम्यति, ज्ञानस्योत्पत्तिरुपलब्धिश्च द्वयं युगपदिति तावदविवादम्,

---

१. 'संवित्तेः'—क, २. 'ब्रवीति'—क,

* इयं किल अस्य बौद्धस्य भ्रष्टाशा सहैव ज्ञानस्य उत्पत्त्युपलम्भौ, उत्पन्नानुपलब्धस्यासंभावनीयत्वात् । तदिह एतावदेव विमतिपदं किं नो बुद्धेरुत्पत्त्युपलम्भावर्थवित्तेः प्रागूर्ध्वं वा आहोस्वित् सहैवार्थवित्त्येति ।

£ एष च मीमांसकः पश्चादर्थवित्तेः ज्ञानस्यावबोधमाह । तन्नूनमेतस्य ज्ञानं पश्चादेवोत्पद्यते । कथमपरथा प्रकाशस्वभावस्याग्रहणम् ।

♣ तदेनमितः पक्षाभासाद् व्यावर्तयामीति प्राक् तावदुत्पत्तेरपकर्षणं करोति । नहीदं शक्यते वक्तुं यदनुत्पन्नायामेव बुद्धावर्थो ज्ञातो भवतीति, अतिप्रसंगात् । एवं च प्रागुत्पन्नस्य तदैव संवित्तिरिति सुसाधमेव ।

श्लो०वा०—£प्राक् च तद्ग्रहणे सिद्धे वाह्याभ्यन्तरयोर्ध्रुवम् ।
विवेकाऽदर्शनं, तस्मादिदं पूर्वं च चोदितम् ॥२४०॥
△युगपद् गृह्यमाणे ऽपि नाऽऽकारो ऽर्थस्य लक्ष्यते ।

भा०—सत्यम् । पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते । भवति हि कदाचिदेतत्, यज्ज्ञातोऽप्यर्थः सन् अज्ञात इत्युच्यते । नचार्थव्यपदेशमन्तरेण बुद्धेः रूपोपलम्भनम् । तस्मान्न व्यपदेश्या बुद्धिरव्यपदेश्यं च न प्रत्यक्षम् । तस्मादप्रत्यक्षा बुद्धिः ।

अपि च काममेकरूपत्वे बुद्धेरेवाऽभावो नार्थस्य प्रत्यक्षस्य सतः । न चैकरूप्यमनाकारामेव हि बुद्धिमनुमिमीमहे । साकारं चार्थं प्रत्यक्षमेवावगच्छामः । तस्मादर्थालम्बनः प्रत्ययः ।

श्लो०वा०—*तस्मादर्थस्य संवित्तिः पूर्वं यत्नेन साध्यते ॥२४१॥

न्या०र०—तत्त्वर्थोपलब्धेः प्राक् पश्चाद्युगपद्वेत्येतावच्चिन्त्यम्; एवं च मीमांसको ऽर्थसंवित्तेः पश्चाज्ज्ञानसंवित्तिं ब्रवीति, ज्ञाते त्वनुमानादवगच्छतीति; तदस्य ज्ञानोत्पत्तिरपि पश्चादेवाऽभिमता, न च तद्युक्तम्; अतो ज्ञानोत्पत्तिं तावदर्थसंवित्तेः प्रागपकर्षामीति मत्वा ननूत्पन्नायामित्याह, तदपकर्षे च तत्संवित्तिरपि प्रागेव सिद्ध्यतीत्यभिप्राय इति ।

भवतु वा प्राक् संवित्तिः, तथापि किम्, अत आह प्रागिति ॥२४०॥ दर्शनमन्तेन ।

न हि निराकारोपलब्धिरस्ति, न चाऽर्थज्ञानयोर्विवेकेनाऽऽकारद्वयं दृश्यते, ततो ज्ञानस्यैवाऽयमाकार इति अर्थाऽभावसिद्धिरिति । तस्मात्स्वपक्षोपयोग्येवेदं चोद्यमित्याह तस्मादिति ॥२४०॥

चोदितमिति वक्ष्यमाणेन सम्बन्ध इति । यदपि पूर्वमुत्पद्यमानैवाऽसौ ज्ञायते

---

£ प्राक् च तत्संवित्तौ सिद्धायां ध्रुवमापन्नं वाह्याभ्यन्तराभिमतयोस्तत्त्वयोर्विवेकादर्शनम् । अर्थ एव हि प्राग् बुद्धेः साकारे तत्सामर्थ्यात् अनाकारा संवित्तिः । अतो विविक्ताकारता सिध्यति इतरथा तु आकारविवेकस्यानुपलब्धत्वात् अद्वैतं सिद्धमेवेति । युगपद्ग्रहणपरिचोदनाप्येवमभिप्राया शक्या वर्णयितुम् ।

△ पूर्वोक्तमेव विवृणोति—युगपदिति । ज्ञानेन सह युगपद् गृह्यमाणेऽप्यर्थे नार्थस्याकारो लक्ष्यते । उक्तं हि 'नाकारविवेको लक्ष्यते' इति । अपिच एवं सहोपलम्भनियमो बौद्धस्य अनिवारितप्रसरो ज्ञानाद्भिन्नं साकारमर्थं निराकरोतीत्युक्तमेव ।

* यत एव प्राक् समकालं वा ज्ञानानुभवेऽर्थनाशो भवति, तस्मादर्थसंविद एवप्राग्भाविता भाष्यकारेण सिद्धान्तावसरे यत्नेन साध्यत इत्याह—तस्मादिति ।

श्लो०वा०—यस्त्वेतस्योत्तरो ग्रन्थः प्रागेवाऽसौ निरूपितः ।
£[1]नन्वेतत्साधनं साक्षात्पूर्वं बुद्धेरबोधने ॥२४२॥
*न परामृश्यते ऽर्थात्मा ज्ञातो ऽप्यज्ञातवद्यतः ।
तस्मान्न ग्रहणं पूर्वं बुद्धेः किं केन सङ्गतम् ॥२४३॥
⊙अतः पूर्वोपलब्ध्या यो बुध्याऽऽकारो ऽत्र वाञ्छितः ।
तन्निराकरणेनैव फलत्वाद् ग्रन्थवर्णना ॥२४४॥

न्या०र०—ज्ञापयति चाऽर्थान्तरमिति यौगपद्यचोद्यं, तदपि ज्ञानाकारसिद्ध्यर्थमेवेत्याह पूर्वमिति । एतदेव विवृणोति युगपदिति ॥२४१॥

यस्मादेव ज्ञानस्य प्राक् संवित्तौ तस्यैवाऽऽकारो भवति तस्मादेव सिद्धान्तवादी "सत्यं पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायत" इति अर्थस्यैव पूर्वं संवित्तिनं बुद्धेरिति साधयतीत्याह तस्मादिति ।

कथं पूर्वं न ज्ञायतइत्यत आह भाष्यकारः "भवति हि कदा चिदेतद्यज्ज्ञातो ऽर्थः सन्नज्ञात इत्युच्यत" इति । तदिदं 'न स्मरामि मया को ऽपी'त्यत्र व्याख्यातमित्याह यस्त्विति ॥२४२॥

सिद्धान्तभाष्यमाक्षिपति नन्विति । कथं न साधनमत आह न परेति ॥२४३॥ संभवति हि सहाऽनुभूतयोरप्येकस्य स्मरणम्, इतरस्य च विस्मरणम्; अतो ऽर्थविस्मरणे ऽपि ज्ञानस्य स्मरणाद् नाऽर्थसंवित्तिसमये ज्ञानसंवित्तिरित्यसङ्गतमिति ।

समाधत्ते अत इति ॥२४४॥ यत एव साक्षान्न साधनमत एव फलद्वारेण

---

१. 'नत्वेत'—क,

£ "सत्यम् । पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायते" इति प्रतिज्ञायामयं हेतुरुक्तः "यत् किल ज्ञातो ऽप्यर्थः कदाचिदज्ञातवन्नस्मर्यते, तस्मान्न पूर्वं बुद्धिर्ज्ञायते" इति ।

* इदं च बालप्रलपितप्रायम् । किं खल्वत्र केन सम्बध्यते यज्ज्ञातो न स्मर्यते तत्र पूर्वं बुद्धिर्न ज्ञायत इति, तस्मान्न तावदेतस्यां प्रतिज्ञायां साक्षात् साधनमिति ।

⊙ तत् किं हेयमेवेदं भाष्यं, नेत्याह—अत इति । सत्यम् । नेदमस्यां प्रतिज्ञायां साक्षात् साधनं, किन्त्वनेन ग्रन्थेन फलद्वारेण प्रतिज्ञानिराकरणमुक्तम् । पूर्वपक्षवादिनाप्यत्र ज्ञानस्य पूर्वोपलब्ध्या बुध्याकारो वाञ्छितः । तदनेन निराक्रियते । यदि बुद्धिः साकारा भवेत् सा तर्हि तथैव स्मर्येत । न चैवं केषुचिदवसरेषु, केवलग्राहकस्मरणात् । अतः किं मुधा मुग्धैः प्रागुपलब्धौ प्रयस्यते । एवमपि हि धीरनाकारैव यदसावाकारविमुक्ता स्मर्यते न पूर्वं ज्ञायते इति । किमुक्तं भवति । नानेन प्रकारेण सिसाधयिषितं बुद्धेः साकारत्वं सिध्यति, अनाकारस्मरणात् कदाचिदिति ।

श्लो०वा०—कामं बुद्धेरिति त्वेतदर्थाऽधीनत्वमुच्यते ।
'न चाऽर्थरूपाद्भेदेन धियामस्ति निरूपणम् ॥२४५॥
पररूपनिरूप्यं च न मेयं मृगतोयवत् ।
*असद्ग्राह्याऽनुसारेण ज्ञानसंवेद्यता तव ॥२४६॥
स्वच्छत्वात्तु स्वरूपस्य कल्पिता ग्राह्यता धियाम् ।
वासनोपप्लवात् तेन न मेयं पारमार्थिकम् ॥२४७॥

भा०—अपि च नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु घटप्रत्ययः । इतरथा तन्त्वादानेऽपि कदाचिद् घटबुद्धिरविकलेन्द्रियस्य स्यात् । न चैवमस्ति । अतो न निरालम्बनः प्रत्ययः । अतो न व्यभिचरति प्रत्यक्षम् ।

न्या०र०—वर्णनीयम्, पूर्वोपलब्धिसाधनस्य हि ज्ञानाकारत्वसिद्धिः फलं, तदनेन निराक्रियते, नीलाकारं हि ज्ञानं न तन्निर्मुक्तं स्मर्यते, अतो न ज्ञानं नीलाकारं, न च प्राक् ज्ञातुं शक्यम्; अतो न पूर्वं ज्ञायत इति ।

"काममेकरूपत्वे बुद्धेरेवाऽभावः, न त्वर्थस्य प्रत्यक्षस्ये" ति भाष्यमनुपपन्नम्, एवमद्वैतसिद्धेः, बुद्ध्यभावे चाऽर्थप्रत्यक्षत्वाऽयोगादत आह काममिति ॥२४५॥

यद्यवश्यमन्यतरदपह्नोतव्यम् अतो ऽर्थप्रकाशाऽधीनं तेनाऽनुमेयं ज्ञानमेवाऽपह्नोतव्यं, न तु प्रत्यक्षसिद्धो ऽर्थ इति । एवमतिशयोक्तिमात्रमिदं न परमार्थः । तदाह भाष्यकारः "न चैकरूप्य" मिति ।

"न चाऽर्थव्यपदेशमन्तरेणे" त्यादेः "तस्मादप्रत्यक्षा बुद्धि" £रित्यन्तस्य भाष्यस्याऽर्थमाह न चेति ॥२४५॥ सार्द्धद्वयेन ।

स्वच्छं हि चिन्मात्रं नैसर्गिकं ज्ञानरूपं, तत्तु वासनोपप्लवादविद्यमाननीलाद्याकारं प्रकाशतइति वो दर्शनं, न चैवमवगम्यमानं मृगतोयवत् प्रत्यक्षं भवति, पटरूपाव्यपदेश्यमिति च भाष्यार्थ इति ।

"अपि च नियतनिमित्त"□ इति भाष्यमाक्षिपति निमित्तेति ॥२४८॥

---

* त्वन्मते चायमपरो दोषः, यदसद्ग्राह्यानुसारेणैव तद् ज्ञानं संवेद्यते, स्वभावस्वच्छत्वात् ज्ञानस्य, नीलाद्याकारेण ग्राह्यता वासनोपप्लवात् कल्पितैव यतः । अतो न कथञ्चिज्ज्ञानमेव प्रत्यक्षप्रमेयं पारमार्थिकं वक्तुं शक्यते ।

£ न चाऽर्थव्यपदेशमन्तरेण बुद्धेः रूपोपलम्भनम् । तस्मान्न व्यपदेश्या बुद्धिः । अव्यपदेश्यं च न प्रत्यक्षं; तस्मादप्रत्यक्षा बुद्धिः ।

□ अपि च, नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः, इतरथा तन्त्वादाने ऽपि कदाचिद् घटबुद्धिरविकलेन्द्रियस्य स्यात् न चैतदस्ति; अतो न निरालम्बनः प्रत्ययः; अतो न व्यभिचरति प्रत्यक्षम् । शा० भा०

श्लो०वा०—£निमित्तनियतत्वं तु समानमुभयोरपि ।
निजशक्त्यनुसारित्वाज् ज्ञानबाह्यार्थवादिनोः ॥२४८॥
तन्त्वर्थैरपि कस्माद्धः क्रियते केवलः पटः ।
नाऽऽरभ्यते घटः किं तैर्मृत्पिण्डार्थेन वा पटः ॥२४९॥
तन्तुमृत्पिण्डविज्ञाने ह्यनुयोज्ये मते यदि ।
अर्थपर्यनुयोगोऽपि तद्वदेव प्रसज्यते ॥२५०॥
*अर्थाऽऽरम्भव्यवस्था चेत् सामर्थ्यनियमाऽऽश्रया ।
ज्ञानाऽऽरम्भव्यवस्थायां सामर्थ्यं केन वार्यते ॥२५१॥
तस्माद्यत्रोभयोर्दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥२५२॥
√देशकालनिमित्तानि व्यञ्जकान्यर्थवादिनः ।

न्या०र०—अर्थवादिनोऽपि हि स्वशक्तिवशादेव तन्तवः पटमारभन्ते, न घटं, मृत्पिण्डो वा घटं, ज्ञानवादिनोऽपि तन्तुज्ञानानि पटज्ञानं न घटज्ञानमिति सिद्ध्यत्येव व्यवस्थेति । तदेवं सति यदि ज्ञानवादी पर्यनुयुज्यते, इतरोऽपि शक्यः पर्यनुयोक्तुमित्याह तन्त्वर्थैरिति ॥२४९॥ एतदेव विवृणोति तन्त्विति ॥२५०॥

सामर्थ्यतस्तु व्यवस्थाऽऽश्रयणमितरस्यापि तुल्यमित्याह अर्थेति ॥२५१॥ उपसंहरति तस्मादिति ॥२५२॥

यथाऽऽहुः—
यथाविधं घटं दृष्ट्वा द्वैतवादी विचेष्टते ।
ज्ञात्वा तथाविधं ज्ञानमद्वैती किं न चेष्टते ॥ इति ॥

---

£ यदेतन्निमित्तानां तन्त्वादीनां नियतत्वं कार्येषु किञ्चिदेव निमित्तं किञ्चिदेव कार्यमुपजनयति नापरमिति, तदुभयोरपि ज्ञान—बाह्यार्थवादिनोः समानम्, उभयोरपि निजशक्त्यनुसारित्वात् कार्यसिद्धेः । निजयैव हि शक्त्या किञ्चिद् विज्ञानं तन्त्वाद्याकारं किञ्चिदेव तु पटाद्याकारं ज्ञानं जनयति तन्तव इव पटम् । न चात्रान्यतरः शक्योऽनुयोक्तुमिति ।

* यदि तु सामर्थ्यनियममाश्रित्यार्थानां तन्त्वादीनां कार्यव्यवस्थोच्यते, तज्ज्ञानानामपि ज्ञानान्तरारम्भे न दण्डवारितम् ।

√ परिहारमाह—देशेति । यदपि यस्य कारणं तदपि कदाचिदेव कार्यमारभमाणं दृष्टं न सर्वदा बीजमिवाङ्कुरम् । न हि तत् कुसूलाधिकरणमङ्कुरमारभते, किन्तु

श्लो०वा०—शक्तीनां कारणस्थानां स्वकार्यनियमं प्रति ॥२५३॥

शक्तयोऽपि च भावानां कार्यार्थापत्तिकल्पिताः ।
प्रसिद्धाः पारमार्थिक्यः प्रतिकार्यं व्यवस्थिताः ॥२५४॥
£भवतस्तु न विज्ञानाद्भिन्नाऽभिन्ना निरूप्यते ।
शक्तिः संवृतिसद्भावमुत्सृज्य परमार्थतः ॥२५५॥
वासनैव च युष्माभिः शक्तिशब्देन गीयते ।
निमित्तनियतत्वं च वासनाया यदुच्यते ॥२५६॥

न्या०र०—समाधत्ते देशेति ॥२५३॥ शक्तिमदपि हि तन्त्वादिकारणं न सर्वदा कार्यमारभते, किं तु शक्त्यभिव्यञ्जकं सहकारिणमपेक्षते, तच्च देशकालादितन्तुवायादिनिमित्तमस्मत्पक्षे विद्यते, यद्वशेन कदाचित् कार्यारम्भनियम इति । शक्तिरपि मत्पक्षेऽस्त्येव भावानां पारमार्थिकीत्याह शक्तय इति ॥२५४॥

भवतस्तु शक्तिरेव तावन्नास्तीत्याह भवत इति ॥२५५॥ शक्तिरपि संवृतिसत्यैव भवन्मते, संवृतिश्चाऽसत्यपर्याया न कार्यारम्भोपयोगिनीति । वासनैव च भवतां शक्तिरभिमता न वस्त्वन्तरमित्याह वासनेति ॥२५६॥

ततः किमित्यत आह निमित्ततेति । वासनायाः कारणत्वाद्यन्निमित्ताऽज्ञानान्नियतत्वमुच्यते किं चिदेव कस्य चिन्निमित्तं न सर्वं सर्वस्येति, तद्दुर्लभं, तस्या एवाऽसम्भवस्य निरालम्बनवादे दर्शितत्वादपारार्थ्याच्च; अस्माकं ह्यात्मार्था वासना, तदसावात्मप्रणिधानाद्यपेक्षया विलम्बतइति युक्तम्, भवतस्तु यस्मिन्नसावाहिता तस्य क्षणिकत्वाद-

---

देशविशेषं क्षेत्रादि कालविशेषं च ग्रीष्मादि निमित्तविशेषमुदकादिमासाद्य कदाचिदेव देशादिव्यङ्ग्यत्वात् कारणशक्तीनाम् । नैतत् ज्ञानवादिनां संभवति । अतः कस्य हेतोः उत्पन्नमृत्पिण्डविज्ञानस्यापि कदाचिदेव घटप्रत्ययो न सर्वदा । कस्माच्च उत्पन्नव्रीहिबीजपरिचयस्यापि ज्ञातुर्भाव्यङ्कुराकारपरिचयः । नहि तत्र दण्डोदकादि किञ्चिदस्ति कारणशक्तीनां व्यञ्जकं, यदपेक्षया कारणानि विलम्बन्ते । स्यान्मतं—मा भूवन् बाह्या देशादयः । तज्ज्ञानान्येव च कारणानामनुग्राहकाणि भविष्यन्तीति । तन्न, क्षणिकत्वेन अनुग्राह्या ऽनुग्राहकयोः साहित्याऽसम्भवात् ।

£ भवतस्तु बौद्धस्य न विज्ञानाद्भिन्ना अभिन्ना वा पारमार्थिकी शक्ति निरूप्यते, येन कार्यारम्भव्यवस्था घटते । संवृतिसद्भावमुत्सृज्येति । संवृत्या यः सद्भावस्तमुत्सृज्य न पारमार्थिकी शक्तिरस्ति । न च संवृतिसत्तया व्यवस्थायाः सिद्धिः ।

श्लो०वा०—तस्याश्चाऽसम्भवेनैतदपारार्थ्यांच्च दुर्लभम् ।
देशकालनिमित्तादि न च ते ऽस्ति नियामकम् ॥२५७॥
△मत्वैतदपि चेत्याह भाष्यकारः परं प्रति ।
तस्मादपरिहारो ऽयं तन्तुभ्यस्ते यथा पटः ॥२५८॥
तथा मे तन्तुबुद्धिभ्यः पटबुद्धिरितीदृशः ।
✤एवमाद्यप्रमाणाभ्यां न तावद्बाह्यशून्यता ॥२५९॥
£आगमस्य तु नैवेह व्यापारो ऽतो ऽन्यथा ऽपि वा ।
नोपमा सदृशाऽभावान्नाऽर्थापत्तिर्विपर्ययात् ॥२६०॥

न्या०र०—नन्याऽपेक्षत्वाच्च न किं चिद्विलम्बनिमित्तमस्तीति सर्वदैव तन्तुज्ञानात्पटज्ञानं स्यादिति । न च देशकालादिकमपि भवतामस्ति, यतः कदा चिदारम्भः कदा चिदनारम्भ इति नियमः सिध्येदित्याह देशेति ॥२५७॥

किं चाऽसत्यपि हि मृत्सलिलच्छन्नबीजज्ञाने अङ्कुरज्ञानं दृश्यते, अतो न कारणं ज्ञानं कार्यस्य ज्ञानस्य जनकमिति शक्यं वक्तुम् । तस्माद्युक्तं भाष्यकारमतमित्याह मत्वेति ॥२५८॥

पर्यनुयोगतुल्यत्वमप्ययुक्तमित्याह तस्मादिति ।

तदेवं प्रत्यक्षस्य बहिःप्रवृत्तिसामर्थ्यान्न तत्परीक्षया बाह्याऽभावः, न चाऽनुमानेन, तस्य तद्विरुद्धत्वात्; तस्मादाद्येन प्रमाणद्वयेन न बाह्याऽभावसिद्धिरित्याह एवमिति ॥२५९॥

आगमस्य नेह नाना ऽस्ति किंचनेत्यादेर्विद्यमानस्याऽऽत्मप्रशंसापरत्वाद् नाऽर्थाभावे व्यापार इत्याह आगमस्येति ॥२६०॥

---

△ सर्वं चेदमभिप्रेत्य अपिचेत्यादि भाष्यकारेण अभिहितमित्याह मत्वैतदिति । एवं चेत् परिहृतं पर्यनुयोगतुल्यत्वमित्युपसंहरति—तस्मादिति ।

✤ एवं च अनुमानदूषणात् प्रत्यक्षस्य च स्वस्मिन् वर्तितुमशक्तेर्न तावत् भवदभिमताभ्यामाद्याभ्यां प्रमाणाभ्यां बाह्यशून्यता सिध्यतीत्याह—एवमिति ।

£ आगमस्तु अनुष्ठाननिष्ठो नैवञ्जातीयके प्रमाणमित्याह—आगमस्येति । न बाह्यसद्भावे अभावे चेत्यर्थः । उपमानन्तु सिद्धवस्तुनः सादृश्यविषयं, न वस्तुसदसद्भावयोर्व्याप्रियते, न च किञ्चिच्छून्यं नाम ज्ञानातिरेकि सिद्धं, यच्छून्यतया ज्ञानमुपमीयते गृहेणेव प्रोषितचैत्रेण शून्यं मन्दिरान्तरमित्यभिप्रायेणाह—नोपमेति । अर्थापत्त्या तु तत्तद्भावभेददर्शनानुपपत्तिप्रभवया पृथिव्यादयो भावा व्यवस्थाप्यन्त एवेति सा परिपन्थिन्येव शून्यतायामित्याह—अर्थापत्तिरिति ।

श्लो०वा०—*तस्मादभावगम्यत्वं शून्यतायाः स्थितं हि नः ।
£एवं प्रमाणतो ऽसिद्धा यैः प्रमेयाऽऽश्रयोच्यते ॥२६१॥
△बाह्यस्याऽणुसमूहादेर्ग्राह्यस्याऽसम्भवे क्षणात् ॥

न्या०र०—प्रत्युत विविधोपकरणयुक्तविविधकर्मविधायिनः शास्त्रस्य, अतो ऽन्यथा शून्यत्वविपर्यये बाह्यसद्भाव एव व्यापार इत्याह अत इति । उपमानं तु सदृशदर्शनोत्पन्नं, न च ज्ञानाऽतिरिक्तं किंचित् शून्यमस्ति, येन ज्ञानं शून्यतयोपमीयेतेत्याह नोपमेति ।

अर्थापत्तिस्तु विचित्रव्यवहाराऽन्यथाऽनुपपत्त्या विचित्रान् ग्राह्यानुपदर्शयन्ती विपरीतैव शून्यताया इत्याह नाऽर्थापत्तिरिति । तदेवमभावगम्यत्वमेव शून्यतायाः पारिशेष्यादापन्नम् इत्याह तस्मादिति ॥२६१॥

एवं तावद्यदुक्तं 'प्रमाणस्यस्तुमूलत्वा' ⊙दिति, तद्विचारितं, संप्रति यत् सांन्यासिकं कृतं तत्राऽऽस्तां यः प्रमेयत इति; तदुपन्यस्यति एवमिति । न तावदणूनां ग्राह्यत्वं तेषामतीन्द्रियत्वात्, नाऽवयविजात्यादीनां, तेषां व्यतिरेकाऽव्यतिरेकविकल्पाऽक्षमाणां गगनकुसुमायमानत्वात्; अतो बाह्यं नास्तीति यैरुक्तं तेषामिदमुत्तरमित्याह तैरिति ॥२६२॥ यदा ऽऽभ्यन्तरस्य ज्ञानाकारस्य न कथं चिद्ग्राह्यत्वं सम्भवतीति स्थितं, तदा बाह्यस्यैव ग्राह्यत्वं बलादभ्युपगन्तव्यं, ततश्चाऽणूनां त्वदुक्तेनैव मार्गेण ग्राह्यत्वाऽसम्भवात्समूहाख्यस्यैव त्ववयविनस्तत्समवेतानां च जात्यादीनां ग्राह्यत्वमङ्गीक्रियतां; तेषां चाकृतिवादे सद्भावः प्रतिपादयिष्यते ।

---

* एवं चापन्नं षष्ठप्रमाणगोचरत्वं शून्यताया इत्याह—तस्मादिति । एवं तावत् न प्रमाणानुसारेण शून्यता सिध्यतीत्युक्तम् ।

£ इदानीं यत्तदुक्तं 'तत्रास्तां यः प्रमेयतः' इति, तदुपन्यस्य दूषयति—एवमित्युपेयमित्यन्तेन ।

△ न तावत् ज्ञानालम्बनाः परमाणवः अतीन्द्रियत्वात् । तत्सद्भावे प्रमाणाभावाच्च । न तत्समूहः, तदतिरिक्तस्य अनिरूपणात् । अवयविनश्च वृत्तिविकल्पातिरिक्तादिपरिचोदनाद्दूरीकृतनिरूपणत्वात् । अतो बाह्यस्य अण्वादेः ग्राह्यस्य असंभवादेव पारिशेष्यसिद्धमात्मालम्बनत्वं सर्वसंविदामितिप्रमेयाश्रया च शून्यता यैरुच्यते, तैरपि वादिभिर्यथोक्तादान्तरस्य ग्राह्यस्य—असंभवात् स्वात्मनि वृत्तिविरोधादिदमिति च पररूपनिरूपणादवश्यमेव अन्यस्य ज्ञानाद् ग्राह्यत्वं बलादुपेयमनालम्बनज्ञानाऽसम्भवात् ।

⊙ स्यस्तु तन्मूलत्वादिति पा० ।

श्लो०वा०—तैरन्तराऽसम्भवतो यथोक्ताद्
ज्ञेयं स्वमन्यस्य बलादुपेयम् ।
*ग्राह्या न चेष्टाः परमाणवो ऽतः
सत्यः समूहः प्रतिपादनीयः ॥२६३॥
इति बहिर्विषयप्रतिपादनाद्
तदभावकृता मतिसंवृतिः ।
£उभयतत्त्वविदां परमार्थतः
क्षममिदं धुरि धर्मविचारणे ॥२६४॥

इति शून्यवादः ॥

न्या०र०—सिद्धे बाह्यार्थे यन्मध्यमिति माध्यमिकैरुक्तम्, अर्थाभावादेव ज्ञानमपि नास्तीति, तदपि मूलनिरासादेव निरस्तमित्याह इतीति ॥२६३॥ मतिसंवृतिरिति, ज्ञानाभाव इत्यर्थः । सति त्वेवं ज्ञानमर्थं चोभयमपि तत्त्वतो जानतां मीमांसकानाम् इदमुभयं धर्माख्यरथाङ्गभूते धूःशब्दार्थे विचारे युग्यद्वयमिव धूर्वहने समर्थं चोभयमपि तत्त्वतो ज्ञातमर्थशून्यासूत्तरबुद्धिषु नेति सर्वमीमांसाशास्त्रं दुस्स्थं स्यादित्युक्तम् । इदानीमर्थालम्बनत्वे साधिते विचारात्मकं शास्त्रं समर्थितमित्याह उभयेति ॥

इति श्रीपार्थसारथिमिश्रविरचिते न्यायरत्नाकरे शून्यवादः ॥



* स्वांशवत् अण्वादयो ऽपि ग्राह्या न सम्भवन्तीत्युक्तमत आह—ग्राह्या इति । अयमभिप्रायः—यत्तावत् अणूनामग्राह्यत्वं तदस्माकमपि सिद्धमेवेति किं तन्निराकरणेन । समूहोऽपि वनादितुल्यः अनभ्युपगमनिराकृत एवेति । यस्तु समूहापरनामा अवयवी स एव सत्यः ।

£ अयमभिप्रायः—धर्मो रथो ऽस्यावयवो युगापर पर्यायो धूर्विचारः । तेन हि धर्मरथो घटितः, तद्वहनाय चेदं ज्ञान-ज्ञेयात्मकमुभयं तत्त्वतो ज्ञातं क्षमं भवति । संवृतिकल्पितं तु न धुरं वोढुं क्षममिति धर्मरथोऽवसीदेत् । न हि असमर्थाभ्यां धुर्याभ्यां धूरुह्यते । नहि परमार्थतः असतोः संवित्संवेद्ययोः सामर्थ्यमस्ति । अतो यदुक्तं 'यदा संवृतिसत्येने' ति, दूषितं च 'संवृतेर्न तु सत्यत्वमि' ति तदेवात्रोपसंहृतमित्यनुसन्धातव्यम् ।—(काशिका) ।

# अथाऽनुमानपरिच्छेदः ।

भा०—अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः । तत्तु द्विविधम्—प्रत्यक्षतो दृष्टसम्बन्धम्, सामान्यतोदृष्टसम्बन्धञ्च । प्रत्यक्षतो दृष्टसम्बन्धं यथा धूमाकृतिविज्ञानादग्न्याकृतिविज्ञानम् । सामान्यतोदृष्टसम्बन्धं यथा देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्येऽपि गतिस्मरणम् ॥

श्लो०वा०—*प्रत्यक्षाऽव्यभिचारित्वादेवंलक्षणकं च यत् ।
प्रसिद्धमनुमानादि न परीक्ष्यं तदप्यतः ॥१॥
£प्रमाता ज्ञातसम्बन्ध एकदेश्यथ वोच्यते ।
कर्मधारयपक्षो वा सम्बन्धिन्येकदेशता ॥२॥

न्या०र०—"अनुमानं ज्ञातसम्बन्धस्ये" □ति भाष्यं तस्याऽभावपर्यन्तस्य लक्षणग्रन्थस्य तात्पर्यमाह प्रत्यक्षेति ॥१॥

निमित्तसूत्रे हि प्रमाणानां प्रसिद्धत्वेनाऽपरीक्ष्यत्वे वर्णिते व्यभिचारात्परीक्षितव्यं, शुक्तिरजतवेदने प्रत्यक्षस्य व्यभिचारात्तत्पूर्वकत्वाच्चेतरेषामपि व्यभिचार इति चोदिते प्रत्यक्षस्यैवंपर्यन्तेन ग्रन्थेनाऽव्यभिचारित्वेनाऽपरीक्ष्यत्वमुक्तं, ततश्च तत्पूर्वकत्वेन यदनुमानादीनां व्यभिचारित्वमुक्तं, तत्परिहृतम्, इदानीमात्मीयलक्षणेनाऽव्यभिचारादनुमानादिकं न परीक्ष्यमित्युच्यते । एवंलक्षणं यत्प्रसिद्धम् अनुमानादि तदप्यत एवंलक्षणकत्वादेव प्रत्यक्षाऽव्यभिचारित्वाच्चऽपरीक्ष्यमित्यक्षरार्थ इति ।

संप्रति प्रत्येकं लक्षणानि व्याचक्षाणः प्रथममनुमानलक्षणमनुसंधत्ते प्रमातेति ॥२॥ ज्ञातसम्बन्ध इति तृतीयार्थे बहुव्रीहिः । बुद्धिसम्बन्धजनितव्यतिरेकस्य प्रमातुः

---

* प्रत्यक्षस्य अव्यभिचारित्वेऽपि शंकानिवृत्तये "सत्सम्प्रयोगे" इत्यादिना लक्षणतः प्रतिपाद्य इदानीं तुल्यप्रयोजनत्वात् अनुमानादिलक्षणप्रदर्शनार्थत्वाच्च प्रत्यक्षसूत्रस्य अनुमानलक्षणं तावदाह भाष्यकारः—"अनुमानं ज्ञातसम्बन्धस्य एकदेशदर्शनादेकदेशान्तरे असन्निकृष्टे अर्थे बुद्धिः" इति । तस्य तात्पर्यं व्याचष्टे वार्तिककारः । "प्रत्यक्षेति ।"

£ इदानीमवयवार्थं व्याचष्टे—प्रमाता ज्ञातसम्बन्ध इति । व्याख्यानान्तरमाह—एकदेश्यथवोच्यते इति । समासबलीयस्त्वेन व्याख्यानान्तरमाह—कर्मधारयपक्षोवेति । सम्बन्धस्य निरवयवत्वात् "एकदेशदर्शनादेकदेशान्तरे" इत्यनुपपन्नमित्याशङ्क्याह—सम्बन्धिन्येकदेशतेति ।

□ शा० भा० पृ० १० प० ११ ।

श्लो०वा०—नित्याऽयत्नोत्थयत्नोत्थाऽनित्येषु[1] द्विरनित्यता[2]* ।§
£नित्या भूर्गन्धवत्त्वेन स्यादसाधारणस्त्वयम्[3] ॥८६॥
√निश्चयैकाङ्गवैकल्या[3]देष संशयकारणम् ।
*[4]साधारणो यथा दृष्टो बुद्धिद्वयनिमित्तकः ॥८७॥
विरुद्धैकाऽनवाप्तेश्च संशये कारणं [4]मतम् ।
[5]अत्राऽसाधारणो नास्ति तदभावमुखेन तु ॥८८॥

न्या०र०—विद्यते, अनित्यत्वं च यत्नोत्थेषु घटादिष्वयत्नोत्थेषु विद्युदादिषु विद्यमानं द्वयोरन्यतरस्यापि साधनत्वेनोच्यमानम् उभयवर्त्तित्वात्साधारणम् । अमूर्त्तत्वमपि नित्येषु व्योमादिष्वनित्येषु कर्मादिषु भावात्साधारणम् । अतः साध्यतदभाववृत्तिभिर्हेतुभिरुभयोः संशयो भवति, नैकत्रापि निश्चय इति चतुर्ष्वपि साध्येषु शब्दो धर्मी ।

असाधारणमुदाहरति नित्येति ॥८६॥

भूमावेव हि गन्धो नाऽन्यत्र क्वचिन्नित्येष्वनित्येषु वा विद्यते, अतो ऽसाधारणोऽयमिति । युक्तं तावत्साधारणो द्वाभ्यां सह दृष्टो द्वये स्मृतिं जनयन् संशयहेतुरिति, यश्चाऽसाधारणः स केनापि सहाऽदृष्टः क्व चिदपि बुद्धिमनादधत्कथं संशयहेतुरत आह निश्चयेति ॥८७॥

सपक्षाऽन्वयो विपक्षव्यतिरेकश्च द्वयं निश्चयाङ्गं, तत्र साधारणस्य सपक्षान्वयो

---

१. 'त्थनित्येषु'—क, २. 'ता'—क, ३. 'स्यादुभौ संशय'—ख,
४. 'मतः'—क, ५. 'यत्रा'—ख,

* नित्ये बुद्धिरनित्यतेति ३ पु० पा० ।

§ ननु च विषमसंख्यत्वाद्यथासख्यं न घटतइत्यत्राह—द्विरनित्यतेति । साधनधर्ममध्ये द्विरनित्यता द्रष्टव्या—प्रमेयानित्यतानित्यतामूर्तिधर्मा इति यावत् ः

£ द्वाभ्यां व्यावृत्त एव—इत्यत्रोदाहरणमाह—नित्याभूरित्यर्धेन ।

√ भवतु वा साधारणस्य संशयहेतुत्वम्, तदुपलब्धौ संशयदर्शनात्, असाधारणधर्मोपलब्धौ तु संशय एव नोपजायत इत्याशङ्क्याह—निश्चयेत्यर्धेन ।

* व्यतिरेकविकलो हि साधारणः; असाधारणोऽन्वयविकलः; एतदेव श्लोकद्वयेन दर्शयन्नाह—साधारण इति । यथाहि साधारणस्योभयत्रदर्शनादुभयबुद्धिनिमित्तत्वं व्यतिरेकविकलत्वेन चोभाभ्यामेकेनापि अनवाप्तेः संशयहेतुता, एवमेव असाधारणस्यापि उभयत्रापि अदर्शनात् उभयाभावमुखेन उभयरहितस्य वस्तुनोऽदर्शनात् संशयहेतुतेति प्रक्रिया । एवं च व्यतिरेकान्वयविकलत्वेन साधारणासाधारणयोः संशयहेतुत्वमुक्तम् ।

श्लो०वा०—द्वयाऽसत्त्वविरोधाच्च 'मतः संशयकारणम्'।
£सन्दिग्धहेतुता चैषां विषयाऽपेक्ष[2]योच्यते ॥८९॥
'निर्णयस्यापि हेतुत्वं दृष्टं साध्यान्तरे यतः।
व्यवच्छेदाऽन्वयौ लब्ध्वा' निष्क्रियादावमूर्तिवत् ॥९०॥
क्षित्यैकदेशसि[3]द्धत्वे गन्धवत्त्वस्य हेतुता।

न्या०र०—ऽस्ति, विपक्षव्यतिरेकस्तु नास्ति, तत्रापि वृत्तेरसाधारणस्य विपक्षव्यतिरेको ऽस्ति न सपक्षान्वयो ऽस्ति। तेन निश्चयैकाङ्गवैकल्यात्साधारणवदसाधारणो ऽपि संशये कारणमिति।

नन्वेकाङ्गविकलतामात्रेण क्व चिदपि द्वयोर्बुद्धिमनादधतः कथं संशयहेतुत्वम्, अत आह साधारण इति द्वयेन। न हि साधारणो द्वयोः स्मृतिजननात्संशयहेतुः, किं तु द्वाभ्यां सह दृष्टः पक्षधर्मिणि दृश्यमानो द्वयमपि तत्राऽनुमापयति, द्वयोश्चैकत्र विरोधात्संशयो भवति। संशयनिमित्ताऽनुमानबुद्धिद्वयं यस्य कार्यतया विद्यते स बुद्धिद्वयनिमित्तकः। एवमसाधारणो ऽपि यत्र नित्ये ऽनित्ये वा नास्ति तयोरुभयोः पक्षधर्मिण्यभावमनुमापयन्नुभयाऽभावस्य त्वेकत्राऽसंभवात्संशयहेतुरिति। तदिदं शाक्यमतेनाऽसाधारणस्य संशयहेतुत्वमुक्तं, स्वयं त्वस्य संशयहेतुत्वं प्रदेशान्तरे निरस्तम्। न हि साधारणो द्वयमनुमापयन्संशयनिदानं द्वयोरपि नियमाभावेनाऽनुमानाऽसंभवात्किं तु द्वाभ्यां सहदृष्टिमात्रेण, जनयति। विरुद्धाऽर्थद्वयस्मरणं चाऽन्यतरनिर्धारणकारणाभावे संशयं जनयति। द्वयोः स्मरणं यस्त्वसाधारणः क्व चिदप्यदृष्टो धर्मिवदेव न क्व चिद्भावे ऽभावे वा स्मृतिं जनयतीति नाऽस्य संशयहेतुत्वमिति।

किं पुनरुदाहृतानां स्वाभाविकमेव संशयहेतुत्वं, नेत्याह संदिग्धेति ॥८९॥

कस्मादित्यत आह निर्णयेति ॥९०॥ पादत्रयेण।

क्व दृष्टमित्याह निष्क्रियादाविति। अमूर्त्तत्वं हि नित्यत्वे साध्ये कर्मादिष्वपि वर्त्तमानं विपक्षव्यवच्छेदाभावात्संशयहेतुः। निष्क्रियत्वे तु साध्ये तल्लाभान्निर्णयहेतुर्भवति; तथा गन्धवत्त्वमपि सर्वस्यां पृथिव्यां नित्यत्वेन पक्षीकृतायां पृथिवीव्यतिरेकेणा-

---

१. 'स नः'—ख, २. 'येष्यते'—ख, ३. 'क्तत्वे'—ग,

£ यत्र तु साध्ये साधारणोऽपि विपक्षव्यतिरेकं लभते असाधारणश्च अन्वयम्। तत्र तयोर्गमकत्वमेवेत्याह—सन्दिग्धेति सपादश्लोकेन। अत्रैवोदाहरणमाह—निष्क्रियेत्यादित्रिपाद्या। अत्र च साधारणत्वे सत्येव न हेतुत्वम्, किन्तु निष्क्रियत्वे मूर्तत्वस्य क्षित्येकदेशसिद्धत्वे च गन्धवत्त्वस्य साधारणासाधारणत्वमेव नास्ति।

श्लो०वा०—*यत्राऽप्रत्यक्षता वायोररूपत्वेन[1] साध्यते ॥९१॥
स्पर्शात्प्रत्यक्षता वा[2]ऽसौ विरुद्धाऽव्यभिचारिता।
√केचिज्जात्यन्तरं चैनां वर्णयन्त्यपरे पुनः ॥९२॥
साधारणत्वमंशेन [3]समस्ते वा [4]ऽप्यनन्वयम्।
प्रतिज्ञा यत्र बाध्येत पूर्वोक्तैर्यस्य साधनैः ॥९३॥
तत्पराजयतः कार्यो निर्णयो [5]बाध-वर्जनात्।
क्वचित्संशयहेतू यौ प्रत्येकत्वेन लक्षितौ ॥९४॥

न्या०र०—ऽन्यत्र क्व चिदप्यभावादलब्धसपक्षान्वयं संशयहेतुः। तदेव क्षित्येकदेशस्य सिद्धत्वेन तदेकदेशे साध्ये तदेकदेशान्तरे साध्याऽन्वयलाभान्निर्णयहेतुरिति।

विरुद्धाऽव्यभिचारित्वमुदाहरति यत्रेति ॥९१॥

द्रव्यत्वे सत्यरूपत्वादिति, महत्त्वे सति स्पर्शवत्त्वादिति च, तामिमां विरुद्धाऽव्यभिचारितां केचित्साधारणाऽसाधारणाभ्यां जात्यन्तरं वर्णयन्ति। अपरे तु द्वयमप्यंशेन सपक्षविपक्षयोर्वर्त्तमानं साधारणे ऽन्तर्भावयन्ति। द्वयस्यापि मिलितस्याऽत्र क्व चिदप्यभावादसाधारणत्वमित्यन्ये। तदाह केचिदिति ॥९२॥

स्वयं तु जात्यन्तरत्वमेवाऽत्राभिमतं, त्रयः संशयहेतव इत्युक्तत्वादिति।

कथं पुनरेवं साधनद्वयनिमित्ते संशये निर्णयः, अत आह प्रतिज्ञेति ॥९३॥

यस्य साधनस्य प्रतिज्ञा प्रत्यक्षादिना बाध्यते तस्य पराजयं कृत्वेतरेण निर्णयः, तस्य बाधाऽभावाद्यथा वायावेवाऽपरोक्षाऽनुभवेनाऽप्रत्यक्षाऽनुमानं बाध्यतइति।

यत्तु भिक्षुणा पक्षधर्मस्तदंशेन व्याप्तो हेतुरिति एकस्यैव हेतुत्वविवक्षया ऽनेकयोर्विरुद्धाऽव्यभिचारिणोराभासत्वं दर्शितं, तन्निराकरोति क्व चिदिति ॥९४॥

न हि विरुद्धाऽव्यभिचारिणोरनेकत्वादनिर्णायकत्वम्, ऊर्द्धत्वकाकनिलयनाभ्यां स्थाणुपुरुषस्थाणुस्थलसाधारणाभ्यां प्रत्येकं स्थाणुत्वनिर्णयाऽसमर्थाभ्यामपि सहिताभ्यां ताभ्या-

---

१. 'पित्वेन'—क, २. 'चा'—ख, ३. समस्तं
४. 'असन्मयम्'—ग, ५. 'बाध्य'—ग,

* द्वौ विरुद्धार्थसम्बन्धौ" इति यदुक्तं तत्रोदाहरणमाह—यत्रेति। चक्षुर्ग्राह्यत्वाग्राह्यत्वे अत्र साध्यत्वेन विवक्षिते। अप्रत्यक्षत्वमात्रे तु रसादावरूपत्वस्य सद्भावादनैकान्तिकत्वं स्यात्।

√ विरुद्धाव्यभिचारित्वं च केचित् साधारणासाधारणाभ्यां संशयहेत्वन्तरं वर्णयन्ति। अपरे तु अरूपस्पर्शत्वयोरंशेन सपक्ष-विपक्षयोर्वृत्तिदर्शनात् साधारणत्वम्। धर्मद्वयस्य तु ताभ्यां व्यावृत्तत्वेन असाधारणत्वमित्याह—केचिदिति।

श्लो॰वा॰—संघाते निर्णयस्ताभ्यामूर्ध्वताकाकवत्त्ववत् ।
प्रत्येकं 'संहतौ वा' ऽपि गमकाववि रोधिनौ ॥९५॥
£तस्माद्भिन्नौ विरुद्धा'र्थौ हेतू 'चात्र 'निर्दशितौ ।
षोढा विरुद्धतामाहुश्चतुर्धा वैकधा ऽपि वा ॥९६॥
श्रुत्यर्थोक्तस्य बाधायां प्रतिज्ञार्थस्य 'हेतुना, ।
नित्यत्वे कृतकत्वस्य धर्मबाधाद्विरुद्धता ॥९७॥
'बाधो धर्मविशेषस्य यदा त्वेवं 'प्रयुज्यते ।
अर्थवच्छब्दरूपं स्यात् प्राक्सम्बन्धाऽवधारणात् ॥९८॥

न्या॰र॰—मेव स्थाणुत्वनिर्णयदर्शनादिति । तथा प्रत्येकमग्न्यनुमापकाभ्यां गन्धविशेष-धूमाभ्यां सहिताभ्यामपि विरोधिभ्यां तदनुमानं दृश्यते, अतो नाऽनेकत्वमहेतुत्वकारण-मित्याह प्रत्येकमिति ॥९५॥

तस्माद्विरुद्धार्थव्याप्ताऽनेकहेतुसन्निपात एव संशयनिमित्तत्वेनोदाहर्तव्यः । नाऽनेक-त्वमात्रमिति । एकत्वविवक्षाऽभिधानमनुपपन्नम्, तथा हि अविरुद्धस्याप्यनेकस्य निरासः स्यात्, स चा ऽयुक्त इत्युक्तं, तदाह तस्मादिति । ९६॥

प्रपञ्चितस्त्रिधा संशयहेतुः, विपरीतहेतुं प्रपञ्चयति षोढेति । धर्मधर्म्युभयेषां स्वरूपविशेषाभ्यां षड्विधत्वमुभयस्यैकैकाऽनतिरेकात् चतुर्विधत्वम्, अवान्तरभेदस्याऽनुप-योगात्, प्रतिज्ञार्थबाधाऽविशेषादेकविधत्वमिति । कीदृशे विषये विरुद्धता, तां दर्शयति श्रुतेति ॥९७॥

धर्मविशिष्टधर्मिवचनं प्रतिज्ञा, तेन श्रुत्युक्तस्य धर्मधर्मिस्वरूपस्याऽर्थाक्षिप्तस्य तद्विशेषस्य यत्र हेतुना बाधः तत्र विरुद्धतेति । सो ऽयं प्रतिज्ञार्थं बाधमानो विरुद्धश्च बाधक इति वा विरोधीति वा* वाच्यो न विरुद्ध इति, शाक्यपरिभाषया तु विरुद्धशब्द इति ।

---

१. 'संहितौ'—ग, २. 'चा'—ख, ३. 'र्थं'—ख,
४. 'वात्र'—ग, ५. 'निदर्शनम्'—ख, ६. 'विशिष्यते'—क,

£ तस्माद् विरुद्धार्थावेव भिन्नौ संशयहेतुत्वेन दर्शनीयौ । यथास्माभिरुक्तं न तु भिन्न-तामात्रेणेत्याह—तस्मादिति । व्याख्यातस्त्रिप्रकारोऽपि संशयहेतुः । विपरीत-प्रकारान् प्रतिजानाति—षोढा विरुद्धतामाहुरिति । श्रुत्यर्थोक्तस्य प्रतिज्ञार्थस्य हेतुना बाधायां विरुद्धत्वम्, षट्प्रकारं तदेके मन्यन्ते—धर्मधर्म्युभयेषां स्वरूपविशेषे विप-रीतसाधनात्, चतुष्प्रकारत्वमपरे—धर्मधर्मिस्वरूपविपरीतसाधनादुभयस्वरूपोभय-विशेषयोस्तत्रैवान्तर्भावात्, साध्यविपर्ययसाधनादेकप्रकारमपरे ।

श्लो०वा०—विभक्तिमत्त्वात्पश्चाद्वत्स्वरूपेणेति चाऽऽश्रिते ।
अस्वरूपाऽर्तयोगस्तु पश्चाच्छब्दस्य 'दृश्यते ॥९९॥
तेन प्रागपि सम्बन्धादस्वरूपार्थता भवेत्' ।
✓इहप्रत्ययहेतुत्वाद् द्रव्यादेर्व्यतिरिच्यते ॥१००॥
'समवायं यथेहाऽयं घट इत्यादिसङ्गतिः ।
£अत्राप्यसमवायत्वं संयोगस्येव सिध्यति ॥१०१॥
तेन धर्मिस्वरूपस्य वैपरीत्याद्विरुद्धता ।
यच्च सत्तावदेकत्वं समवायस्य कल्पितम् ॥१०२॥

न्या०र०—धर्मस्वरूपबाधमुदाहरति नित्यत्वे इति । धर्मविशेषबाधमुदाहरति बाघ इति ॥९८॥ सार्द्धद्वयेन ।

यो हि स्वरूपमेव शब्दानामभिधेयमित्याश्रित्य तत्सिद्धयर्थमेवं प्रयुङ्क्ते, सम्बन्धग्रहणात्प्रागपि शब्दो ऽर्थवान्, अर्थं बोधयतीति यावत्, विभक्तिमत्त्वात् पश्चाद्वदिति, सिद्धे चाऽर्थंबोधनेऽर्थान्तरबोधाऽभावात्स्वरूपार्थत्वं सिद्धं भवतीति, तं प्रत्युच्यते। सम्बन्धग्रहणात्पश्चात्स्वरूपाऽतिरिक्ताऽर्थबोधेन विभक्तिमत्त्वस्य व्याप्तिदर्शनाद् दृष्टान्ताऽनुसारेण प्रागप्यस्वरूपाऽर्थबोधनमेव साधयेत्, तच्च प्रमाणान्तरविरोधादशक्यं साधयितुम् । यत्तु शक्यं स्वरूपार्थत्वं तदनेनैव हेतुना बाध्यते, शक्यते हि प्रयोक्तुं प्राक् सम्बन्धान्न स्वरूपार्थत्वं विभक्तिमत्त्वात् पश्चाद्वदिति । यदा चार्थान्तरबोधनं दृश्याऽदर्शनेन स्वरूपार्थत्वं च हेतुनैव बाधितं तदा प्रकारान्तराऽसम्भवादर्थवत्त्वमेव प्रतिज्ञार्थो बाधितो भवतीति ।

धर्मिस्वरूपतद्विशेषबाधोदाहरणमाह इहेति ॥१००॥

संगतिः, संयोग इति । स्वरूपबाधं दर्शयति अत्रापीति ॥१०१॥

विशेषविरोधं दर्शयति यच्चेति ॥१०२॥

---

१. 'शस्यते'—ग,  २. 'समवायो'—क,

✓ धर्मिस्वरूपबाधोदाहरणमाह—इह प्रत्ययेति । यदाहि समवायं धर्मिणं कृत्वा तस्य द्रव्यादिव्यतिरेकः साध्यते, इहप्रत्ययहेतुत्वं च हेतुरुच्यते इहायं घट इति, संयोगो दृष्टान्तः, तदा धर्मिस्वरूपबाधः ।

£ कथं पुनरत्रोदाहरणे धर्मिस्वरूपबाधः ? अत आह अत्रापीति । अत्राप्युदाहरणे धर्मिस्वरूपस्य समवायात्मनो वैपरीत्यापादनाद्धेतो विरुद्धता भवति । इहप्रत्ययहेतुत्वं हि असमवायात्मन एव दृष्टमिति तादूप्यं विरुन्ध्यादिति धर्मिस्वरूपबाधः ।

श्लो०वा०—तत्र संयोगवद्भेदात् स्याद्विशेषविरुद्धता ।
*नित्यमात्माऽस्तिता कैश्चिद्यदा सौत्रान्तिकं प्रति ॥१०३॥
साध्यते ऽवयवाऽभावाद्व्योमवद् द्वयबाधनम् ।
£तदो[1]भयविशेषस्य [2]बाधो ऽयं साध्यते यदा ॥१०४॥
पारार्थ्यं चक्षुरादीनां संघाताच्छयनादिवत् ।
शयने संघपारार्थ्यं भौतिकव्याप्तहेतुके ॥१०५॥
आत्मानं प्रति पारार्थ्यमसिद्धमिति बाधनम् ।
असंहतपरार्थत्वे[3] दृष्टे संहतता ऽपि च ॥१०६॥

न्या०र०--संयोगे हि प्रतिद्रव्यं भेदेन व्याप्तमिहप्रत्ययहेतुत्वं समवायस्यापि भेदमापादयत् तस्य विशेषसत्तावदेकत्वं वैशेषिकाऽभिमतं बाधेतेति ।

उभयस्वरूपबाधमुदाहरति नित्यमिति ॥१०३॥

सौत्रान्तिकस्याऽऽवरणाऽभावमात्रं व्योम, अभावस्य तुच्छत्वात् स्वरूपमेव नास्ति, नतरां नित्यत्वम्; अतस्तेनैव दृष्टान्तेनाऽऽत्मनो ऽपि स्वरूपं नित्यतां चाऽनवयत्वं बाधेतेति ।

उभयविशेषबाधमुदाहरति तदेति ॥१०४॥

सांख्यानां प्रकृत्यतिरिक्तं पुमांसं साधयतामयं प्रयोगः, सिद्धे पारार्थ्ये यो ऽसौ परः स पुमानित्यभिप्रायः । सघातात्सत्त्वरजस्तमआत्मकत्वादित्यर्थः ।

अत्र विशेषविरोधं दर्शयति शयने इति ॥१०५॥

शयनादिषु संघातात्मकशरीरपारार्थ्येन भौतिकत्वेन च व्याप्तः संहतत्वहेतुर्दृष्ट इति स चक्षुरादीनामपि संहतपारार्थ्यसाधनादिष्टमसंहतरूपं प्राकृतैः सत्त्वरजस्तमोभिरसंपृक्तं

---

१. 'भयोर्विः'—ख, २. 'बाधेवं'—ख, ३. 'इष्टे'—ख,

* उभयस्वरूपबाधायामुदाहरणमाह—नित्यमात्मास्तितेति । यदा कश्चित् सौत्रान्तिकं प्रत्येवं साधयति आत्मा नित्यः निरवयवत्वात् व्योमवत् इति, तदा धर्मधर्मिद्वयस्य बाधनं भवति । सौत्रान्तिकस्य हि अवयवाभावो व्योम्न्यभावेनैव सम्बद्धोऽभिमतः, इत्यात्मनोपि तद्वदभावं गमयेत्, आवरणाभावमात्रं हि नभः, न पुनस्तत्त्वान्तरमिति बौद्धा मन्यन्ते । अतोऽनवयवत्वादात्मनः स्वरूपस्य तद्धर्मस्य च नित्यत्वस्य बाधादुभयबाधः ।

£ उभयविशेषबाधोऽत्र प्रयोग इति दर्शयति—तदोभयोरिति । चक्षुरादीनामिति धर्मिनिर्देशः, पारार्थ्यमिति साध्यो धर्मः भागवत्त्वलक्षणात् सङ्घातादिति हेतुः, शयनादिवदितिदृष्टान्तः ।

श्लो०वा०—*[1]अनहङ्कारिकत्वं च चक्षुरादेः प्रसज्यते ।
£गमकस्यैकदेशस्य [2]व्याप्तिर्गम्येति भाषितुम् ॥१०७॥
साध्यसाधर्म्यवैधर्म्यदृष्टान्तः प्रतिपाद्यते ।
तत्र हेत्वर्थमुद्दिश्य साध्योपादानमिष्यते ॥१०८॥
उद्देश्यो व्याप्यते धर्मो व्यापकश्चेतरो मतः ।
यद्वृत्तयोगः प्राथम्यमित्या[3]द्युद्देश्यलक्षणम् ॥१०९॥
तद्वृत्तमेवकारश्च स्या[4]दुपादेयलक्षणम् ।

न्या०र०—चिन्मात्ररूपमात्मानं प्रति पारार्थ्यं धर्मविशेषं धर्मिणामपि चक्षुरादीनां धर्मविशेषमाहंकारिकत्वं बाधेतेति । एतदेव विवृणोति असंहतेति ॥१०६॥

संहतरूपवस्त्वन्तरपारार्थ्यसाधनात् प्रकृत्यतिरिक्तात्मपारार्थ्यमभिमतं न सिध्येत्, अतो न सिषाधयिषिताऽऽत्मसिद्धिरिति ।

दर्शिता हेत्वाभासाः, संप्रति ज्ञातसंबन्धपदव्यावर्त्तितानेवदृष्टान्तदोषान्दर्शयितुं दृष्टान्तवचनमेव तावत् प्रस्तौति गमकस्येति ॥१०७॥

साध्यो धर्मविशिष्टो धर्मी, तत्साधर्म्येण साध्यधर्मवत्तया वैधर्म्येण च तदभाववत्तया चाऽवस्थितो यो दृष्टान्तः स गमकस्य हेतोर्गम्येन व्याप्तिं दर्शयितुं प्रतिपाद्यतइति । प्रतिपादनप्रकारं दर्शयति तत्रेति ॥१०८॥

हेतुः साधनवाक्याऽवयवः कृतकत्वादित्यादिः, तस्यार्थः कृतकत्वादिलिङ्गं, तमुद्दिश्याऽनित्यत्वादेः साध्यस्योपादानं कार्यम्; कस्मादित्याह उद्देश्य इति ॥१०९॥

---

१. 'अना'—ख, २. 'व्याप्तिं गम्येन'—ख, 'व्याप्तं गम्येत'—ग,
३. 'द्युद्देशलक्षणम्'—ग, ४. 'दुपादानलक्षणम्'—ग,
* धर्मिविशेषबाधं विवृणोति—अनहङ्कारिकत्वमिति ।
£ एवं तावद् ज्ञातसम्बन्धपदव्यावर्तनीयो विरुद्धः प्रपञ्चितः । इदानीं तद्व्यावर्त्या एव दृष्टान्ताभासा दर्शयितव्याः । तैर्हि नानुमानाङ्गसम्बन्धो ज्ञापयितुं शक्यते । अतस्तेपि ज्ञातसम्बन्धपदेनैव व्यावर्त्यन्ते ।

अन्यत्राप्याह—
"ज्ञातसम्बन्धवाचा च त्रयोऽत्रानियतादयः ।
हेतुदृष्टान्तयोर्दोषा भाष्यकारेण वारिताः ॥"
अतस्तन्निराकरणार्थं दृष्टान्तवचनमेव तावदवतारयति—गमकस्येति । व्याप्तिप्रदर्शनाय द्विविधो दृष्टान्तस्तावद् साधनवाक्ये दर्शयितव्यः । साध्यः पक्षः तत्साधर्म्यवैधर्म्याभ्यां यो दृष्टान्तः स प्रतिपाद्य इत्यर्थः ।

श्लो०वा०—वदत्यर्थं स्वशक्त्या च शब्दो वक्त्रनपेक्षया ॥११०॥
*साध्यहेतुत्वमर्थानां व्याप्तिशक्त्यनुरोधतः ।
£'तत्राज्ञानाद्यदा वक्ता [1]'सहचार✤विवक्षया ॥१११॥

न्या०र०—यदुद्देशेन हि यदुपादीयते तस्य तेन व्याप्तिः कथिता भवति, तेन लिङ्गस्य व्याप्यतां लिङ्गिनश्च व्यापकतां दर्शयता लिङ्गोद्देशेन लिङ्ग्युपादीयतइति । कीदृशः पुनरुद्देशः, कीदृशं चोपादानं तद्दर्शयति यद्वृत्तेति । किं यत्तद्वृत्तग्रहणं तानेव विभक्त्यन्तान् डतरडतमान्तांश्च गृह्णाति यत्कृतकं तदनित्यमेवेति । ननु यथा वा तथा वा रचितं वाक्यं वक्तुर्विवक्षितं प्रतिपादयत्येवेति किं रचनाविशेषेणाऽत आह वदत्यर्थमिति ॥११०॥

स्वशक्तिमनुरुध्यन्ते शब्दा न वक्तुरभिप्रायम्, अतो ऽवश्यमादर्त्तव्यो रचनाविशेषः, तद्वचनमात्रेण साधुता भवति । किं चाऽर्थद्वयमपेक्षितव्यम्, न हि लिङ्गलिङ्गिशून्यः सपक्षः समीचीनेनापि वाक्येन यत्तद्युक्ततया निर्दिश्यमानः शक्नोति लिङ्गलिङ्गिनो-र्व्याप्तिं बोधयितुम्, अतो द्वययुक्त एव सपक्षो वक्तव्यो यो व्याप्तिं बोधयितुं शक्नुयात्; तादृशेनैव साध्यसिद्धिरित्याह साध्येति ॥१११॥

---

१. 'सहभाव'—क,

* यदि तर्हि स्वतन्त्राः शब्दाः अतथास्थितेऽप्यर्थे शब्दानुसारिणीष्टसिद्धिर्भवेदत आह—साध्यहेतुत्वमिति । नार्थशक्तिः शब्दशक्ति मनुरुध्य प्रवर्तते, न च शब्दशक्तिरर्थ-शक्तिम्, अतो न यथा वक्त्रभिप्रेतार्थानुसारिणी शब्दशक्तिः, एवं न शब्दानुसारिण्य-र्थव्यवस्थेति, अर्थादीनां कृतकत्वानित्यत्वादीनां व्याप्तिशक्त्यनुरोधादेव साध्यहेतुभावो भवति, न शब्दानुरोधादिति ।

£ वक्त्रनपेक्षया स्वशक्त्यैव शब्देऽर्थमाचक्षमाणे यत्तावदापद्यते तद् दर्शयति—तत्रा-ज्ञानादितिसार्धद्वयेन । यदा हि दृष्टान्तं वक्तुमनभिज्ञो वक्ता साध्यहेत्वोः सहभावमात्रं विवक्षति । यथा—शब्दोऽनित्यः कृतकत्वादिति प्रयोगे, यथा घटे कृतकत्वनाशित्वे स्तः । विपरीतावग्रहेण वा न हेतो व्याप्यतां विवक्षति । सत्यामपि विवक्षायां कुतश्चिद् भ्रमनिमित्तात् न व्याप्तियोग्यं शब्दं वदति । सहभावमात्रमेव तु पूर्ववद् वदेत्, विपरीतं वा भ्रान्तः यथा नाशिता कृतकत्वेन व्याप्तेति, तदा तावन्न केवलमिष्टं न सिध्यति, अनिष्टमेव तु व्याप्तिविपर्ययादापद्यते । इष्टस्य कृतकत्वस्य हेतुत्वं न स्यात् । अनिष्टस्यैव तु नाशित्वस्य भवेदित्येवंजातीयकानिष्टप्रयोगनिवा-रणाय युक्तो दृष्टान्तप्रयोगनियम इति ।

✤ सहभावेति का० पा० ।

श्लो०वा०—विपर्ययेण वा[1] हेतौ न [2]व्याप्तत्वं विवक्षति ।
विवक्षन्नपि वा शब्दं [3]तद्योग्यं न वदेद् [4]यदि ॥११२॥
घटे कृतकनाशित्वे नाशिव्याप्तं कृतेन[5] वा ।
न तदेष्टस्य हेतुत्वं, स्यादनिष्टस्य [5]चैव तत् ॥११३॥
*तस्माद् व्याप्यस्वरूपेण वाच्यो हेतुत्वसंमतः ।
£'यदा सम्यक् प्रयुक्ते ऽपि वाक्ये ऽर्थो न तथा भवेत् ॥११४॥
साध्यहेतूभयव्याप्तिशून्यत्वात् परमार्थतः ।
नित्यो ध्वनिरमूर्त्तत्वात् कर्मवत्परमाणुवत् ॥११५॥

व्या०र०—एवं साधर्म्यवचनं स्वरूपतो ऽर्थतश्च शोधयित्वा विपर्यये दोषान् दर्शयन् रचनादोषं तावद्दर्शयति तत्रेति त्रयेण । हेतोर्हि साध्येन नियमः साध्यसिद्धये वक्तव्यो यत्कृतकं तदनित्यं घटादिवदिति; यदा त्वज्ञानात्साहित्यमात्रं विवक्षन् हेतोरेव वा व्याप्तिं विवक्षन्नपि प्रमादात् साहित्यं वदति घटे कृतकनाशित्वे सहदृष्टे इति, न तदा कृतकत्वस्य हेतुत्वमिष्टं सिध्यति; यदा वा साध्यस्य हेतुना व्याप्तिः यदनित्यं तत्कृतकमिति तदा ऽपि न परमिष्टस्य कृतकत्वस्य हेतुत्वं न सिध्यतीति किं त्वनिष्टस्यैवाऽनित्यत्वस्य हेतुत्वं स्यादिति । संप्रत्यर्थाऽन्यथात्वदोषमाह यदेति ॥११४॥ पादन्यूनेन द्वयेन । साध्यशून्यत्वादीनां यथासंख्यं कर्मादीन्युदाहरणानि । दृष्टान्ताभासतेति वक्ष्यमाणेन

१. 'हेतोर्न'—ग, २. 'व्याप्यत्वं विवक्षति'—ख, ३. 'तद्योगं'—क,
४. 'यदा'—ख, ५. 'वापि'—ख,
* हेतुत्वसम्मतः कृतकत्वादिव्याप्यत्वरूपेण वाच्यः ।
£ अर्थानां शब्दतन्त्रत्वे यद् भवति तद् दर्शयति—यदेतिपादरहितद्वयेन । यदा हि व्याप्तिशक्त्यनुसारेणैव अर्थानां साध्यहेतुत्वं तदा यद्यपि न सहभावमात्रं दर्शितं, किन्तु सम्यगेव दृष्टान्तवचनम्, अर्थास्तु न तदनुरूपव्याप्यव्यापकभावेनावस्थिता इति दृष्टान्ताभासता भवेदिति वक्ष्यमाणेन सम्बन्धः । यथा—नित्यो ध्वनिरमूर्तत्वादिति प्रयोगे कर्मवत् परमाणुवत् घटवत् व्योमवदिति दृष्टान्तेषु यथासंख्यं परमार्थतः साध्यहेतूभयव्याप्तिशून्यतया । कर्म खलु अनित्यमिति तत् साध्यभूतया नित्यतया शून्यं, हेतुस्तु अमूर्तत्वादिति तत्र विद्यत एव । परमाणवस्तु मूर्ता इति तेषु हेतुशून्यता, साध्यं तु नित्यत्वं तेषु विद्यत एव । घटे तु न साध्यं नित्यत्वं, नाप्यमूर्तत्वं हेतुरित्युभयशून्यता । व्योम्नि तु दृष्टान्ते व्याप्तिशून्यतामुत्तरत्र स्वयमेव विवरिष्यति । अत्रैव च व्योमवदिति दृष्टान्ते तदसद्वादिनं सौत्रान्तिकम्प्रति प्रयुज्यमाने धर्म्यसिद्ध्या दृष्टान्ताभासता भवतीत्याह तदसद्वादिनमिति ।

श्लो०वा०—'घटवद् व्योमवच्चाऽपि तदसद्वादिनं प्रति ।
धर्म्यसिद्धावपि ह्येवं दृष्टान्ताऽऽभासता भवेत् ॥११६॥
तत्सद्भावे ऽपि च व्योम्नि द्वययुक्ते ऽपि कीर्तिते ।
कर्माद्यालोचनाद् व्याप्तिर्हेतोर्नास्तीति वर्जनम् ॥११७॥
व्याप्त्या साधर्म्यउक्ते च न वैधर्म्यमपेक्ष्यते ।
'सहभावित्वदृष्ट्या तु यदा व्याप्ति न लक्षयेत् ॥११८॥
परः साधर्म्यदृष्टान्तात् तं ³च नाऽपेक्षते यदा ।*
वक्ता वा सहभावित्वं शुद्धं तेन वदेद् यदा ॥११९॥

न्या०र०—सम्बन्ध इति । व्योमवदिति च तदभाववादिनं सौत्रान्तिकं प्रति धर्म्यसिद्धयाऽपि तदाभासता स्यादित्याह तदसदिति ॥११६॥

व्याप्तिशून्यतां विवृणोति तत्सद्भावइति ॥११७॥

यद्यपि व्योम्नः सद्भावः स्यात्, तच्च नित्यत्वाऽमूर्त्तत्वयुक्तमेव दृष्टान्ततया कीर्तितं, तथापि तन्निदर्शनं निष्फलमेव, कर्माद्यालोचनेनाऽमूर्त्तत्वस्याऽनित्येष्वपि वृत्तेरनैकान्तिकत्वात्; यद्यपि चायं हेतुदोषो ऽनैकान्तिकत्वं नाम तथापि दृष्टान्तो ऽपि व्याप्तिदर्शनार्थत्वात्तदसद्भावे ऽनर्थक एव; ते चामी दृष्टान्तदोषा ज्ञातसम्बन्धपदेन व्यावर्त्तिताः । न हि साध्यशून्येषु दृष्टान्तेषु लिङ्गलिङ्गिनोः सम्बन्धज्ञानं संभवतीति ।

वैधर्म्यवचनमनुसंधित्सुः प्रथमं तावदनावश्यकत्वं तस्य दर्शयति व्याप्त्येति ॥११८॥

यथा व्याप्तिरवगम्यते तथेत्यर्थः । कदा तर्हि तदपेक्षेत्यत आह सहेति सार्द्धद्वयेन । वादिना गम्यगपि साधर्म्ये ऽभिहिते यदा प्रतिवादी मानसाऽपचाराद् व्याप्तिमनवबुद्ध्य साहित्यमात्रं साधर्म्यात् मन्यते, यदा वा प्रतिवादी साहित्यं स्वयमेवाऽवगम्य विपक्षव्यतिरेकार्थं वैधर्म्यमेवाऽपेक्षते न साधर्म्यं, यदा वा वाद्येव साधर्म्यं यथावदनुक्त्वा साहित्यमात्रं व्याप्तिविपर्ययं च पूर्ववद्वदेत् तदा तत्समाधित्सया साधर्म्योपजनितविपर्ययज्ञानोपमर्द्दनापि घटे व्याप्तिदर्शनाय वैधर्म्यं वाच्यमिति । तदा तर्हि किं कथितमपि साधर्म्यं निष्फलमेव, नेत्याह साहित्येति ॥१२१॥

---

१. 'पटवद्'—ख, २. 'क्ष'—ख, ३. 'वा'—क,

* यदा खल्वभ्यस्तवैधर्म्यस्तमेवापेक्षते न साधर्म्यदृष्टान्तं तदा च वैधर्म्येणेष्टसाधनमित्याह—तं नापेक्षते यदेति । यदा वा वक्ता सुशिक्षितवैधर्म्यसाधर्म्यं वक्तुमजानानस्तेन साधर्म्यदृष्टान्तेन सहभावमात्रमेवं शुद्धं व्याप्तिहीनं कथयति, तदापि पर्यनुयुक्तेन तेनैव वैधर्म्येणेष्ट—साधनं कार्यमित्याह—वक्ता वेति ।

श्लो०वा०—*विपरीताऽन्वयं[1] वा ऽपि§ तत्समाधित्सया तदा ।
पूर्वज्ञानोपमर्देन वैधर्म्येणेष्टसाधनम् ॥१२०॥
£साहित्यमात्रं पूर्वोक्तं हेतोस्तत्रोपयुज्यते ।
व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ॥१२१॥
△तयोरभावयोस्तस्माद् विपरीतः प्रतीयते ।
'धूमभावे ऽग्निभावेन व्याप्ते, ऽनग्निस्ततश्च्युतः ॥१२२॥

न्या०र०—न ह्यसत्यन्वये व्यतिरेकमात्रादर्थः सिध्यति, तेन वैधर्म्येणापि दृष्टं साधयतो यथा कथं चिदप्युक्तेन साधर्म्येण यत्साहित्यं सिद्धं तदुपयुज्यतइति । लिङ्गलिङ्गिनोर्व्याप्तिकथनं वैधर्म्यं, तत्रापि व्याप्यमेवाऽभावमुद्दिश्य व्यापकस्याऽभावस्योपादानं, व्याप्यव्यापकभावस्त्वभावयोर्भावविपरीत इत्याह व्याप्येति । ततश्च यत्र धूमस्तत्राऽग्निरिति साधर्म्यं, यत्राऽग्निर्नास्ति तत्र धूमो नास्तीति वैधर्म्यमिति ।

विपर्यये प्रमाणमाह धूमभावे इति ॥१२२॥ द्वयेन ।

यो हि यत्रैव भवन् यद्देशकालौ नाऽतिक्रामति स तद्व्याप्यः, व्यापकस्त्वाधिक्ये ऽप्यविरुद्धः, तत्र धूमस्याऽग्निदेशकालाऽनतिक्रमात् सकलधूमदेशकाले ऽग्निना व्याप्ते ऽनग्निरन्यभावस्ततो धूमात्प्रच्युतो धूमाऽभाव एव भवन् धूमाऽभावदेशकालाऽनतिक्रमाद् व्याप्यो भवति, एवमेवाऽनग्नावप्यधूमेन व्याप्ते धूमस्ततो ऽनग्नेः स्वविरुद्धाद् धूमव्याप्तात्प्रच्युतो ऽग्नावेव भवन्नग्निना व्याप्तो भवति, तेन धूमेनाऽग्निं साधयता धूमस्याऽग्निव्याप्तिसिद्धयर्थमनग्नेरधूमेन व्याप्तिर्वैधर्म्ये वक्तव्या । एतदुक्तं भवति, यत्र तावद्व्याप्यव्यापकयोः समदेशकालता तत्र तदभावयोरपि समदेशकालत्वान्नाऽसंकीर्णं व्याप्यव्यापकत्वं शक्यं दर्शयितुम्, यत्र तु व्याप्यव्यापकयोर्न्यूनाऽधिकत्वं तत्र व्याप्यस्य भावस्य न्यूनत्वात्तदभावो ऽवश्यमधिको भवन् व्यापको भवति, व्यापकस्य व्याप्याऽधिकत्वात्तदभावो न्यूनतया व्याप्यो भवतीति युक्तो विपर्यय इति ।

---

१. 'न्वयत्वं वा—ख,

* यदा वा भ्रान्तो विपरीतमन्वयं दर्शयति, तदापि तत्साधनेच्छया पूर्वविपरीतज्ञानोपमर्दनेन वैधर्म्येणेष्टसाधनमित्याह—विपरीतान्वयमिति ।

§ विपरीतान्वयत्व वेति १ पु० पा० ।

£ यत्तु तत्पूर्वं साहित्यमात्रमुक्तं तद्वैधर्म्ये एवोपयुज्यते तस्यैवेष्टं साधयतोऽनुग्रहे वर्तते इत्याह—साहित्यमात्रमिति ।

△ एवं तावद् वैधर्म्यवचनस्यावसरो दर्शितः, तद्वचनप्रकारमिदानीं दर्शयति—व्याप्यव्यापकभावो हीति । वैपरीत्ये कारणमाह—धूमभाव इति श्लोकद्वयेन ।

श्लो०वा०—अधूम एव विद्येतेत्येवं व्याप्यत्वमश्नुते ।
*तथाऽनग्नावधूमेन व्याप्ते धूमस्ततश्च्युतः ॥१२३॥
£अन्यत्राऽनवकाशत्वाद् व्याप्यते ध्रुवमग्निना[1] ।
व्यापकौ तु यदोच्येते भावाऽभावौ तदा ततः ॥१२४॥
नैव व्याप्याद्विपक्षस्य प्रच्युतिः कथिता भवेत् ।
∟तस्माद्धूमेन साध्यत्वमग्नेः प्रार्थ्यते यदा ॥१२५॥
तदाऽनग्निरधूमेन [1]व्याप्तो वाच्यो न चाऽन्यथा ।
>अनग्न्यधूमसाहित्ये व्याप्तेर्वाऽपि विपर्यये ॥१२६॥
न प्रस्तुतोपकारः[2] स्यादन्यद्वापि प्रसाध्यते ।
यत्राऽप्यर्थस्य शून्यत्वं द्वाभ्यामेकेन वा भवेत् ॥१२७॥

तदेवं सति यथैव साधर्म्येऽग्निभावो धूमस्य व्यापकतयोक्तः तथैव यदि वैधर्म्येऽप्यग्न्यभावो धूमाऽभावस्य व्यापकतयैवोच्येत तथा सति व्यापकस्याधिक्येऽप्यविरोधादधूमाऽतिक्रमेणाप्यनग्निः सम्भवन् धूमेऽपि सम्भावितः स्यात्, ततश्च व्याप्याद्धूमाद्विपक्षस्याऽनग्नेस्तेन सहापि सम्भवतो न प्रच्युतिस्ततः सिध्येत्, तत्प्रच्युतिकथनार्थं च वैधर्म्यमनर्थकं स्यात्, अच्युते च तस्मिन् विपक्षेऽपि सम्भवन् धूमोऽग्निना व्याप्त्यभावान्नाग्निं गमयेदित्याह व्यापकाविति ॥१२४॥

उपसंहरति तस्मादिति ॥१२५॥

न चाऽन्यथेति ॥१२६॥

न साहित्यमात्रं नापि व्याप्तिविपर्यय इति । अन्यथावचने दोषमाह अनग्नीति । साहित्ये साहित्यमात्रे प्रस्तुतस्य धूमव्याप्यत्वस्याऽनुपकारः, विपर्यये त्वन्यदेवाऽग्नेरेव व्याप्यत्वं साधितं स्यादिति ।

न च वचनाऽसम्यक्त्वमात्रेण साध्यसिद्धिः, अर्थतथात्वमप्यादर्त्तव्यमित्याह यत्रापीति ॥१२७॥

---

१. 'व्याप्यो'—ग,                    २. 'योगः'—ख,

* यत एव चाभावयोरीदृशो व्याप्य-व्यापकभावः अत एव भावयोरभिमतव्याप्तिसिद्धिरित्याह—तथानग्नाविति ।

£ किं पुनरभावयोर्व्याप्तिविपर्ययाश्रयणे प्रयोजनमत आह—व्यापकौत्विति ।

∟ तस्माद्धूमस्य गमकत्वमिच्छतानग्निरधूमेन व्याप्तः कथयितव्यः इत्याह—तस्मादिति ।

< एवं तावद्वैधर्म्यदृष्टान्तं प्रतिपाद्य इदानीं "वदत्यर्थं स्वशक्त्या च शब्दो वक्त्रनपेक्षया" इत्यनेन न्यायेन वैधर्म्यदृष्टान्ताभासप्रसक्तिं प्रदर्शयितुमाह—अनग्नीति ।

श्लो०वा०—यदनित्यं तु तन्मूर्तमणुवद् बुद्धिवत् खवत् ।
'साध्येन व्याप्तिसिद्धयर्थं' व्यतिरेको ऽत्र कथ्यते ॥१२८॥
यस्यायं नास्त्यसौ हेतुस्तेन साध्येन नाप्यते ।*
*तेन दृष्टे ऽपि साहित्ये न सर्वो गम्य इष्यते ॥१२९॥
सहदृष्टिर्न सम्बन्धो व्याप्तिर्नैव च तावता ।
£मूर्ताऽनित्यत्वयुक्ते ऽपि तस्मादङ्गीकृते घटे ॥१३०॥
कर्मादौ व्याप्त्यभावेन न दृष्टान्तत्वमिष्यते' ।
'अशेषाऽपेक्षितत्वाच्च सौकर्याच्चाप्यदर्शनात् ॥१३१॥

न्या०र०—तत्रापि न प्रस्तुतोपकारः स्यादिति सम्बन्धः । द्वाभ्यामभावाभ्यामेकेन वा नित्यः शब्दो ऽमूर्त्तत्वात्, इत्यत्राऽनित्यत्वं साध्याऽभावस्तेन शून्यः परमाणुः, मूर्त्तत्वं च साधनाऽभावस्तच्छून्या बुद्धिः, उभयशून्यमाकाशमिति ।

साधर्म्यवदेव वैधर्म्यव्याप्तिशून्यत्वस्य दूषणत्वमुदाहरणं च दर्शयति साध्येनेति ॥१२८॥ त्रयेण ।

साध्येन हेतोर्व्याप्तिं दर्शयितुं विपक्षात्साध्याभावाद्धेतोर्व्यतिरेको हेतोस्तत्राऽभावः कथ्यते यस्मान्मूर्त्तत्वस्य विपक्षैकदेशादपि बुद्ध्यादेरनित्याद्व्यतिरेको बुद्ध्यादावभावो नास्ति नासावमूर्त्तत्वं हेतुस्तेन नित्यत्वसाध्येन व्याप्यते, व्याप्त्यसिद्धौ च यद्यपि क्व चिदमूर्त्तत्वनित्यत्वयोः साहित्यं दृष्टं व्योमादौ तथापि न सर्वस्याऽमूर्त्तस्य नित्यता ऽध्यवसातुं शक्यते, न हि साहित्यमात्रं लिङ्गलिङ्गिनोः सम्बन्धः, न च तन्मात्रेणाऽव्यभिचारमन्तरेण व्याप्तिः सिध्यति, तस्माद्यद्यपि वैधर्म्यवचने साधनाऽभावेन मूर्त्तत्वेन साध्याऽभावेन चाऽनित्यत्वेन युक्तो घटादिर्निर्द्दिश्यते यदनित्यं तन्मूर्त्तं यथा घट इति तथापि कर्मादिष्वनित्येष्वपि मूर्त्तत्वस्य व्याप्तेः व्याप्तिसिद्धयर्थत्वाच्च दृष्टान्तत्वस्य तदसिद्धौ घटादेरपि न दृष्टान्तत्वमिति ।

शाक्यास्तु वैधर्म्यवचनस्य पाक्षिकत्वमसहमाना वैधर्म्यमेव सर्वदा वक्तव्यं न साधर्म्यमित्याहुः; तदुपन्यस्य दूषयति अशेषेति ॥१३१॥ सार्द्धेन ।

ते किल मन्यन्ते, यस्यापि साध्याऽन्वयो लिङ्गस्याऽनुमानाङ्गं यस्य वा विपक्षव्यति-

---

१. 'हि'—क, 'च'—ख,

* यतश्चैवञ्जातीयको न साध्येन व्याप्यते तेन क्वचिदभावयोः साहित्ये दृष्टे ऽपि न सर्वत्र गम्यगमकभावो भवतीत्याह—तेनेति ।

£ किं तर्हि व्याप्तिः, न चासावेतावता साहित्यमात्रेण सिध्यतीति । एतदेवोदाहरणेन दर्शयति—मूर्तानित्यत्वयुक्ते ऽपीति ।

श्लो०वा०—[1]'साधने यद्यपीष्टो ऽत्र व्यतिरेको ऽनुमां प्रति ।
[2]'तावता न ह्यनङ्गत्वं युक्तिः [3]'शाब्दे हि वक्ष्यते' ॥१३२॥
*बोधप्रसङ्गो भेदानां न चाऽव्याप्तेर्भविष्यति ।
अस्ति सामान्यवस्त्वेषु [4]'व्यापिता तत्र गम्यताम् ॥१३३॥

न्या०र०—रेकः तयोरुभयोरपि तावदशेषाऽपेक्षितत्वमविवादम्, तत्र यद्यन्वयो ऽङ्गमिष्येत ततो ऽवश्यं सर्वेषामतीताऽनागतानामपि धूमानामग्निभिः सर्वैः समन्वयो ग्रहीतव्यः, न चासावीश्वरेणापि ग्रहीतुं शक्यते; न च केषां चिदन्वये गृहीते ऽन्यैरगृहीताऽन्वयैरनुमानं सम्भवति; वह्निमत्त्वसामान्येन धूमवत्त्वसामान्यस्याऽन्वयो गृहीत इति चेत्, न, सामान्यस्य स्वलक्षणव्यतिरेकाव्यतिरेकविकल्पसहनाऽसम्भवात्, अस्तु वा सामान्यं, तथापि तदीयाऽशेषदेशकालाऽन्वयो ऽग्नेर्दुर्ग्रह एव, विपक्षव्यतिरेकस्तु सुज्ञानः, स ह्यदर्शनमात्रगम्यः, सुकरं च सर्वधूमानामप्येकदेशस्थेनैवाऽनग्निष्वदर्शनम्; तस्मात् अनग्निभ्यो व्यतिरिच्यमानो धूमो ऽनग्निव्यावृत्तिमुखेनाऽग्निं गमयति, अत एवाऽतद्व्यावृत्तिविषयत्वं लिङ्गशब्दयोः, तस्माद् विपक्षव्यावृत्तिप्रदर्शनार्थं वैधर्म्यमेव वक्तव्यं न साधर्म्यमिति । तान्प्रत्युच्यते, यद्यप्येवं व्यतिरेक एवाऽनुमानाङ्गं शाक्यानामिष्टं तथाप्यन्वयो ऽङ्गमेव, व तस्याऽनङ्गत्वं शक्यते वक्तुम्, अत्र च युक्तिरपोहनिराकरणपर्वणि वक्ष्यते । न चाऽदर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत्, सर्वत्रैव ह्यदृष्टत्वात्प्रत्याय्यं नाऽवशिष्यतइति । यदि ह्यनग्नाविवाऽग्नावपि धूमो न दृश्येत ततो ऽग्नेरनग्नेश्च द्वाभ्यां व्यावृत्तो धूमो द्वयोर्व्यावृत्तिं गमयन् गन्धवत्त्ववत् संशयहेतुः स्यात् । अतो ऽन्वयो ऽप्यङ्गमेव । यत्तु सर्वत्राऽन्वयो दुर्ग्रह इत्युक्तं, तुल्यमिदं व्यतिरेके ऽपि । न ह्यदर्शनमात्रात् सो ऽपि सिध्यति, दृश्याऽदर्शनगम्यत्वादेकदेशस्थस्य च सर्वत्र दृश्याऽदर्शनाऽसम्भवात् : तस्मादनवगते ऽपि सर्वत्राऽन्वये सर्वतश्च व्यतिरेके वहुशः साहित्याऽवगममात्रादेव व्यभिचाराऽदर्शनसनाथादनुमानोत्पत्तिरङ्गीकर्त्तव्या । शाब्दे, शब्दार्थनिरूपणे अपोहवादे इत्यर्थः । तत्र हि जातिः शब्दार्थो नाऽपोह इति निरूपयिष्यतइति ।

ननु सामान्यस्याऽभावाद्धूमभेदादेवाऽग्निभेदानामनुमानमङ्गीकर्त्तव्यं, न च भेदानामदृष्टपूर्वाणामन्वयग्रहणमस्तीति कथमन्वयस्याङ्गत्वम्, अत आह बोधेति ॥१३३॥

---

१. 'साधनं'—क, २. 'एतावता न ह्यनङ्गम्'—ग,
२. 'शब्देऽभिधास्यते'—क, ४. 'व्यापित्वं'—ख, 'व्याप्तता'—ग,
* यत्तु भेदानामेवानुमाने गम्यगमकत्वं तेषांचान्वयो न संभवतीत्युक्तम्, तत्राह—बोधप्रसङ्ग इति ।

श्लो०वा०—*के चित्साधर्म्यदृष्टान्ते व्याप्त्या ऽपि [1]कथिते पुनः ।
वैधर्म्योक्तिमपीच्छन्ति व्यावृत्तिनियमेच्छया ॥१३४॥
हेतौ साधर्म्यदृष्टान्तात्साध्येनैवाऽवधारिते ।
व्यावृत्तिः सर्वतः प्राप्ता साध्याऽभावे नियम्यते ॥१३५॥
तत्तु मन्दफलं यस्मात्पक्षे [2]ऽप्येवं निरूपितम् ।
व्यापकाऽभावमात्रं हि व्याप्यान्नित्यं निवर्तते ॥१३६॥
तस्माद्यथैव शुक्लत्वे पटस्योक्ते विरोधिनाम् ।
निवृत्तिर्न तु दैर्घ्यादेस्तथा ऽत्रापि भविष्यति ॥१३७॥
£द्वैविध्यं नोपपन्नं तु यथैव ह्यग्निधूमयोः ।
प्रत्यक्षदृष्टः सम्बन्धो गतिप्राप्त्योस्तथैव हि ॥१३८॥

न्या०र०—स्यादेवं यदि भेदेनाऽनुमानप्रसङ्गः स्यान्न त्वसावस्ति उक्तादेव व्याप्त्यभावादिति । कस्य तर्ह्यनुमानं केन चात्मना, ऽत आह अस्तीति । के चित्तु साधर्म्यवद् वैधर्म्यमपि नियतं मन्यन्ते तदुपन्यस्यति के चिदिति ॥१३४॥

कारणमाह व्यावृत्तीति । एतदेव विवृणोति हेताविति ॥१३५॥

यो धूमवान् सो ऽग्निमानेवेति साधर्म्यवचनाद्धूमो ऽग्निना नियम्यमानो ऽग्निव्यतिरिक्तात्सर्वस्मादेव व्यावृत्तः प्रसज्यमानः पुनर्वैधर्म्येण यत्राऽग्निर्नास्ति तत्र धूमो नास्तीति एवम् अग्न्यभावाद्व्यावृत्तिः क्रियते, कथं नाम वस्त्वन्तराद्व्यावृत्तिः परिसंख्यायेतेति नियम इति परिसंख्यैवोच्यते तत्र चान्यत्र च प्राप्तेरिति । दूषयति तत्त्विति । यथा खलु पर्वतो ऽग्निमानेवेत्यत्र पक्षवचने ऽन्यभावस्यैव निवृत्तिः नाऽन्यस्येत्युक्तं, तत्रापि न ह्यग्निमानेवेत्यस्याऽयमर्थः, अग्निरेवास्तीति किं त्वग्निरस्त्येवेति, तस्माददोष इति । एतदेव दृष्टान्तदर्शनेनोपसंहरति तस्मादिति ॥१३७॥

"तत्तु द्विविधं प्रत्यक्षतो दृष्टसम्बन्धं सामान्यतो दृष्टसम्बन्धं च, तत्र प्रत्यक्षतो दृष्टसम्बन्धं यथा धूमाऽऽकृतिदर्शनादग्न्याकृतिविज्ञानं, सामान्यतोदृष्टसम्बन्धं यथा देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्याऽऽदित्ये गतिस्मरण" मिति भाष्यं, तदाक्षिपति द्वैविध्यमिति ॥१३८॥

---

१. 'कल्पिते'—ग, २. 'प्येतन्निरू'—ख,

* अन्यन्मतं व्याप्त्यापि साधर्म्यदृष्टान्त उक्ते वैधर्म्यमपि वाच्यमिति तत्तावदुपन्यस्यति—केचिदिति ।

£ "तत्तु द्विविधम्" इत्यादि भाष्यम्, तदाक्षिपन्नाह—द्वैविध्यमितिश्लोकद्वयेन ।

श्लो॰वा॰—*आदित्ये ऽनुपलब्धिश्चेन्न देशे ऽप्यधुनातने।
£क्व चित्तत्रोपलब्धिश्चेद्देवदत्ते ऽपि दृश्यताम् ॥१३९॥
△'यदि धर्म्यन्तराऽपेक्षा तत्र सामान्यदृष्टता।
स्यादग्निधूमयोः सैव' तस्मादेवं १प्रचक्षते ॥१४०॥

न्या॰र॰—परस्पराऽसंकीर्णे हि विधाद्वये द्वैविध्यं भवति, इह च सामान्यतोदृष्टोदाहरणे गतिप्राप्तिसम्बन्धे .प्रत्यक्षदृष्टत्वमप्यस्तीति द्वैविध्याऽनुपपत्तिरिति। अथ पक्षधर्मिण्यादित्ये गतिप्राप्त्योः सम्बन्धो न प्रत्यक्षेणोपलभ्यतइत्युच्यते, सो ऽधुनातने ऽपि पर्वतादौ देशे ऽग्निधूमयोरपि न प्रत्यक्ष इति तुल्यत्वमित्याह आदित्ये इति ॥१३९॥

यदि तु क्व चिन्महानसादौ प्रत्यक्षो ऽग्निसम्बन्ध इत्युच्यते ततो ऽत्रापि देवदत्तादौ गतिप्राप्त्योरपि सम्बन्धः प्रत्यक्ष एवेत्याह क्व चिदिति। प्रत्यक्षेणैव हि दृष्टं कर्मस्वरूपं, तदनन्तरं च देशान्तरप्राप्तिं देवदत्तादेरुपलभामहे, न हि नित्याऽनुमेयं कर्मस्वरूपम्, अपरोक्षेणैवाऽवभासात्, नित्याऽनुमेयत्वे च देवदत्ते ऽप्यनुमेयत्वाद् "देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्ये ऽपि गतिस्मरण"मिति भाष्यमनुपपन्नं स्यान्न च देशान्तरप्राप्त्याऽतीन्द्रियस्यापि कर्मणो ऽनुमानं सम्भवति, दृष्टैरेव प्रयत्नवदात्मसंयोगादिभिः कर्मकारणत्वाभिमतैस्तदुपपत्तेरिति शास्त्रदीपिकादौ प्रपञ्चितमित्यास्तां तावत्।

एवं प्रत्यक्षतोदृष्टत्वं संकीर्णमित्युक्तम्, इदानीं सामान्यतोदृष्टत्वमपि संकीर्णमित्याह यदीति ॥१४०॥ पादत्रयेण।

न ह्यादित्यस्य देशान्तरप्राप्तिस्तदीयगत्यन्विता दृष्टा, किं तु धर्म्यन्तरे देवदत्ते देशान्तरप्राप्तेर्गतिसमन्वयं दृष्ट्वा ऽऽदित्ये ऽपि प्राप्तिसामान्येन गतिसामान्यमनुमीयतइति। एवमत्र सामान्यतोदृष्टत्वमभिमतं तदग्निधूमयोरपि धर्म्यन्तरेष्वेव सम्बन्धग्रहणात्तुल्यम्। अथ कार्यान्तरेष्वागन्तुककारणजन्यत्वं दृष्ट्वा प्राप्तेरपि कारणमागन्तुकं किं चिदस्तीत्येवं सामान्यमनुमीयते तत्र त्वन्येषामसम्भवात्ततो ऽन्यदवतिष्ठते न त्वन्यरूपेणाऽनुमीयते,

---

* यदि तु दृष्टान्ते प्रत्यक्षतायामपि पक्षीकृतादित्यगतेरप्रत्यक्षत्वात् न प्रत्यक्षदृष्टः सम्बन्ध इत्युच्यते। तदेतदाशङ्कते तावत्—आदित्येऽनुपलब्धिश्चेदिति।

£ यदि तु अग्निधूमाकृत्योः क्वचिन्महानसादौ अप्रत्यक्षोपलब्धिरिष्यते, सा तर्हि देवदत्तेऽपि गतेः प्रत्यक्षत्वादस्तीत्याह—क्वचिदिति।

△ एवं तावत् प्रत्यक्षतो दृष्टता सामान्यतो दृष्टतया संकीर्यते इत्युक्तम्। इदानीं सामान्यतो दृष्टतापि प्रत्यक्षतो दृष्टाभिमताग्न्याकृत्यनुमाने संकीर्यत इत्याह—यदिधर्म्यन्तरेतिपादत्रयेण।

श्लो०वा०—£प्रत्यक्ष[1]दृष्टसम्बन्धं ययोरेव विशेषयोः ।

गोमयेन्धनतज्जन्यविशेषादिमतिः कृता ॥१४१॥

तद्देशस्थेन तेनैव गत्वा कालान्तरेऽपि तम् ।

यदा [2]ऽग्निर्बुध्यते तस्य पर्वबोधात्पुनः पुनः ॥१४२॥△

संदिह्यमानसद्भावस्तु[3]बोधात्प्रमाणता ।

विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना ॥१४३॥

न्या०र०—अतः सामान्यतोदृष्टत्वम् । अग्न्यनुमाने त्वग्निरूपमेवाऽनुमीयतइति "ततो गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्ये"ति भाष्यं विरुध्येत, गतेरेव सम्बन्धग्रहणोपन्यासात् । किं चैवं कारणसामान्यमनुमितं स्यात्, तस्मिंस्त्वनुमिते कारणान्तराणां प्रयत्नादीनामागन्तूनामपि करणत्वं नाऽनुमानेन निरस्तं स्यात्, प्रमाणान्तरेण तु तदसम्भवोऽवगम्यते, या पारिशेष्यात् कारणान्तरस्यातीन्द्रियत्वसिद्धिः सा ऽर्थापत्तिरिति नानुमेयत्वं कर्मणः, यच्च तत्कारणसामान्यं तदन्यत्र दृष्टमेवाऽग्निवत्, अतो द्वैविध्याऽनुपपत्तिरिति । समाधत्ते तस्मादिति बुध्यत ॥१४२॥ इत्यन्तेन । यदा हि क्वचिद्देशे गोमयेन्धनजन्यमग्निविशेषं तज्जन्यं च धूमविशेषमुपलभ्य ईदृशो गोमयेन्धनो ऽग्निरीदृशश्च तज्जन्यो धूम इत्येवमग्न्यन्तरधूमान्तरेभ्यो विलक्षणस्वरूपे मतिं कृत्वा देशान्तरं गतः कियता ऽपि विलम्बनेन तद्देशस्थेन तेनैव धूमविशेषेण तमेव गोमयेन्धनमग्निविशेषमनुमिमीते§तदा तद्विशेषतोदृष्टसम्बन्धमनुमानं प्रत्यक्षदृष्टसम्बन्धमाचक्षतइति । युक्तं चैतत्, विशेष एव हि सामान्यस्य प्रतियोगी भवति न प्रत्यक्षं, तद्धि प्रमाणान्तरस्य प्रतियोगि न सामान्यस्य, सम्भवति हि सामान्ययोरपि प्रत्यक्षेण सम्बन्धग्रहणम्, तस्मात्प्रत्यक्षतोदृष्टसम्बन्धं सामान्यतोदृष्टसम्बन्धमितीदं द्वैविध्यं मिथो ऽप्रतिपक्षत्वादनुपपन्नम्; अतो यत्र विशेषयोरेव प्रत्यक्षेण सम्बन्धो गृह्यते तत्प्रत्यक्षेण दृष्टसम्बन्धमित्युच्यते, यत्र सामान्ययोः प्रत्यक्षेण सम्बन्धो गृह्यते तत्सामान्यतोदृष्टमित्युच्यतइति । ननु प्रत्यक्षाऽवगताग्निविशेषविषयस्याऽनुमानस्य कथं प्रामाण्यमत आह तस्येति । पूर्वबोधात् कालान्तराधिक्येनेत्यर्थः ।

विन्ध्यवासिना ऽपीदं विशेषदृष्टत्वेनोपवर्णितमिति युक्तमेव तदभिप्रायत्वं भाष्यस्येत्याह विशेषेति ॥१४३॥

---

१. 'दृष्टः सम्बन्धो'—ख, २. 'ऽग्निबु'—ख, ३. 'भेदात्'—ग,

£ प्रत्यक्षसंबंधं तावदुदाहरति—प्रत्यक्षेति बुध्यतेऽन्तेन ।

△ अतो देशभेदाभावादप्रामाण्यमेव, अत आह—तस्येतिपादत्रयेण ।

§ अनुमीयते इति २—३ पु० पा० ।

श्लो०वा०—*आकृत्यौरेव चैषेष्टा व्यवच्छेदेन केन चित् ।
हेतुसाध्यव्यवस्थेति विशेषो नोपदर्शितः ॥१४४॥
£अग्निधूमान्तरत्वे च वाच्ये सामान्यतो [1]मितौ ।
सामान्य दृष्टमेकान्तादत्रेत्यादित्य उच्यते ॥१४५॥
§[2]प्रत्यक्षविषयत्वं च सामान्यस्य प्रसाधितम् ।
वस्तुत्वं चात्र हेतुर्वा द्वयस्याप्यभिधीयते ॥१४६॥
△'धूमादग्न्यनुमानस्य वस्त्वालम्बनता भवेत् ।

न्या०र०--यदि विशेषयोरेवाऽनुमानं कथं धूमाऽऽकृतिदशर्ना दित्याकृतिग्रहणं भाष्ये, धूमदर्शनादिति हि वक्तव्यमत आह आकृत्योरिति ॥१४४॥

यद्येवमिदमेव विशेषानऽवच्छिन्नं सामान्यतोदृष्टोदाहरणान्तरमस्ति किमादित्यो-दाहरणेनाऽत आह अग्नीति ॥१४५॥

विशेषदृष्टाऽसंकीर्णनिःसंदिग्धसामान्यदृष्टप्रदर्शनार्थमादित्योदाहरणमिति । कथं पुनः सामान्यतः सम्बन्धग्रहणं, न ह्यगृहीतयोः सम्बन्धिनोः सम्बन्धग्रहणं सम्भवति, न च सामान्ययोः प्रत्यक्षेण ग्रहणं तस्य स्वलक्षणमात्रविषयत्वात्, अवस्तुभूतं च सामान्यं कथं प्रत्यक्षेण गृह्येताऽत आह प्रत्यक्षेति ॥१४६॥

---

१. 'मितेः'—ग, २. 'सामान्यविषयत्वं च प्रत्यक्षस्य'—ख,

* यदि विशेषदृष्टोदाहरणमिदं कथं तर्हि भाष्ये आकृतिग्रहणम्, एवं हि विशेष एव दर्शयितव्या भवेत्, अत आह—आकृत्योरेवेति । केनचिद् गोमयेन्धनत्वादिनावान्तरविशेषेणोपदर्शितयोराकृत्योरेवात्र हेतुसाध्यत्वम् । एवं हि अत्र प्रत्ययः । स एवायमद्य यावदनुवर्तमानो गोमयेन्धनविकारस्य धूमस्याकारोदृश्यते । अत एव तदिन्धनयोनिरग्निरनुवर्तत इत्यतो नानुपपन्नमाकृतिग्रहणमिति ।

* यद्येवमविवक्षितावान्तरविशेषमग्निधूमान्तरमेव सामान्यतो दृष्टोदाहरणतया वाच्यम् । किमादित्योदाहरणेन । अत आह अग्निधूमान्तरत्वे चेति ।

§ किं पुनः सामान्यतः संबन्धग्रहणे प्रमाणम् । न हि अगृहीतयोः सम्बंधिनोः सम्बन्धग्रहणमस्ति । न च सामान्ययोः प्रत्यक्षग्रहणं संभवति । तस्य स्वलक्षणैकविषयत्वात् । नानुमानमनवस्थापातात् । अत आह—प्रत्यक्षविषयत्वमिति ।

△ तत्र वस्तुत्वप्रसाधनार्थं तावद् हेतुमाह—धूमादग्न्यनुमानस्येति । बौद्धा हि अवस्तु-सामान्यालम्बनमनुमानमाचक्षते । सामान्यस्य विकल्पाकारमात्राभ्युपगमात् । अत एव भ्रान्तिरेवानुमानम् । संबंधबलेन स्वलक्षणरूपमुपस्थापयतीति प्रमाणमित्याहुः । तानेव प्रतीदमुच्यते । एवं च सामान्यं न विकल्पाकारमात्रम् ।

श्लो०वा०—अभावाऽन्यप्रमाणत्वात्स्वार्थे श्रोत्रादिबुद्धिवत् ॥१४७॥
*सामान्यस्य च वस्तुत्वं प्रत्यक्षग्राह्यता ऽपि च ।
अभावाऽन्यप्रमेयत्वादसाधारणवस्तुवत् ॥१४८॥
←'सामान्यं नाऽनुमानेन विना यस्य प्रतीयते√ ।
न च लिङ्गविनिर्मुक्तमनुमानं प्रवर्तते ॥१४९॥
असामान्यस्य लिङ्गत्वं न च केन चिदिष्यते ।
न चाऽनवगतं लिङ्गं किं चिदस्ति प्रकाशकम् ॥१५०॥
तस्य वाप्यनुमानेन स्यादन्येन गतिः पुनः ।
तदुत्पत्तिश्च लिङ्गात्स्यात्सामान्यज्ञान[१]संहतात् ॥१५१॥
तस्य चाप्यनुमानत्वा£द्भवेल्लिङ्गेन चोद्भवः ।
अनुमानान्तरादेव ज्ञानेनैवं च कल्पने§ ॥१५२॥
लिङ्गलिङ्ग्यनुमानानामानन्त्यादेकलिङ्गिनि ।
गतिर्युगसहस्रेषु बहुष्वपि न '[२]विद्यते'△ ॥१५३॥

न्या०र०—प्रत्यक्षसूत्रे हि प्रत्यक्षत्वम् अत एव च वस्तुत्वं सिद्धमिति अनुमानेनापि तस्य प्रत्यक्षत्वं वस्तुत्वं चाऽवगम्यतइत्याह अत्रेति । तमेव दर्शयति धूमादिति ॥१४७॥ द्वयेन ।

स्वार्थस्तु स्वेन सन्निकृष्टस्तद्ग्रहणं भ्रान्तिव्यावृत्त्यर्थम् ।

ये तु शाक्याः सामान्यस्य प्रत्यक्षग्राह्यतामनिच्छन्तो ऽनुमानैकगम्यत्वं, तन्मते ऽनुमानोच्छित्तिरेव स्यात्, पक्षधर्मतया हि लिङ्गमनुमितौ ग्रहीतव्यं, सामान्यमेव च लिङ्गं न हि विशेषः, अनुगमाऽभावात्; अतो लिङ्गभूतसामान्यग्रहणाय पुनरन्योन्याऽपेक्षणादनवस्थापातान्न किं चिदप्यनुमानमात्मानं लभतइत्याह सामान्यमिति ॥१४९॥ पञ्चभिः ।

---

१. 'संहितात्'—ग, २. 'युज्यते'—ग,

* एवमर्थाद् वस्तुत्वं प्रसाध्याहृत्य प्रसाधयति—सामान्यस्य च वस्तुत्वमिति । सामान्यं वस्तु अभावान्यप्रमेयत्वादसाधारणवस्तुवत् । प्रत्यक्षविषयता मिदानीं प्रयोगेण दर्शयति—प्रत्यक्षेति पादत्रयेण । यदभावान्यप्रमेयं तत् प्रत्यक्षेण गृह्यत एव । यथा सौगतानामेव असाधारणं वस्त्विति ।

← बौद्धानामेव तु सामान्यमनुमानैकविषयं मन्वानानामनवस्था प्रसज्यत इत्याह—सामान्यमिति पञ्चभिः ।

√ सामान्यतोऽनुमानेन विनाशस्य प्रतोयते इति ३ पु० पा० ।

£ अनुमानत्वमिति ३ पु० पा० ।

§ एवं प्रकल्पिते इति २—३ पु० पा० ।

△ न युज्यते इति २ पु० पा० ।

श्लो॰वा॰—*अथ सामान्यभूते ऽपि लिङ्गे ऽन्यस्माद्गतिर्भवेत् ।
प्रमाणादप्रमाणाद्वा तथा लिङ्गिगतिर्भवेत् ॥१५४॥
£एवमप्यनुमानस्य नित्योच्छेदः प्रसज्यते ।
प्रमाणान्तरमेव स्यात्सामान्यस्याऽवबोधकम् ॥१५५॥
√अप्रमाणाऽवबुद्धाद्वा लिङ्गाल्लिङ्गिनि या मतिः ।
साऽपि मिथ्या भवेθन्नित्यं बाष्प§जाताऽग्निबुद्धिवत् ॥१५६॥

न्या॰र॰—शङ्कते अथेति ॥१५४॥

लिङ्गसामान्यमप्रत्यक्षमिति स्वलक्षणदर्शनप्रभवाद्विकल्परूपात्प्रत्यक्षाभासाज्ज्ञानान्तरादवगम्यते नाऽनुमानात्, अतो नाऽनवस्थेति । तं दूषयितुं विकल्पयति प्रमाणादिति ।

प्रमाणत्वे दूषणमाह तथा लीङ्गीति । न तावत्प्रत्यक्षाऽनुमानातिरिक्तं प्रमाणं भवतामिष्टम्, उपेत्यापि ब्रूमः, तत्खलु प्रमाणमिन्द्रियसंयोगापेक्षं चेत्प्रत्यक्षमेव स्यात्, नो चेल्लिङ्गसामान्यवल्लिङ्गिसामान्यस्यापि तेनैवाऽवगतिः [1]सिद्ध्यतामिति । ततः किमित्याह एवमिति ॥१५५॥

यथा ऽनवस्थायामनुमानोच्छित्तिस्तथा ऽत्रापीति । कथमित्याह प्रमाणान्तरमिति । एतदेव हि प्रमाणान्तरं लिङ्गिसामान्यस्याप्यवबोधक्षममिति किमनुमानेनेति ।

अथाऽप्रमाणं, तत्राह अप्रमाणेति ॥१५६॥

ततश्चाऽनुमानस्यापि प्रामाण्यं न स्यात् । ननु अप्रमाणमेवाऽनुमानम्, अवस्तुभूतसामान्यविषयत्वात्, तथापि परम्परया वस्तुप्रभवम् । तथा हि वह्निस्वलक्षणाद्धूमस्वलक्षणं, ततो धूमदर्शनं, ततश्च धूमविकल्पः, तदूर्ध्वं चानुमानं, परम्परया वस्तुप्रभवतया तत्प्रति-

---

१. 'इष्यताम्'—ख,

* यदि तूच्यते लिङ्गभूतसामान्यग्रहणार्थमनुमानापेक्षायामनवस्था भवति, न तद्ग्रहणार्थमनुमानमपेक्ष्यते, धूमादिस्वलक्षणदर्शनप्रभवविकल्पवेद्यत्वात्तस्य । न चासावप्रमाणम्, अर्थक्रियासमर्थवस्तुप्रतिलम्भात् । न च प्रमाणमनर्थविषयत्वात् । अतोऽनिर्वचनीयविकल्पसिद्धत्वात् लिङ्गस्य नानवस्था भवतीत्याशङ्क्याह—अथेति ।

£ अस्तु तर्हि लिङ्गिनोऽपि तथैवावगमः, को दोषः, अत आह—एवमपीति ।

√ यदि तु एकरूपाभ्युपगमेऽप्रमाणत्वमेव लिङ्गज्ञानस्येष्यते, ततोऽप्रमाणावगताल्लिङ्गाल्लिङ्गिज्ञानमपि मिथ्या भवेत् । वाष्पादिव धूमसंविदितादग्निज्ञानम् । एवं च नानुमानमिति । स एव अनुमानस्य नित्योच्छेद इत्यभिप्रायेणाह—अप्रमाणावबुद्धादिति ।

θ सामिथ्यैवं भवेदिति २ पु॰ पा॰ ।

§ व्याप्येति ३ पु॰ पा॰ ।

श्लो०वा०—⊙नन्वप्रमाणभूतापि सम्बन्धस्मृतिरिष्यते ।
यथा लिङ्गिगतौ हेतुस्तथा लिङ्गगतिर्भवेत् ॥१५७॥
>तत्र यत्पूर्वविज्ञानं तस्य प्रामाण्यमिष्यते ।
तदुपस्थान*मात्रेण स्मृतेः स्याच्चरितार्थता ॥१५८॥
←न तु लिङ्गगतौ किं चित्प्रमाणमुपपद्यते ।
तदभावात्स्मृतिश्चात्र न कथं चित्प्रवर्तते ॥१५९॥

न्या०र०—बन्धितत्प्रतिलम्भकतया व्यवहाराऽविसंवादित्वात् प्रमाणदशायां प्रमाणमित्युच्यते, वाष्पविषयधूमविकल्पोत्थं त्वग्निज्ञानं परम्परयाऽप्यग्निना न प्रतिबद्धम्, न हि वाष्पव्यवहारस्वलक्षणमग्निस्वलक्षणादुद्भवति, तेन तदवस्तुप्रतिलम्भकं व्यवहारविसंवादादप्रमाणमिति । यद्येवं योऽप्येवं धूमदर्शनोत्थधूमविकल्पो ये चान्ये गवादिस्वलक्षणदर्शनोत्था गवादिविकल्पाः तेऽपि व्यवहाराऽविसंवादिनो व्यावहारिकं प्रमाणास्पदत्वमनुविदधानाः प्रामाण्यमश्नुवीरन् ततश्च द्वयवादानुपपत्तिः; पारमार्थिकं हि प्रामाण्यम् एकस्यैव प्रत्यक्षस्य, व्यावहारिकं तु त्रयाणामिति कथं प्रमाणद्वयवाद इति ।

तत्र चोदयति नन्विति ॥१५७॥

स्मर्यमाणनियमं हि लिङ्गमनुमानस्य हेतुः, स्मृतेश्चाऽप्रामाण्यमविवादम्, अतस्तद्वदेव लिङ्गज्ञानमप्यप्रमाणमेव प्रमाणभूतस्याऽनुमानस्य करणं भविष्यतीति । परिहरति तत्रेति ॥१५८॥

स्मृतिर्हि गृहीतग्राहित्वमात्रेणाऽप्रमाणमित्युच्यते, न तु यथार्थतया; सा हि स्वातन्त्र्येणाऽर्थपरिच्छेदाऽसमर्थाऽपि यथार्थविषयपूर्वाऽनुभव£ प्रभवा तद्विषयभूतं यथावस्थितमेवार्थमवस्थापयतीति युक्तं तदुत्थस्याऽनुमानस्य यथार्थत्वं, सति यथार्थत्वे ऽनवगतविषयत्वात्प्रामाण्यमपि सिद्ध्यतीति । तव तु लिङ्गसामान्याऽवगतौ प्रमाणान्तरमपि नास्ति, यतस्तत्प्रभवत्वेनाऽधुनातनं लिङ्गज्ञानं तत्स्मृतित्वेन यथार्थं स्यादित्याह नन्विति ॥१५९॥

---

⊙ अत्र चोदयति नन्विति । यथा हि अप्रमाणमेव सम्बन्धस्मरणं प्रमाणकारणमिष्यते तथा लिङ्गज्ञानमपि भविष्यति ।

> परिहरति—तत्रेति । स्मृतिर्हि पूर्वज्ञानाद् भवन्ती तदुपस्थापनद्वारेणानुमायामुपयुज्यते । तच्च प्रमाणमेवेति तदनुसारी निर्णयो युक्तः ।

* तदवस्थानेति ३ पु० पा० । तदुपस्थानेति २ पु० पा० ।

← न चैष प्रकारो लिङ्गगतौ संभवतीत्याह—न तु लिङ्गगताविति । न हि अत्र प्रागपि लिङ्गावगमे प्रमाणं किञ्चिदुपपद्यते, यत् प्रमाणज्ञानेनोपस्थाप्यत इति । न च लिङ्गज्ञानमपि स्मृतिरेवेति वाच्यम् । पूर्वप्रमाणाभावादेवेत्याह तदभावादिति ।

£ यथार्थविषयकाऽनुभवेति २ पु० पा० ।

श्लो०वा०—£स्मार्तमेतदभेदेन विज्ञानमिति यो वदेत् ।
तस्य वन्ध्यासुते ऽप्यस्ति नूनं स्मरणशक्तता ॥१६०॥
*न चाऽसाधारणो ऽर्थात्मा सामान्यज्ञानकारणम् ।
यस्मान्नास्याऽविनाभावस्तेन दृष्टः कथं चन√ ॥१६१॥
∟स्याद्वा सम्बन्धदृष्ट्या ऽसौ सामान्यं कृतकत्ववत्§ ।
न ह्यसाधारणं वस्तु पूर्वत्रेह च विद्यते ॥१६२॥

न्या०र०—यद्युच्येत, धूमविकल्पो ऽपि प्रत्यक्षाऽवगतं स्वलक्षणमेव सामान्याकारेणाऽध्यवस्यंस्तदभिन्नविषयतया स्मृतिरेव, अत एवास्य व्यवहाराऽविसंवादित्वे ऽप्यप्रामाण्यम्, अनुमानं त्वनवगतमेवाऽध्यवस्यत् प्रमाणमिति प्रमाणद्वयवादो ऽपि युक्त इति; तदयुक्तम्, सामान्याभासो विकल्पः कथं स्वलक्षणविषयो ऽपि स्यात्, यत्त्वाहुः 'स्वप्रतिभासेन तत्त्वाध्यवसायेन प्रवृत्तेरिति, तदयुक्तम्, तदगृह्णतः कथं तदध्यवसायः; तद्यदि स्वलक्षणं न विकल्पेन गृह्येत कथं तदध्यवसीयेत, उपेत्यापि ब्रूमः, तद्गोचरत्वे ऽपि विकल्पस्य न स्मृतित्वं यद्यपि स्वलक्षणरूपमवगतं तथापि सामान्याकारो ऽनवगत एवावगम्यतइति कथं स्मृतित्वम्; न ह्यनवगतस्य स्मरणं सम्भवति, वन्ध्यासुतस्यापि प्रसङ्गादित्याह स्मार्त्तमिति ॥१६०॥

ननु यद्यपि सामान्यांशस्य प्रमाणान्तराऽवगतत्वादस्मर्यमाणस्य विकल्पेन चाऽप्रमाणभूतेन ग्रहणादप्रमाणस्य मृषात्वं तथापि स्वलक्षणस्य प्रत्यक्षेणावगतत्वात्परमार्थत्वाच्च तस्मिन्नंशे विकल्पो ऽपि स्मृतिरेव यथार्थश्चेति कथं तदुत्थितस्याऽनुमानस्याऽप्रामाण्यमत आह न चेति ॥१६१॥

स्यादेवं यदि स्वलक्षणं लिङ्गं स्यान्न त्वेवम्, अनुगमाऽभावादिति । संवन्धग्रहणाऽनुगमे वा सामान्यमेव स्यात्, कृतकत्ववदित्याह स्यादिति ॥१६२॥

---

£ ननु निर्विकल्पकगृहीतधूमादिस्वलक्षणपरिप्रापकतया लिङ्गज्ञानमपि स्मृतिरेव । अतोऽत्रापि निर्विकल्पकप्रमाणान्तरतो निर्णयो युक्त एव । अत आह स्मार्तमिति ।

* ननु अनुमानेन लिङ्गसामान्यज्ञाने अनवस्था भवति, यदि सामान्यात्मकमेव लिङ्गं तद्ग्रहणार्थ मिष्यते, तस्यानुमानवेद्यत्वात् । असाधारणएव अर्थात्मा सामान्यज्ञाने लिङ्गं भविष्यति, स च प्रत्यक्ष एवेति नानवस्था, अत आह—न चेति ।

√ कदा च नेति २ पु० पा० ।

∟ सम्बन्धदर्शनाभ्युपगमे वा कृतकत्वादिवत् सामान्यरूपतापत्तिरित्याह—स्याद्वेति । अत्र कारणमाह—नहीति ।

§ इदमर्धं नास्ति २ पु० ।

श्लो०वा०—*न चाप्यव्यपदेश[1]स्य विकल्परहितस्य च।
विना पूर्वानुसन्धानाल्लिङ्गत्वमुपपद्यते ॥१६३॥
£कल्प्यन्ते च विशेषा ये तेऽप्यलिङ्गमनन्वयात्।
एतस्मादेव हेतोः स्यात्तज्ज्ञानस्याप्यलिङ्गता ॥१६४॥
§सामान्यरूपतायां वा तथैवाऽनवधारणम्।
क्वचिद्वा दृष्टसम्बन्धे सर्वः प्रत्यायको भवेत् ॥१६५॥

न्या०र०—कारणमाह न हीति। मा भूत्पूर्वत्र, इह तु भवतु लिङ्गत्वमत आह न चापीति ॥१६३॥

न स पक्षेषु साध्यसंबन्धितया अननुसंधीयमानस्य इह च स एवायं धूम इत्येवमविकल्प्यमानस्याऽव्यपदेशस्य स्वलक्षणस्य लिङ्गत्वं भवतीति। किं च ये ऽपि तावत् पर्वतनितम्बवर्तित्वादयो धर्मा विकल्पाऽऽस्पदीभूतास्ते ऽप्यन्वयाभावान्न लिङ्गं, किमङ्ग पुनर्निर्विकल्पकमसाधारणमित्याह कल्प्यन्ते इति ॥१६४॥

अथ धूमज्ञानमेव लिङ्गं न धूमस्वलक्षणं वा सामान्यं वा, तन्न, तस्याप्यन्वयाभावादित्याह एतस्मादिति। ततो ऽवश्यं स्वलक्षणस्य तज्ज्ञानस्य वा लिङ्गत्वे सामान्यस्वरूपत्वं कल्पनीयमिति।

भवतु सामान्यरूपत्वमिति चेदत आह सामान्येति ॥१६५॥

सामान्यस्य ह्यनुमानादन्यतः प्रवृत्त्यसम्भवादनुमानस्य चाऽनवस्थापत्तेरेवाऽसम्भ-

---

१. 'श्यस्य—क,

* इतश्चासाधारणोऽर्थात्मा न लिङ्गमित्याह—न चेति। अयमभिप्रायः—मा नाम तिरश्चां शब्दोल्लेखो भवेत्, अर्थविकल्पस्तु तेषामपि पूर्वापरानुसन्धानात्मकोऽस्त्येव। अतो युक्तमेव तेषामनुमानेऽव्यपदेश्यस्यापि लिङ्गत्वम्। असाधारणस्तु पूर्वापरानुसन्धानात् विनाऽर्थविकल्परहितोऽपीति कथं लिङ्गम्। नहि सो ऽयमित्यनारूढो बुद्धौ धूमोऽग्नेर्लिङ्गं भवति। न चैवमसाधारणे सम्भवति, पूर्वापरानुसन्धानागोचरत्वात् तस्येति।

£ अन्वयाभावादेवासाधारणज्ञानमपि लिङ्गिसामान्यज्ञाने न लिङ्गमित्याह—एतस्मादेवेति।

§ यदि त्वन्वयसिद्ध्यर्थमसाधारणस्य सामान्यरूपतेष्यते, ततो लिङ्गसामान्यग्रहणइवानवस्थाप्रसङ्गात् तस्याप्यनवधारणमित्याह—सामान्येति। यदि तु कस्मिंश्चिदेवासाधारणे सामान्येन ज्ञातसम्बन्धेऽन्यदर्शिनापि सामान्यमनुमीयते। एवं तर्हि सर्व एव सर्वस्य प्रत्यायको भवेत्। अविशेषादित्याह—क्वचिद्वेति।

श्लो०वा०—*सम्बन्धाऽनुभवो ऽवश्यमेषितव्यश्च लिङ्गिनः ।
अनुमानप्रवृत्तेस्तु [1]प्रग् ज्ञानं तत्र नास्ति ते ॥१६६॥
न चापि वासनामात्राल्लिङ्ग♣ज्ञानस्य संभवः ।
लिङ्गिज्ञाने च तद्वत्स्यात् त्रिरूपाल्लिङ्गतो न तत् ॥१६७॥
£[2]तत्राऽभावस्य लिङ्गत्वं न चाऽसावानुमानिकः ।
प्रमाणान्तर[3]गम्यत्वात्तत्र दोषो न जायते ॥१६८॥

न्या०र०—वान्न कथं चिदप्यवधारणसिद्धिरिति । असाधारणत्वे ऽपि स्वलक्षणानामेकस्मिन्गृहीतसम्बन्धे ऽन्यो ऽगृहीतसम्बन्ध एवाग्निं प्रत्याययेत्, ततो ऽतिप्रसङ्गः स्यादित्याह क्व चिदिति ।

एवं तावत्पक्षधर्मत्व§ग्रहणे लिङ्गसामान्यस्याऽनुमानाऽपेक्षत्वादनवस्थितता दर्शिता, सैव सम्बन्धग्रहणसमये ऽपि दर्शयितव्या । न ह्यगृहीतयोर्लिङ्गलिङ्गिसामान्ययोः सम्बन्धग्रहणं सम्भवति, तयोश्च ग्राहकं भवन्मते ऽनुमानमेव, तदपि चाऽनुमानं संबन्धग्रहणसापेक्षमिति अपरापरापेक्षायामस्त्येवाऽनवस्थेत्याह सम्बन्धेति । यदि तु वासनामात्रादेव सम्बन्धसमये लिङ्गलिङ्गिनोरनुमानसमये च लिङ्गस्य ज्ञानं भवतीत्युच्यते ततो ऽनुमानसमये ऽपि लिङ्गिज्ञानं तत एव संभवन्न त्रिरूपलिङ्गजन्यं स्यात्तत्र सैवाऽनुमानस्य नित्योच्छित्तिरित्याह न चेति ॥१६७॥

नन्वियमनवस्था मेघाऽभावेन वृष्ट्यभावाऽनुमाने भवतो ऽपि तुल्या, लिङ्गभूतस्य मेघाऽभावस्याऽनुपलब्धिगम्यत्वात्, अनुपलब्धिरप्युपलब्ध्यभावरूपत्वात् अनुपलब्ध्यन्तरमपेक्षते तदपि तथेत्यत आह तत्रेति ॥१६८॥

एषा ऽप्यनवस्था शाक्यानामेवाऽनुपलब्धिलिङ्गाऽनुमेयमभावं वदताम्; अस्माकं

---

१. 'प्राङ्मानं'—क, २. 'यत्रा'—क, ३. 'वेद्यत्वात्'—ख,

* एवं तावन्नलिङ्गावधारणे प्रमाणमस्तीत्युक्तम् । इदानीमन्वयग्रहणकाले लिङ्गिज्ञानेऽपि न किञ्चित् प्रमाणमस्तीत्याह—सवन्धानुभव इति ।

♣ लिङ्गे इति २ पु० पा० ।

£ नन्वियमनवस्था मेघाभावेन वृष्ट्यभावानुमाने भवतोऽपि समानैव अभावस्यानुपलब्धिलिङ्गत्वात् । सजातीयलिङ्गान्तरापेक्षायामनवस्थापद्यते । अत आह—यत्रेति । यत्र हि वृष्ट्यभावे मेघाभावो लिङ्गं नासावनुमेयः, अभावाख्यप्रमाणान्तरगम्यत्वात् । अतो नात्र तुल्यजातीयापेक्षानिबन्धनोऽनवस्थादोषोजायत इति ।

§ प्रत्यक्षधर्मत्वेति २ पु० पा० ।

श्लो०वा०—*प्रत्यक्षाऽवगताल्लिङ्गाद्यस्य लिङ्गिगतिर्भवेत् ।
तस्य नातो ऽधिकं किं चित्प्रार्थनीयं प्रसज्यते ॥१६९॥
£यत्राप्यनुमिताल्लिङ्गाल्लिङ्गिनि[1] ग्रहणं भवेत्§ ।
तत्रापि मौलिकं लिङ्गं [2]प्रत्यक्षादेव गम्यते ॥१७०॥
√लिङ्गत्वं कृतकत्वादौ क्रियायाः कारकस्य वा ।
प्रत्यक्षत्वं च तस्येष्टमिति दूरं न गम्यते ॥१७१॥

न्या०र०—त्वनुपलब्धिः प्रमाणान्तरं, सा च सत्तामात्रेणेन्द्रियवद् भावमभावं गमयतीति न क चिद्दोष इति ।

एवं परपक्षे ऽनवस्थामुक्त्वा प्रत्यक्षसामान्यवादिनां तु नाऽसावस्तीत्याह प्रत्यक्षेति ॥१६९॥

यत्र तर्ह्यादित्यगत्या तत्कारणमनुमीयते तत्र लिङ्गस्याऽपि गतेरनुमेयत्वादनवस्था स्यादत आह यत्रेति ॥१७०॥

मूलाऽनुमाने यल्लिङ्गं देशान्तरप्राप्तिः तत्प्रत्यक्षसिद्धमिति नाऽनवस्थेति । यत्र तर्हि कृतकत्वादनित्यत्वमनुमीयते तत्र कृतकत्वस्य प्रत्यक्षसिद्ध्यभावादनुमानापेक्षाया-मनवस्था स्यादत आह लिङ्गत्वमिति ॥१७१॥

---

१. 'लिङ्गिनो'—ख, २. 'प्रत्यक्षाद्येन'—ग,

* प्रत्यक्षसामान्यवादिनां तु न नः काचिदनवस्थेत्याह—प्रत्यक्षावगतादिति । अतः प्रत्यक्षादित्यर्थः ।

£ अनुमितानुमाने तर्हि अनवस्था, अत आह—यत्रापीति । प्रत्यक्षा हि देशान्तर-प्राप्तिर्मौलिकं मूले भवं लिङ्गं, तेन गतिमनुमायादित्ये गतिसाधनेऽनुमीयमाने नानवस्थेत्यभिप्रायः ।

§ ग्रहणोद्भव इति २ पु० पा० ।

√ नन्वनित्यः शब्दः कृतकत्वात्, कृतकत्वं च तत्र दर्शनात् इत्येवं कर्मानन्तरभावितया कृतकत्वे साध्यमाने कर्मणो ऽपि हेत्वन्तरादनुमानेऽनवस्था भवेदत आह—लिङ्गत्व-मिति । "कृतकत्वानुमाने हि कर्मैके तत्र दर्शनात्" इति कारकव्यापारानन्तर-भावित्वं लिङ्गमुक्तम् । तत्र च कारकविशिष्टा क्रिया तद्विशिष्टं वा कारकमनन्तर-भावितां विशिषल्लिङ्गमापतति । उभयं च तत्प्रत्यक्षम् । क्रियायास्तावत् प्रत्यक्ष-त्वमनन्तरमेव साधितम् । कारकमपि तद्वत् प्रत्यक्षमेव । शक्तिस्तु परोक्षा । सा च न तावदिह लिङ्गम् । न चानुमेया । अतः क्रियाकारकयोरुभयोरपि प्रत्यक्षत्वा-दवूरगमनम् । अनुमेयकर्मवादिनामपि हि फलावध्यवस्थानात्नानवस्था, नितराम-स्माकमिति ।

श्लो०वा०—*एवं शब्दोपमानादौ सामान्याश्रयता यतः ।
तद्दौस्स्थित्येन दौस्स्थित्यं सर्वत्राऽतः प्रसज्यते ॥१७२॥
तस्मात् प्रत्यक्षपूर्वत्वं प्रमाणान्तर[1]इष्यते ।
प्रत्यक्षत्वं च सामान्ये नाऽन्यथा हि गतिर्भवेत् ॥१७३॥
£प्रत्यक्षाऽऽलम्बनत्वं च विशेषस्य कथं भवेत् ।
यदा वस्त्वन्तरा[2]ऽपेक्षः सामान्यांशः स कीर्त्यते ॥१७४॥
O रूपादयो हि सामान्यं सर्वे नीलाद्यपेक्षया ।

न्या०र०—कृतकत्वे हि क्रियानन्तर्यं तद्विशिष्टकारकानन्तर्यं वा लिङ्गं, तच्चोभयमपि प्रत्यक्षमेवेति । तदेवमनुमानस्याऽसति सामान्यस्य वस्तुप्रत्यक्षत्वे च दौस्स्थित्यमुक्तम्, एवं शब्दादीनामपि सामान्यविषयतया संबन्धग्रहणाय च तद्ग्रहणाऽपेक्षितया सामान्याश्रयत्वात्तदभावे तदप्रत्यक्षत्वे च दौस्स्थित्यं स्यादित्याह एवमिति ॥१७२॥

उपसंहरति तस्मादिति ॥१७३॥

कथं च विशेषस्यैव प्रत्यक्षत्वं, गवादिस्वलक्षणमपि हि अवयवित्वात् स्वाऽवयवाऽपेक्षया सामान्यमेवेत्याह प्रत्यक्षेति ॥१७४॥

यदि तु द्रव्यमपह्नुत्य रूपादीनामेव प्रत्यक्षत्वं वदेत् तदापि रूपं विशेषान्नीलपीतादीनपेक्ष्य सामान्यमेव,△ नीलमपि तापिच्छमधुकरादिनीलविशेषाऽपेक्षया सामान्यं,

---

१. 'दृष्यताम्'—ख, २. 'राक्षेपः'—ग,

* एवं तावदनुमानस्य असति सामान्यस्य वस्तुत्वे प्रत्यक्षत्वे च दौस्थित्यमुक्तम्, इदानीं सर्वमेव प्रमाणजातं सामान्यस्य दौस्थित्ये दुस्थितमापद्येत तेषामपि सामान्याश्रयत्वात् । न च तदप्रमाणं वक्ष्यमाणन्यायात् इत्यभिप्रायेणाह—एवमिति ।

£ एवं तावत् सामान्यस्य प्रत्यक्षत्वं वस्तुता चोपपादिता, इदानीं विशेषा एव प्रत्यक्षेण गृह्यन्ते इति ये वदन्ति, तान् प्रत्याह—प्रत्यक्षेति । विशेषो हि यदि तावदवयवी द्रव्यमभिमतः, स च अवयववस्त्वन्तरापेक्षः सामान्यांशो ऽस्माभिः कीर्त्यत इति कथं प्रत्यक्षः ।

O यदि तु अवयविरूपादय एव विशेषा इष्यन्ते, तदपि अयुक्तम् । तेऽपि हि स्वविशेषनीलाद्यपेक्षया सामान्यमेवेत्याह—रूपादयो हीति । यदि तु नीलादय एव विशेषा इति मतम् । तन्न । तेषामपि अवान्तरनीलाद्यपेक्षया सामान्यरूपत्वात् इत्याह—स्वविशेषानिति ।

△ नीलमेवेति २ पु० पा० ।

